# विषयानुक्रमणिका.



सूत्रसङ्ख्या.

सूत्रसङ्ख्या.

श्रीरस्तु

# तैत्तिरीयप्रातिशाख्यस्य भूमिका.



सुविदितमेव खल्विदं प्रायस्सर्वस्यापि यदखिलपुमर्थसार्थसाधनवेदनेदंपरो वेदः ऋग्यजुस्सामाथर्वात्मना चतुर्धा प्रविभक्तः प्रत्येकमप्युच्चावचशाखासमाहारात्मेति ॥ तत्र शाखाविशेषमधिकृत्य तद्गतशब्दस्वरसन्ध्यादीनामनुशासनाय प्रवृत्तं शास्त्रं प्रातिशाख्यमित्यभिधीयते । प्रातिशाख्यपदं चैवं व्युत्पादयन्ति शाब्दिकाः । यथा माधवीयायां धातुवृत्तौ भ्वाद्यन्तर्गते शाखृधातौ—"शाखायां शाखायां प्रतिशाखम् । प्रतिशाखं भवं प्रातिशाख्यम् । "अव्ययीभावाच्च" इति भवार्थे ञ्यः" इति ॥ स्पष्टं चेदं—'अव्ययीभावाच्च' इति सूत्रतत्त्वबोधिन्यादावपि ॥ यद्यपीदं प्रातिशाख्यं नाम शास्त्रं न ताद्रूप्येण वेदाङ्गविभागे वा विद्यास्थानविभागे वा समुल्लिख्यते—

शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषं तथा ।
छन्दश्चेति षडङ्गानि वेदस्याहुर्मनीषिणः ॥

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥

आयुर्वेदो धनुर्वेदो गान्धर्वं चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थं तद्विद्या ह्यष्टादश स्मृताः ॥

इत्यादौ । तथाऽपि व्याकरणशिक्षयोर्विषय एवास्यापि विषयो नेतर इति विषयविमर्शतोऽवगम्यते व्याकरणशिक्षाऽन्यतरात्मतया

वेदाङ्गमेवेदमिति ॥ तथा च शुक्लयजुःप्रातिशाख्ये "वृद्धं वृद्धिः" इति प्रथमाध्यायान्तिमसूत्रे—"वृद्धमिदं शास्त्रमन्यानि शास्त्राण्यपेक्ष्य । शिक्षाविहितं व्याकरणविहितं चास्मिन् शास्त्रे उभयं यतः प्रक्रियते अत एव हेतोश्शिष्याणामेतच्छास्त्रश्राविणां वृद्धिर्भवति" इत्युव्वटभाष्यम् ॥ वैदिकाभरणे च प्रथमाध्याये त्रयोविंशसूत्रे—

> शिक्षाव्याकरणानां यदयं विवरणात्मकः ।
> ग्रन्थस्ततोऽत्र नातीव शब्दसङ्कोच इष्यते ॥
> वर्णात्कार इतीदं च व्याख्यातव्यं तु वार्तिकम् ।
> शिक्षास्थाश्च ककारादिशब्दा इति तदाशयः ॥

इत्यभिहितम् ॥

परे पुनर्व्याकरण एव वेदमन्तर्भावयन्ति । प्रमाणयन्ति चात्र वैदिकाभरणगतमेवोपान्त्यसूत्रावतारिकास्थं—"शिक्षागणोपदिष्टं तु कार्यं नात्र सङ्गृहीतं व्याकरणप्रधानत्वात्प्रातिशाख्यस्य" इति वाक्यम् । [illegible]—"अस्य शास्त्रस्य मूलभूतं व्याकरणं पूर्वशास्त्रमित्युच्यते । तस्मिन् कल्पो न विधीयते । साक्षाच्छिक्षायां तु विधीयते । व्याकरणप्रधानं ह्येतच्छास्त्रम् । तस्माद्व्याकरणेभ्योऽन्ये शिक्षाकारा इहैक इति व्यपदिश्यन्ते" इति च वाक्यम् । त्रिभाष्यरत्नकारस्तु—प्रातिशाख्यं नाम शास्त्रमुपाङ्गेषु परिगणितमनुमेने ॥ उक्तं हि त्रिभाष्यरत्नस्योपसंहारे—वेदाङ्गान्युच्यन्ते—

> शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषं तथा ।
> छन्दसां लक्षणं चेति षडङ्गानि विदुर्बुधाः ॥

प्रतिपदं चानुपदं छन्दोभाषासमन्वितम् ।
मीमांसान्यायतर्काश्च उपाङ्गानि विदुर्बुधाः ॥ इति ॥

अत्र हि उपाङ्गपरिगणनपरे प्रमाणे—"छन्दोभाषा" इत्यनेन वेदलक्षणं प्रातिशाख्यापरपर्यायमभिसंहितम् । अत एव च "गुरुत्वं लघुता..............एतत्सर्वं तु विज्ञेयं छन्दोभाषामधीयता" इत्युपान्त्यसूत्रव्याख्याने छन्दोभाषापदं वेदलक्षणपरतया व्याचख्यौ त्रिभाष्यरत्नकारः ॥ यद्यपि—"शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षडङ्गानि । तथा प्रतिपदमनुपदं छन्दोभाषा धर्मो मीमांसा न्यायस्तर्क इत्युपाङ्गानि" इति शौनकीयचरणव्यूहद्वितीयकण्डिकावाक्यव्याख्यावसरे—"छन्दश्शास्त्रं पिङ्गलोक्तमष्टाध्यायात्मकम् । भाषाशब्देन भाष्यतेऽर्थः पर्यायशब्दैरिति निघण्टुरध्यायपञ्चकः । त्रयोदशाध्यायात्मकं निरुक्तम् । धर्मशास्त्रं मन्वाद्यनेकमहर्षिप्रणीतम् । मीमांसा जैमिनिमहर्षिकृतमध्यायद्वादशकम् । न्यायशब्देन कणादसूत्रम् । तर्कशब्देन गौतमसूत्रमिति षडुपाङ्गानि" इति महिदासकृते व्याख्याने "छन्दो भाषा" इति विभज्य छन्दश्शास्त्रपरं छन्दःपदं भाषापदं च निघण्टुपरमुपवर्णितमिति वेदलक्षणरूपस्य प्रातिशाख्यस्य नोपाङ्गेष्वन्तर्भावस्ततोऽवगम्यते । तथाऽपि महिदासकृतं व्याख्यानमिदं तत्कर्तुरेव प्रमादेन वा लेखकप्रमादेन वा कलुषमिति न तत्किञ्चिदर्थस्य साधनाय बाधनाय वा प्रभवति ॥ चरणव्यूहद्वितीयकण्डिकाव्याख्यानोपक्रम एव हि—"शिक्षादीनि षडङ्गानि भवन्ति । षडुपाङ्गान्यपि प्रतिपदादितर्कान्तानि भवन्ति" इति महिदासव्याख्यानमुपलभ्यते प्रतिपदमनुपदमित्येतयोरपि उपाङ्गेष्वन्तर्भावं विधाय उपाङ्गानां षट्त्वं प्रतिपादयमानम् । द्वितीयकण्डिकाव्याख्यानान्तिमवाक्येऽपि प्रागुपदर्शिते अङ्गानां षट्त्वं

निगमितं दृश्यते । प्रतिपदानुपदयोरुपाङ्गान्तर्भावे "छन्दो भाषा" इत्यस्य विभज्य व्याख्याने च उपाङ्गान्यष्टैव भविष्यन्ति । न तु षट् । एवं छन्दश्शास्त्रनिघण्टुनिरुक्तानां अङ्गेष्वन्तर्भूतानामुपाङ्गेषु पुनः परिगणनमपि न साम्प्रतम् । तस्मादुपक्रमोपसंहारयोर्महिदासेनैव व्याख्याने उपाङ्गानां सङ्कीर्तितं षट्त्वं यथोपपद्येत यथा चाऽङ्गोपाङ्गयोर्न साङ्कर्यं तथैवोपदर्शितं चरणव्यूहवाक्यं व्याख्येयम् । तथा च—"छन्दोभाषा" इत्येकं पदं वेदलक्षणपरम् । 'धर्ममीमांसा' इति चैकं पदम् । 'धर्मो मीमांसा' इति तु लेखकप्रमादः । अप्रमादत्वे वा मीमांस्यमीमांसयोरभेदविवक्षया "धर्मो मीमांसा" इत्येतदेव जैमिनीयमीमांसापरमित्येवं व्याख्यानं सर्वानवद्यम् । भवति चैवंव्याख्याने—

> प्रतिपदं चानुपदं छन्दोभाषासमन्वितम् ।
> मीमांसान्यायतर्कांश्च उपाङ्गानि विदुर्बुधाः ॥

इत्येतेन त्रिभाष्यरत्नधृतप्रमाणेनापि संवाद इत्यास्तामेतत् ॥

तदिदं प्रातिशाख्यमितरेषु वेदेषु साम्प्रतमेकैकमेवोपलभ्यते। यथा—ऋग्वेदप्रातिशाख्यं शौनकीयम् । सामवेदप्रातिशाख्यं पुष्पसूत्रम् । अथर्ववेदप्रातिशाख्यं शौनकीयमिति । यजुर्वेदे तु शुक्लयजुःप्रातिशाख्यं तैत्तिरीयप्रातिशाख्यमिति द्वे प्रातिशाख्ये उपलभामहे । यजुर्वेदे हि द्वेधा विभागो दृश्यते शुक्लकृष्णभेदात् । कृष्णयजुर्वेदस्तैत्तिरीयकमित्येतत्तु अनर्थान्तरम् । तथा च शुक्लयजुःप्रातिशाख्यपरिशिष्टव्याख्यायां प्रतिज्ञासूत्रपरिशिष्टव्याख्यानावसरे "तस्मिन् शुक्लं यजुराम्नाये" इति सूत्रे "यजुर्हि द्विविधं शुक्लं कृष्णं च । शुक्लं कृष्णमिति द्वेधा यजुस्तु समुदाहृतम । शुक्लं वाजसनं ज्ञेयं कृष्णं स्यात्तैत्तिरीयकम्" इति ॥ अत्र वक्तव्यविशेषमप्रसरान्तरे विचारयिष्यामः ॥

तदेतस्मिन् कृष्णयजुःप्रातिशाख्यापराभिधाने तैत्तिरीयप्रातिशाख्ये प्रातिशाख्यान्तरेभ्यस्सन्ति कतिपये विशेषाः । यथा— इतरेषु हि प्रातिशाख्येषु तत्तत्कर्तारः शौनकः पुष्पः कात्यायन इति नामतो निर्दिश्यन्ते । अस्मिंस्तु प्रातिशाख्ये नास्य कर्ता क्वचिदपि नामतस्सङ्कीर्त्यते । तत् कस्य हेतोरिति न वयमवधारयितुं साम्प्रतं प्रभवामः । एवं—यथाऽस्मिन् प्रातिशाख्ये बहूनामाचार्याणां नामानि गृह्यन्ते न तथेतरेषु प्रातिशाख्येषु । तथा चात्र प्रातिशाख्ये गृहीतानि नामानि यथा—

| | | | | |
|---|---|---|---|---|
| अग्निवेश्यः | ... 9-4. | | बाडभीकारः | . 14-13. |
| अग्निवेश्यायनः | ... 14-32. | | भरद्वाजः | .. 5-40. |
| आत्रेयः | 5-31, 17-8 | | भारद्वाजः | ... 17-3. |
| उख्यः | 8-22,10-20,26-24. | | माचाकीयः (मैत्रिकायः) | 10-22. |
| उत्तमोत्तरीयः | ... 8-20. | | वात्सप्रः | ... 10-23. |
| काण्डमायनः | .. 9-1,15-7. | | वाल्मीकिः | ... 5-36. |
| कौण्डिन्यः | .. 5-38. | | शाङ्खायनः | ... 15-7. |
| गौतमः | .. 5-38. | | शैत्यायनः | ... 5-40. |
| पौष्करसादिः | .. 5-37. | | साङ्कृत्यः | ... 8-21. |
| प्लाक्षायणः | .. 9-6. | | स्थविरकौण्डिन्यः | 5-40. |
| प्लाक्षिः | .. 5-38. | | हारीतः | ... 14-18. |

एवं—यथाऽत्र वेदभागा विशेषाभिधाभिर्निर्दिश्यन्ते न तथा प्रातिशाख्यान्तरे । यथाऽत्र प्रातिशाख्ये—

अग्निः (3-9) ४ काण्डः ।

इष्टिः (4-52) २काण्डे २-३-४. प्रश्नत्रयम् ।

उख्यम् (9-20) ५ काण्डे १-२. प्रश्नद्वयम् ।

ग्रहः (9-20) १ काण्डे ४. प्रश्नः (अन्तिमानुवाकचतुष्कवर्जम्.)

पृषयः (9-20) (अनेकत्र स्थिताः मन्त्रानुवाकाः.)

महापृश्नः (11-3) (षडनुवाका अनेकत्र स्थिताः.)

याज्या (3-9)आदितस्त्रयोविंशतिप्रश्नेषु पाड्विंशे प्रश्ने च अन्तिमानुवाकाः२४

रुद्रः (9-3) चतुर्थकाण्डे पञ्चमप्रश्नः.

वाजपेयम् (11-3) १-७-७. प्रभृति ६ अनुवाकाः.

विकर्षः (11-3) ४-६-१. प्रभृति ९ अनुवाकाः.

विहव्यम् (11-3) ४-७-१२ प्रभृति ३ अनुवाकाः.

हिरण्यवर्णीयः (9-20) ५-६-१.

अत्रान्तिमं विकर्षादित्रयं मुक्त्वा अग्न्याद्यः काण्डानुक्रमण्यां निर्दिष्टाः.

एवं प्रातिशाख्यान्तराणां हि संहितापदक्रमपाठास्त्रयो विषयाः । अस्य तु संहितापदक्रमजटापाठाश्चत्वारो विषयाः इत्यस्त्ययमपरो विशेषः । कथमन्यथा स्वरघोषवत्परविसर्जनीयस्य रेफविधिपरं "हास्भार्" (८-८) इति सूत्रे "अविभः । अकः । पुनः । पितः" इत्येतेषां पदानामुपादानमुपपद्यताम् । न खलु संहितादिषु त्रिषु 'अविभः' इत्यादीनि तत्तन्निमित्तयुक्तानि कार्यभाञ्जि पदान्युपलभ्यन्ते । उपलभ्यन्ते तु केवलं "अविभस्तं तमविभरविभस्तम्" इत्यादिजटायाम् । तत्सिद्धं संहितापदक्रमजटापाठाश्चत्वारोपि तैत्तिरीयप्रातिशाख्यस्य लक्ष्यभूता इति ॥

वैदिकाभरणकारस्तु प्रातिशाख्यस्यास्य जटाविषयकतामसहमानः—'अविभः' इत्यादिग्रहणस्य यद्वृत्वादिमनान्तरपरतयैवोपपत्तिमाह । यथा—"अविभः—'तां संवत्सरमविभः' 'इतिपरोऽपि' इति परमतं पश्यति । तस्मिन् पक्षे इदमुदाहरणम्—'ताम् । संवत्सरमिति सं—वत्सरम् । अविभरिति' । न च परमतानुसारेण

कार्यविधिर्नोपपद्यते 'अनुनासिकेऽनुनासिकम्' इत्यादिषु दर्शनात्। एवं 'पितः' इत्यादिष्वपि द्रष्टव्यम् । तथा च—'अविभः' पितः इत्यादीनां रेफादेशस्यान्यथाऽनुपपन्नत्वाच्चास्य शास्त्रस्य जटायां तात्पर्यं शक्यते कल्पयितुम् । अजोगः—'अजोगरित्यजोगः' । 'ओषधीः । अजोगरिति' स एष परमतसिद्धः इतिकरणः पदाध्याये क्रमाध्याये च परिग्रहार्थः" इति ॥

"इतिपरोऽपि" (८-१२) इति सूत्रं तु मतान्तरानुवादमात्रपरं व्याचख्यौ—"योऽयं रेफी कथितः 'हरिभाः' इत्यादिपदेषु विसर्जनीयः स खलु पदाध्याये इतिपरश्च भवति केवलश्च । तत्र यस्य संहितायां निमित्तसंयोगाद्रेफत्वमभिव्यज्यते स पदाध्याये केवलः प्रयुज्यते । अन्यत्र त्वितिपरः । यथा—'दंहस्व मा ह्वाः' । 'अग्ने स्वे योनावभारुखा' इति केवलः । 'तां । संवत्सरमिति सं-वत्सरं । अविभरिति' ॥ 'आत् । इत् । प्रसिष्टः । ओषधीः । अजीगरिति' एवमादिरितिपरः । सोऽयं बह्वृचानां पक्षः" इति । निराचकार च त्रिभाष्यरत्नकारकृतमेतत्सूत्रस्यापि जटापरतया व्याख्यानम् । यथा—'अन्ये तु व्याचक्षते योऽयमावृत्परो विसर्जनीयः स इतिशब्दे परतो रेफं प्रपद्यते । अस्य 'अश्रुवादिति श्रुतरावृध्स्वाहा' इत्यत्र 'इति श्रुतः' इत्यस्य क्रमस्य जटोदाहरणमिति 'इति श्रुतश्श्रुतरितीति श्रुतः' इति । तदयुक्तम्" अतो नेदं सूत्रं रेफादेशस्य विधायकं किन्त्वितिकरणस्येति न जटारूपं दूषयितव्यमिति ॥

अत्रेदं चिन्त्यते—वैदिकाभरणव्याख्यानेऽस्मिन् अद्य यावत्सकलशिष्टसम्प्रदायसिद्धजटापाठविरोधस्तावत् स्फुट एव । 'अविभस्तं तमविभरविभस्तम्' 'इति श्रुतश्श्रुतरितीति श्रुतः' इत्यादिरेव हि जटारूपं पठ्यते सर्वत्र साम्प्रदायिकैः । एवं विसर्जनी-

योद्देश्यकरेफादेशप्रकरणमध्ये पठितस्य 'इतिपरोपि' (८-१२) इति सूत्रस्य इतिकरणविधिपरत्वे प्रकरणविरोधः, "अनभिव्यक्तरेफकसंहिताकः" इत्यस्य विसर्जनीयरूपोद्देश्यविशेषणस्य पूर्वत्र वा उत्तरत्र वाऽप्रकृतस्याध्याहारप्रसङ्गः, "आवृत्परः" (८-११) इति पूर्वसूत्रस्य रेफविधिपरतया स्वेनापि स्वीकृतस्य समनन्तरे "इतिपरोपि" (८-१२) इति सूत्रेऽस्मिन् तत्सूत्रसारूप्यादिभिः तत्सूत्रसमानविधेयकतायास्स्वरसतः प्रतीयमानाया भङ्गप्रसङ्गश्चेति ॥

यत्तूक्तं—परनिमित्तान्तरवति विध्यन्तरे विध्यन्तरोक्तपरनिमित्तसम्बन्धस्य कार्यभाजस्सम्बन्धायोगात् । तथाऽभ्युपगमे "ओकारमस्सर्वोऽकारपरः । घोषवत्परश्च" (९-७,८) इत्यत्रापि अकारपरतया क्वचिद्दृष्टस्यैव अःकारस्यान्यत्र घोषवत्परत्वे ओभावस्स्यात् इति । तन्न युक्तम्—योग्यतातात्पर्यविशेषादिभिः समुच्चायकानां क्वचिदेकाकारमात्रसमुच्चयमात्रपरतायाः क्वचिदाकारद्वयादिसमुच्चयपरतायाश्च तत्रतत्र व्यवस्थिततया "इतिपरोपि" इत्यत्र आवृत्परत्वविसर्जनीयत्वद्वयस्य अपिशब्देन समुच्चयाभिप्रायाश्रयणमात्रेणान्यत्रापि आकारद्वयविशिष्टस्यैव समुच्चयापादनायोगात् । तस्मात् क्वचित् निमित्तसमुच्चयपरत्वाश्रयणमात्रेण सर्वत्रापि तत्समुच्चयापादनमयुक्तमेव । किञ्च—'इतिपरोपि' इति सूत्रे विसर्जनीयस्य विशेष्यभूतस्य अपिशब्देन नान्यादेशः । तस्य "अथ विसर्जनीय" (८-१) इत्यधिकारसूत्रादेव लाभात् । ततश्च अपिशब्दसमुच्चेयगवेषणायां "आवृत्परः" (८-११) इत्यस्मिन्नव्यवहितपूर्वसूत्रे आवृत्परत्वमेकमेव प्रकृतमिति तस्यैव निमित्तभूतस्यान्वादेशो नान्यस्य समुच्चेयस्य प्रकृतस्याभावादसम्भवाच्च । "घोषवत्परश्च" (९-८) इत्यत्र तु "ओकारमस्सर्वः" (९-७) इति पूर्वसूत्रे निमित्तातिरिक्तस्यापि प्रकृतत्वात् तावत

एवान्यादेशो नाधिकस्य निमित्तभूतस्याकारपरत्वस्यारीति स्फुटे महत्तरे वैषम्ये 'इतिपरेऽपि' (८-१२) इति सूत्रे निमित्तसमुच्चयस्वीकारमात्रेणान्यत्रापि तदापादनमसमञ्जसमेवेति सुधियो विभावयन्तु ॥

एवं एकयोगनिर्दिष्टेषु पदेषु केषांचित्पदानां स्वमतानुरोधेन कार्यभाक्त्वं केषांचित्तु परमतानुरोधेन कार्यभाक्त्वमिति वैरूप्यमपि प्रसज्येत, यदि 'अविभः' (८-८) इत्यादिपदानां परमताभिप्रायकत्वं स्वीक्रियेत । यद्यप्यस्मिन्नेव 'स्तनुतः' (८-८) इति पदस्य शाखान्तरपरतयाऽभिभाष्यरत्न एवोक्ततया इतरपदानां स्वशाखान्तर्गततया च शाखाभेदकृतं वैरूप्यमस्त्येव । तथाऽपीदं वैरूप्यं वैदिकाभरणपक्षेऽपि समानम् । प्रकृतसूत्रे 'स्तनुतः' इत्यस्य त्रयोदशषोडशाध्यायगतसूत्रयोः 'जोगिवा' इत्यादेश्शाखान्तरस्थतायाः वैदिकाभरणेऽप्युक्तत्वात् । अधिकं तु प्रकृते मतभेदकृतं वैदिकाभरणपक्षे वैरूप्यमिति । वस्तुतस्तु—नात्र शाखाभेदकृतं वैरूप्यं शाखान्तरसाधारण्येनैव लक्षणस्य चिकीर्षितत्वादस्मिन्प्रातिशाख्ये । यथा हि एकयोगनिर्दिष्टेषु पदेषु किञ्चित्संहितागतमेव तत्तत्कार्यभाक् । किञ्चित्तु पदाम्नायगतमेव । किञ्चित्तु क्रमाम्नायगतमेव । अथापि न वैरूप्यं मन्यते संहितापदक्रमाम्नायानां त्रयाणामपि लक्ष्यतया शास्त्रेऽत्र परिगृहीतत्वादिति ॥

अथैवमपि प्रातिशाख्यस्यास्य जटाविषयकत्वं न युक्तम् । तथाहि—अस्ति हि "राये स इन्द्रः पूर्वश्चाकारपरे" (११-९) इति सूत्रं "चकाराकृष्टे अस्मान्ग्रहणे अकारपरे वर्तमान अकारो राये, सः इन्द्रः एवम्पूर्वो न लुप्यते" इत्यर्थकम् । रायेपूर्वः अस्मानित्यकारः द्विविधो हि सम्भाव्यते अकारपरः जटायां—"राये अस्मानस्माद्राये राये अस्मान्" इति । तद्भिन्नश्च संहितायां

"राये अस्मान् विश्वानि" इत्युभयत्रापि "धातारातिः" (११-३) इत्यादिसूत्रेणैव अकारलोपविरहे सिद्धे पुनरारभ्यमाणोऽयं विधिः नियमार्थस्स्यात् रायेपूर्वः अस्मानित्यकारः अकारपरं एव न लुप्यत इति । तथा च संहितायां अकारलोपप्रसङ्गः प्रातिशाख्यस्य जटाविषयकत्वे । प्रातिशाख्यस्य जटाविषयकत्वानभ्युपगमे च नायं दोषः । 'धातारातिः' इत्यादिशास्त्राविषयं शाखान्तरगतं "राये अस्मान्" इति वाक्यमधिकृत्यैव 'राये' इति सूत्रस्यास्य प्रवृत्त्यङ्गीकारेणाप्राप्तप्रापणार्थत्वेन नियमार्थत्वाभावात् । स्पष्टं चेदं रायेसूत्रवैदिकाभरणे इति चेन्न—प्रातिशाख्यस्यास्य जटाविषयकत्वमङ्गीकुर्वद्भिरपि 'राये' इति सूत्रस्य राये इत्यंशे शाखान्तरविषयकतयाऽप्राप्तप्रापकत्वाङ्गीकारे बाधकाभावात् । 'राये अस्मान्' इत्यत्र जटायां अकारलोपविरहस्तु तत्रत्यसंहितायामकारलोपविरहप्रापकानुशासनेनैव भविष्यति । यथा हि, रायेपूर्वं 'अस्मानिति ग्रहणे सम्भवाभावादकारपर इत्युपपन्धासम्बन्धमनङ्गीकुर्वता वैदिकाभरणकृता शाखान्तरपरत्वं राये इत्यस्य स्वीक्रियते, तथा त्रिभाष्यरत्नकृताऽपि शाखान्तरपरत्वं तस्य स्वीक्रियते प्रातिशाख्यस्य जटाविषयत्वमङ्गीकुर्वताऽपीति नात्र जटा विषयः शास्त्रान्तरनिर्द्धारणात् । यथा—वैदिकाभरणमते ग्वशाखास्थं 'राये अस्मान्' इति संहितावाक्यं शाखान्तरसिद्धकार्यकत्वान्नात्र विषय इति ॥

अथयमपि प्रातिशाख्यस्यास्यान्ते 'पदक्रमविशेषज्ञः' (२४-६) इति संहितापदक्रमरूपस्य त्रिविधस्यैव समाम्नायस्य विषयत्वावगमात् नास्य शास्त्रस्य जटाविषयकत्वं युक्तम् । स्पष्टं चेदं रायेसूत्रवैदिकाभरणे इति चेन्न—'पदक्रमविशेषज्ञः' इति शास्त्रान्त्यसूत्रस्य फलमात्रप्रदर्शनपरतया विषयनियमनपरत्वाभावात् । अन्यथा

तत्रानुपात्तत्वमात्रेण जटाविषयकत्वानङ्गीकारे संहिताया अपि तत्रानुपादानेन संहिताविषयकत्वमपि विलीयेत । वस्तुतस्तु—'पदक्रमविशेषज्ञः' इत्यत्र पदं च क्रमश्चेति न द्वन्द्वः किन्तु पदानां क्रमः इति तत्पुरुष एव 'वर्णक्रमविचक्षणः' इत्युत्तरानुरूप्यात् । अत एव "पदानां क्रमस्तस्य विशेषः तं जानातीति पदक्रमविशेषज्ञः । वर्णानां क्रमः तस्मिन् विचक्षणः निपुणः ।" इति त्रिभाष्यरत्नकृता व्याख्यातम् । तथा च संहिताया इव पदक्रमयोरपीहानुपादानात् नेदमन्तिमसूत्रं शास्त्रीयविषयनियमनपरं वक्तुं शक्यमिति ध्येयम् ॥ तस्मात् प्रातिशाख्यस्यास्य जटाविषयकत्वे नैव किञ्चिद्बाधकम् । न केवलं बाधकाभावमात्रमेवात्र । अपितु—"प्रातिशाख्यादिशास्त्रज्ञः सर्वशिक्षाविशारदः । बुद्धिशक्तिसमेतो यस्स जटां वक्तुमर्हति ।" इति शिक्षावचनमत्र परमं साधकमप्यस्तीत्यवधेयम् । अत्र हि प्रातिशाख्यज्ञानस्य जटावचने हेतुत्वमवगम्यते 'धनी सुखी' इत्यादिवत् । तच्च हेतुत्वं प्रातिशाख्यस्य जटाविषयकत्वादेवोपपद्यते ।

ननु क्रमो नाम जटायाः प्रकृतिः—

संहिता प्रकृतिः प्रोक्ता पदस्यैतत्क्रमस्य तु ।
जटायाः प्रकृतिस्त्वेष एवं नित्यं निबोधत ॥

इति शिक्षावचनात् । क्रमस्तु तज्जटाया आद्यन्तयोर्वर्तते तत्र जटायादशास्त्राविषयकत्वेऽपि तत्प्रकृतिभूतस्य क्रमस्य शास्त्रविषयत्वात् जटायामपि क्रमांशे प्रातिशाख्यमुपयुज्यते इत्येतावन्मात्राभिप्रायेणैव तत्र प्रातिशाख्यपदोपादानम् । जटायामनाम्नातांशेऽपि प्रातिशाख्यस्योपयोगस्तत्राभिसंहित इति चेन्मैवं एवं सतीदृशस्य परम्परया जटायां प्रातिशाख्योपयोगस्य जटायाः क्रमप्रकृतिकत्वपरवचनबलादेव सिद्धस्य पुनरिह सङ्की-

तेनवैफल्यापत्तेः । 'प्रातिशाख्यादिशास्त्रज्ञः' इत्याद्युपात्तानां मध्ये केषांचित् शिक्षाव्याकरणादीनां जटायां साक्षादुपयोगः प्रातिशाख्यस्य तु परम्परयेति वैरूप्यापत्तेश्चेति । तस्मात् शिक्षावचनस्यास्य प्रातिशाख्यस्यास्य जटाविषयकत्वस्वीकार एव स्वारसिकी सङ्गतिः । किञ्च—प्रातिशाख्यस्य जटाविषयकत्वानङ्गीकारे जटायां सन्ध्यादिकार्यप्राप्तिः कथम् । न च शिक्षाव्याकरणाभ्यामेव तत्र तत्प्राप्तिरिति वाच्यं तथा सति व्याकरणदृष्टसन्धिकार्यविकल्पादेरपि 'यरोऽनुनासिके' "वा पदान्तस्य" इत्यादेः तत्र प्रवृत्त्यापत्तेः । ननु—"यानि तु वैकल्पिकानि सन्धिकार्याणि यथा 'यरोऽनुनासिकेऽनुनासिको वा'। 'वा पदान्तस्य' इत्यादीनि तत्तत्र यतरद्स्मच्छाखायां दृष्टं ततरदेव जटायामुपादीयते" इति वैदिकाभरण एवोक्तमिति चेत्—सत्यमुक्तं. परन्तु तथा नियमकल्पनाश्रयणे न किञ्चिदपि प्रमाणमुक्तम् । प्रातिशाख्यस्य संहितापदक्रममात्रविषयकत्वे हि वैकल्पिककार्यप्रसङ्गः तद्दृष्टसन्धिकार्याण्येव जटायां भवन्ति नेतरशास्त्रदृष्टानीति विना प्रमाणं कल्पयितुं शक्यमिति ॥

यद्यपि—"उत्पूर्वस्सकारो व्यञ्जनपरः" (५-१४) इति सूत्रस्य व्यञ्जनपरस्सकारः उत्पूर्वः लुप्यते इत्यर्थकस्य जटायामपि प्रवृत्त्यापत्त्या "उदायुषा स्वायुषा" इत्यत्र "स्वायुषोदुदायुषा स्वायुषोत्" इति जटाऽऽपद्येत । पठ्यते तु सांप्रदायिकैः 'स्वायुषोदुत्स्वायुषा स्वायुषोत्' इत्येव । तथाऽपि—'वर्तमानस्य उत्पूर्वस्थस्तयोरित्यनोन्परे" इति व्यासशिक्षायां उत्पूर्वयोः स्थस्तशब्दयोर्वर्तमानस्यैव सकारस्य लोपविधानात् प्रातिशाख्योक्तस्योदयस्य ओकाराद्यवर्णपरस्थस्तशब्दगतसकाररूपतया सङ्कोचाभ्युपगमादनुपपत्तिः । प्रातिशाख्यस्यास्य शिक्षैव एकवा-

कथना च वैदिकाभरणकृताऽपि स्वीकृतैव एकोनविंशाध्याय-तृतीयसूत्रादौ । एतेन—"शुन उत्सादि" (तै. ब्रा. ३-७-९.) इत्यत्र ब्राह्मणवाक्ये सकारलोपापादनं प्रातिशाख्यस्य संहितामात्रविषयकत्वेन समाधानं च वैदिकाभरणकृतः प्रत्युक्तम् । शिक्षावाक्यैकवाक्यतया पर्यवसिते सूत्रार्थे तदाशङ्काया एवानवतारात् ॥

किं बहुना—शिक्षायास्तावज्जटाऽपि विषय इति सर्वसम्मतम् । स्पष्टं चेदं वैदिकाभरण एव—११-९ सूत्रे । तथा च—"द्वारेष्वग्निभर्वाद्यन्तस्सावितस्तकः" इत्यादिव्यासशिक्षावचनबलात् "अविभस्तं" इत्यस्य जटायां "अविभस्तं तमविभरविभस्तम्" इति रेफादेशो भवत्येवेत्येष्टव्यम् । एवं "आवृत्परोऽयमित्यूर्ध्वश्चान्यातुशेऽन्तरेव हि" इति व्यासशिक्षावचनबलात् "इति श्रुतः" इत्यस्य जटायां—"इति श्रुतश्श्रुतरितीति श्रुतः" इति रेफादेशोऽवश्यंभावी । तस्मात् तत्रतत्र जटायां रेफादेशविरहाभिधानं तदभिमानेन जटायाः प्रातिशाख्याविषयत्वाभिधानं च वैदिकाभरणकर्तुरनादेयमेवेत्यास्तामेतत् ॥

तदिदं तैत्तिरीयप्रातिशाख्यं प्रपाठकापरपर्यायप्रश्नद्वयात्मना विभक्तमुपलभ्यते । तत्रैकैकोपि प्रश्नः द्वादशाध्यायीरूपः । तथा आदितः चतुर्विंशत्यध्यायात्मनाऽपि विभक्तं दृश्यते । तत्र प्रश्नद्वयात्मना विभागे व्याख्यातृवचनादिकं न किमपि प्रमाणमुपलभ्यते । प्रश्नद्वयविभागौपयिकः विषयविभागोपि नात्र दृश्यते परस्परविविक्तः ॥

प्रातिशाख्यस्य चास्य सामान्यतो विषयस्त्रेधा विभक्तः यथा—साधारणविधिः संहिताधिकारविधिः उच्चारणकल्पश्चेति । तत्राद्यः संहितापदक्रमपाठसाधारणविधियोगात् शास्त्रेऽत्र सर्वत्रोपयोगिवर्णसंज्ञादिविधियोगाच्च साधारणविधिरित्युच्यते । स च

प्रथमाध्यायादिचतुरध्यायीरूपः ॥ द्वितीयः पदद्वयसन्धानरूपसंहितामधिकृत्य प्रवर्तमानतया संहिताधिकारविधिरित्युच्यते । स च पञ्चमाध्यायादिद्वादशाध्यायीरूपः ॥ तृतीयस्तु उच्चारणोपयोगितीव्रतरप्रयत्नादिविधिरूपतयोच्चारणकल्प इत्याख्यायते । स च सप्तदशाध्यायादिरष्टाध्यायीरूपः ॥

विशिष्य तु विषयविभागोऽत्र यथा—

प्रथमाध्याये—शास्त्रेऽस्मिन् याभिस्संज्ञाभिः वर्णाः वर्णसमुदाया वा व्यवह्रियन्ते तथाविधाः समानाक्षरसवर्णाद्याः उपसर्गावग्रहाद्याश्च संज्ञाः, एतच्छास्त्रीयविध्युपयोगिन्यः परिभाषाश्च ॥

द्वितीये—वर्णानां स्थानप्रयत्नौ ॥

तृतीये—केषांचिद्दीर्घाणां पदकाले ह्रस्वविधानम् ॥

चतुर्थे—प्रगृह्यसंज्ञितवर्णपरिगणनम् ॥

पञ्चमे—संहिताकाले भवतां वर्णागमानां विधिः ॥

षष्ठे—षत्वविधिः, सत्वविधिश्च ॥

सप्तमे—णत्वविधिः, तयोः ढठभावश्च ॥

अष्टमे—वर्गप्रथमस्य वर्गीयोत्तमविधिः, विसर्जनीयादेशरेफविधिश्च ॥

नवमे—विसर्जनीयादेशस्य लोपप्लुत्यादिविषयः, ए, ओ, ऐ, औ, अ, इ, न इत्येतद्वर्णादेशका विधयश्च ॥

दशमे—सवर्णदीर्घस्य एकादेशः, यलोपः, प्लुतप्रगृह्यादौ सन्धिनिषेधश्च ॥

एकादशे—अकारस्य लोपालोपौ ॥

द्वादशे—"अथाभिनिहितः" (११-१) इत्यादिसूत्रारम्भादेतेऽकारलोपविधिः, पूर्वादपरस्य स्वरितादिविधिश्च ॥

त्रयोदशे—नकारलोपः, समानपदीयनकारस्य णत्वं, ञत्वं च ॥

चतुर्दशे —द्वित्वं, वर्गीयद्वितीयचतुर्थयोः पूर्ववर्णागमः, प्रथमद्वितीयागमः, उदात्तपरानुदात्तस्य स्वरितत्वं च ॥

पञ्चदशे—अनुनासिकानुस्वारयोर्विधी ॥

षोडशे—पदमध्ये अनुस्वारागमः ॥

सप्तदशे—वर्णविशेषोच्चारणे तीव्रतरत्वादिप्रयत्नविशेषविषयः ॥

अष्टादशे—प्रणवे स्वरविशेषविधिः ॥

एकोनविंशे—अनुदात्तविशेषस्य विक्रमसंज्ञा, स्वरितपरस्वरिते कम्पविधिश्च॥

विंशे—क्षैप्रादयस्स्वरितविशेषाः, तेषां प्रयत्नविशेषाश्च ॥

एकविंशे—व्यञ्जनस्य पूर्वस्वराङ्गत्वपरस्वराङ्गत्वाभ्यां स्वरभेदः, प्रचयविधिः, नासिक्यागमविधिः, स्वरभक्तिविधिश्च ॥

द्वाविंशे—स्वरविशेषोच्चारणसाधनीभूताः प्रयत्नविशेषाः, एतच्छास्त्रे उपात्तानां वर्ण, कार, च, अपि, तु, अथ, एव, हि, न इत्येतेषां शब्दानामर्थनिर्णयः, ऋग्विरामादीनां मात्राकालनियमः, गुरुलघुसंज्ञाविधिश्च ॥

त्रयोविंशे—वर्णवाक्योत्पत्तिहेतवोऽनुप्रदानादयः, उपांश्वादीनि शब्दप्रयोगतारतम्यस्थानानि, कुष्ठादिस्वरविशेषाश्च ॥

चतुर्विंशे—पदसंहितादिसंहिताचतुष्टयनिरूपणम्, गुरुत्वादिज्ञानस्यावश्यकता, एतच्छास्त्रज्ञानप्रशंसा च ॥

अस्य च तैत्तिरीयप्रातिशाख्यस्य बहूनि व्याख्यानान्यासन्निति त्रिभाष्यरत्ननामकाद्व्याख्यानादवगम्यते । साम्प्रतं तु व्याख्याने द्वे केवलमुपलभ्येते । तत्राद्यं त्रिभाष्यरत्नमिति । द्वितीयं वैदिकाभरणमिति ॥ तत्राद्यं त्रयाणां भाष्याणां प्राचीनानां रत्नं तत्प्रकाशकतया त्रिभाष्यरत्नमिति संज्ञायते । तेष्वेकं भाष्यं वररु-

चिकृतम् । द्वितीयं माहिषेयकृतम् । तृतीयमात्रेयकृतम् । तथा चोक्तमुपक्रमे त्रिभाष्य रत्नस्य—

व्याख्यानं प्रातिशाख्यस्य वीक्ष्य वाररुचादिकम् ।
कृतं त्रिभाष्यरत्नं यद्भासते भूसुरप्रियम् ॥ इति ।

तत्र वररुचिः—१-१८. २-१४, १९. ४-४०. ८-१९. १८-७. २१-१६ मंत्रेषु
माहिषेयस्तु—४-४०. ८-१९,२०,२२. १४-२८. १८-७. सूत्रेषु
आत्रेयस्तु—५-१ सूत्रे त्रिभाष्यरत्ने समुल्लिख्यते । १९-४. २३-२
सूत्रयोस्तु कौहलेयवाक्यमप्युदाहृते स्म ॥

त्रिभाष्यरत्नकारश्चायं नाम्ना सोमयार्य इति राजकीयकोशागारगतात् (६०७) संख्याङ्कितात् तालपत्रमयत्रिभाष्यरत्नकोशादेकस्मादवगम्यते । तत्र हि कोशे इदं पद्यमन्ते दृश्यते—

त्रिलोचनध्याननिमग्नकौमुदीविनिद्रचेतःकुमुदः कलानिधिः ।
स सोमयार्यो विततान सम्मतं विपश्चितां भाष्यमिदं सुबोधकम् ॥ इति ।

सोऽयं त्रिभाष्यरत्नकारः कस्मिन् देशे कदा समुदभूदिति तु नावधार्यते ।

एतदुदाहृता ग्रन्थाः ग्रन्थकाराश्चैत एव—

1. अमरकोशः (१-१)
2. आग्नेयपुराणम्. २४-६.
3. आत्रेयः.
4. कालनिर्णय * (शिक्षा) १८-१.
5. कौहलेयः.
6. पाणिनिसूत्रम्. १४-८. १५-१३. १८-१.
7. महाभारतम्. १४-६.

* कालनिर्णयशिक्षाया अन्ते—"इति श्री अनन्तार्यतनुजश्रीधराचार्यकृतकालनिर्णयशिक्षा." इत्युपलभ्यते ॥

8. महाभाष्यम्. २-७,५-२.
9. माहिषेयः.
10. वररुचिः.
11. वाजसनेयिब्राह्मणम्. १४-३३.
12. शिक्षा. १-१,२,२१. २-२. १४-५,२८. १९-३,१२. २१-१,१५. २२-१३. २३-१०,२१.
13. समानसन्धिः. ९-१.
14. सञ्चयः. १-१५.

तस्मात्तदुदाहृतग्रन्थतोपि नास्य समयावधारणं शक्यं कर्तुम् ॥ एतावत्तु केवलं शक्यं यत् वैदिकाभरणकारादयं प्राचीनः त्रिभाष्यरत्नकार इति ॥ यतो वैदिकाभरणे भूयः त्रिभाष्यरत्नग्रन्थोऽनूद्यते खण्ड्यते च ।

वैदिकाभरणकर्ता तु नाम्ना गार्ग्यगोपालयज्वा—तथा चोक्तं वैदिकाभरणप्रारम्भे—

प्रणम्य साङ्गमाम्नायमाचार्यांश्च प्रणीयते ।
व्याख्यानं प्रातिशाख्यस्य गार्ग्यगोपालयज्वना ॥
अर्धरत्नैर्न्यायगर्भैः पूर्वशास्त्रार्णवोद्धृतैः ।
रचितं धारयन्त्वेतद्वैदिकाभरणं बुधाः ॥ इति ।

वैदिकाभरणेऽस्मिन् धृता एते ग्रन्था ग्रन्थकाराश्च—

1. आपस्तम्बधर्मसूत्रम्.
2. न्यायसूत्रम्. १-१.
3. पाणिनिसूत्रम्.
4. भगवानक्षपादः.
5. महाभाष्यम्. १-१

6. वार्तिककारः. १-७.

7. शिक्षा.

8. शौनकीयं प्रातिशाख्यम्. १-२.

अनेन च वैदिकाभरणकृता स्वरसम्पन्नामाऽपि ग्रन्थः कृत इत्यवगम्यते । यथोक्तं वैदिकाभरणे—चतुर्दशाध्यायस्य २९ सूत्रे "अस्यार्थोऽस्माभिस्स्वरसम्पदि विवृतः—

नीचं प्रकृत्या सकलमुदात्तादन्यदक्षरम् ।
सोदात्ते निरुदात्ते तु पदे यत्स्वरितात्तथा ॥ इति ।" इति ।

स चैष स्वरसम्पन्नामा ग्रन्थो नाद्याप्युपलब्धोऽस्माभिः ।

अनेनैव च गार्ग्यगोपालयज्वना विरचिता वृत्तरत्नाकरव्याख्या ज्ञानप्रदीपाभिधा मद्रासनगरे आन्ध्राक्षरैर्मुद्रिता समुपलभ्यते । तत्र च वृत्तरत्नाकरव्याख्याने ज्ञानदीपे "यदन्त्यपरवक्त्राख्यम्" इति सूत्रव्याख्यायां—चपलावक्त्रस्य यथा—

गोपालमिश्ररचिते व्याख्याने ज्ञानदीपाख्ये ।
ध्येयं रहस्यमखिलं वृत्तानां सूरिभिस्सम्यक् ॥

विपरीतपथ्यावक्त्रस्य यथा—

वेदार्थतत्त्ववेदिनि गार्ग्ये गोपालमिश्रेऽन्यैः ।
कार्या नैव कदाचन धीरैस्सर्वाधिकेऽसूया ॥

इति कर्त्रीयं स्वयमेवागायत् । अतश्चायं वृत्तरत्नाकरकारात्केदारान्तर्वाणितोऽर्वाचीन इति व्यक्तम् । तथा "अयुजि न युगरेफतः" इति पुष्पिताग्रालक्षणव्याख्यायां "क्रूरसंयुतः" इत्यादिवराहमिहिरपद्योदाहरणात्ततोऽप्ययमर्वाचीन इत्यवगम्यते । एवं वृत्तरत्नाकरव्याख्यातृगणात् कविशार्दूलश्रीनाथादप्ययमर्वाचीन इत्यवगम्यते । यतः उपजातिलक्षणश्लोकव्याख्यायां नानाछन्दोमयानां योगेऽपि उपजातिता भवतीति श्रीनाथव्याख्यायां समर्थितोऽर्थः "अन्ये

तु ब्रूवते नानाछन्दस्यानामपि वृत्तानां सङ्करादुपजातयो भवन्तीति—तदयुक्तं इत्थं किलेति नियमात् । इतरथा तद्वैयर्थ्यप्रसङ्गाच्च । तस्मान्नानाछन्दस्यवृत्तसङ्करसिद्धाश्श्लोकास्त्वलाक्षणिका वेदितव्याः" इत्यनेन सन्दर्भेण ज्ञानदीपे गार्ग्यगोपालमिश्रेण दूषितः* । श्रीनाथेन च स्वीकृतायां धीशोधिनीसमाख्यायां वृत्तरत्नाकरव्याख्यायां तन्वीवृत्तलक्षणविवरणे—"इनशब्दस्यादित्यवाचकत्वं वैजयन्त्यामुक्तं इनास्त्वात्माधिपार्कार्याः इति" इत्युक्तम । वैजयन्तीकारश्च यादवप्रकाशः आङ्ग्लेयशकीयैकादशशतकस्य प्रारम्भे समवर्ततेति भगवद्रामानुजचरित्रतोऽवधारितम् ।

---

*दृश्यन्ते तु कतिपये प्राचीनानां श्लोकाः विमिश्रच्छन्दोभववृत्तसांकर्ययुताः ।
यथा महानाटके—प्रथमेऽङ्के पञ्चमं पद्यम्—

राम लक्ष्मणपूर्वजं रघुवरं सीतापतिं सुन्दरं
काकुत्स्थं करुणामयं गुणनिधिं विप्रप्रियं धार्मिकम् ।
राजेन्द्रं सत्यसन्धं दशरथतनयं श्यामलं शान्तमूर्तिं
वन्दे लोकाभिरामं रघुकुलतिलकं राघवं रावणारिम् ॥

यथा वा—श्रीशङ्कराचार्यविरचिते माण्डूक्योपनिषद्भाष्ये द्वितीयं पद्यम्—

यो विश्वात्मा विधिजविषयान् प्राश्य भोगान् स्थविष्ठान्
पश्चाच्चान्यान् स्वमतिविभवान् ज्योतिषा स्वेन सूक्ष्मान् ।
सर्वानेतान्पुनरपि शनैस्स्वात्मनि स्थापयित्वा
हित्वा सर्वान्विशेषान् विगतगुणगणः पात्वसौ नस्तुरीयः ॥

यथा वा श्रीमध्वाचार्यविरचिते स्तोत्रे—

पान्त्वस्मान्पुरुहूतवैरिबलवन्मातङ्गमाद्यद्घटा-
कुम्भोच्चाद्रिविपाटनाधिकपटुप्रत्येकवज्रायिताः ।

धीशोधिनीकारस्यापि समयो न स्पष्टमवगम्यते । पित्रादिनाम तु केवलमस्य धीशोधिन्युपक्रमे उल्लिख्यते यथा—

प्रणम्याखिललोकेशं पूर्वाचार्यानुसारिणा ।
गोविन्दभट्टविदुषश्श्रीनाथाख्येन सूनुना ॥
मिताक्षरं प्रभूतार्थं छन्दश्शास्त्रं प्रशस्तिमत् ।
व्याख्यास्यते स्वयाऽल्पबुद्ध्यै वृत्तरत्नाकराभिधम् ॥ इति ॥

अनेन च गार्ग्यगोपालयज्वना विरचितं भारद्वाजीयपितृमेधसूत्रभाष्यमप्युपलभ्यते साम्प्रतम् । तत्र च भाष्ये लोष्टचयनप्रकरणे यल्लाजीयाभिधधर्मशास्त्रनिबन्धोक्तोऽर्थोऽनूद्य दूषित उपलभ्यते ॥

गोपालकारिकेति प्रसिद्धा श्रौतकारिका गोपालसूरिकृतत्वेन समुल्लिखिता प्रायश्चित्तदीपिका बोधायनश्रौतसूत्रगतप्रायश्चित्तसूत्रव्याख्यारूपा च अनेनैव गोपालयज्वना विरचिता वा अन्येन वेति नावधार्यते ॥

---

श्रीमत्कण्ठीरवास्यप्रततनुनखरादारितारातिदूर-
प्रध्वस्तध्वान्तशान्तप्रविततमनसा भाविता नाकिवृन्दैः ॥

यथा वा संक्षेपशारीरके—

उपनिषदिति वेद इत्यपीद नामभिवदन्ति महावचो महान्तः ।
फलवदवगतिस्स्यादन्तरेणैतदेकं वचनमिति न शक्यं वक्तुमित्यादरोऽस्मिन् ॥ (१२-२९७)

"एतस्मिन्नपि श्लोके पूर्वोत्तरार्धयोर्भिन्नत्वाच्छन्दोभेदो न दोषाय । तत्त्वनिरूपणविवशत्वाद्वा छन्दोभेदोऽनालोचित इति द्रष्टव्यम्" ॥ इति तत्र मधुसूदनसरस्वती ॥ कालिदासादिमहाकाव्येषु तु नैवंविधवृत्तसांकर्यं दृश्यते ॥

तदेतयोस्त्रिभाष्यरत्नवैदिकाभरणयोरस्ति कतिपयेषु विषयेषु विसंवादः । यथा—

त्रिभाष्यकृता १६ स्वराः, २५ स्पर्शाः, ४ अन्तस्थाः, षड्ष्माणः, अनुस्वार एकः, विसर्जनीय एकः, रङ्ग एकः, ळकार एकः, ४ यमाः अनुनासिकापरपर्यायाः, स्वरभक्तिरेका इति षष्टिसङ्ख्या वर्णा इत्युक्तम् । वैदिकाभरणकारस्तु रङ्गं स्वरभक्तिं च पृथगपरिगणयन् चतुर्णां यमानामनुनासिकापरपर्यायाणां स्थाने पञ्चनासिक्यान् परिगणयन् एकोनषष्टिर्वर्णा अस्मत्स्वाध्याय इत्याह ।

एवं जटायाः प्रातिशाख्यविषयत्वाभ्युपगमतदभावाभ्यामप्यनयोर्व्याख्यात्रोरस्ति भिदा । सा च प्रागेव दर्शिता ।

एवं प्रातिशाख्यस्यास्य नानाशाखाविषयकतायां द्वाभ्यामप्याभ्यां व्याख्यातृभ्यामभ्युपगम्यमानायामपि ब्राह्मणग्रन्थाविषयकता वैदिकाभरणकारेण नाभ्युपगम्यते । उक्तं हि वैदिकाभरणे उत्पूर्वस्य सकारस्य व्यञ्जनपरस्य लोपविधायके "उत्पूर्वस्सकारो व्यञ्जनपरः" (५-१४) इति सूत्रे—"शृत उत्थाति जनिता मतीनाम्" इत्यस्मिन् तैत्तिरीयब्राह्मणतृतीयकाण्डसप्तमप्रपाठकपञ्चमानुवाकस्थे वाक्ये सकारस्य लोपप्रसङ्गमाशङ्क्य "संहिताग्रन्थमात्रविषयत्वादस्य शास्त्रस्य" इति ॥ त्रिभाष्यरत्नकारस्तु—चतुर्थाध्यायस्यैकादशसूत्रे "विशाखे नक्षत्रं । वीति किं 'तस्मिन् सहस्रशाखे' इति शाखान्तरे" इति वदन् तैत्तिरीयब्राह्मणारण्यकयोरप्येतत्प्रातिशाख्यविषयकतां व्यक्तमाह । तत्सूत्रे "वीत्यस्य प्रयोजनं शाखान्तरे" इति वदंस्तु वैदिकाभरणकारः शाखान्तरीयसंहितावाक्यमेव प्रत्युदाहरणमभिमनुते । प्रातिशाख्यस्या-

स्य कृष्णयजुर्वेदसंबन्धिनानाशाखाविषयकत्वे सति कृष्णयजुर्ब्राह्मणविषयकत्वपरिसंख्यानं तु न साम्प्रतम्। ब्राह्मणमेतदपि हि पारक्षुद्रशाखा । स्पष्टं चेदं भट्टभास्करकृते तैत्तिरीयब्राह्मणभाष्ये प्रपाठकोपसंहारवाक्येषु ॥ इत्थमेव--४-४९, ६-१५, ८-८, १२, १६ ३५, ९-१, २२, २३, १०-५, ९, १२, १३, २५, ११-३, ९, १६, १३-१५, १४-५, १५, २८, १६-१४, २४, २५ सूत्रेषु व्याख्यात्रोरनयोर्वैमत्यमुदीक्ष्यते। प्रायस्सर्वेष्वेवेषु विमतिस्थलेषु त्रिभाष्यरत्नकृतो व्याख्यानमेव व्याससशिक्षया संवदतीति तदेव ज्यायो मन्यामहे। सा हि व्यासशिक्षा शिक्षास्वभ्यर्हितेति तद्गणनावसरे प्रथमपरिगणनादवगम्यते—यथा—

प्रथमं व्यासशिक्षा तु लक्ष्मीशिक्षा द्वितीयकम् ।
भारद्वाजी तृतीया तु शिक्षाऽऽरण्यं तुरीयकम् ॥
पञ्चमं शम्भुशिक्षा च षष्ठं चापिशलं तथा ।
सप्तमं पाणिनेर्शिक्षा अष्टमं कौहलेस्तथा ॥
वासिष्ठशिक्षा नवमी नव शिक्षाः प्रकीर्तिताः ॥ इति

तदेवंसत्यपि कतिपयविषयेषु व्याख्यानयोरनयोर्विसंवादे छे अप्येते अवश्यमेव वेदलक्षणजिज्ञासुभिरधिगन्तव्ये । तत्र त्रिभाष्यरत्नं पाश्चात्यविदुषा पुरा मुद्रितमप्यशुद्धिबहुलं आङ्ग्लेयलिपिमुद्रिततया दुरधिगममपि च वैदिकानाम् । वैदिकाभरणस्यापि प्रायस्तालपत्रमयाः कोशाः ते च लेखकप्रमादबहुलाः । कुम्भघोणनगरमुद्रितमप्येतद्व्याख्यानयुगलं नातीव विशुद्धं, ग्रन्थाक्षरमयतया च न सर्वदेशप्रचारोपयोगि । तस्मात् तदेतद्व्याख्यानयुगलस्य वेदाध्यायिनां नयनयुगलस्येव प्रतिपदमुपकुर्वतः परिष्करणं समारभ्य भूयसां प्रजकोशानामवष्टम्भेन निपुणानां सलक्षणवेदपाठकानां साहाय्यकेन च निरवर्ति ॥ तदेवमिदं राजकी-

यकोशागारेऽस्मिन्प्रकाशितं विश्वतो विवित्सूनां हस्तवशमापन्न-मुपकरोतुतरामिति निवेद्यते ॥

श्लाघनीयोद्यमाः किल पाश्चात्याः यदेते सन्ततमेव तत्त्वतो वैदेशिकविद्यानां विविधानां परिशीलने प्रकाशने च कृतयत्नाः। इदं पुनररुंतुदमस्माकं यदेते एवं प्रयतमाना अपि कतिपये भारतीयेषु नूत्नेषु प्रत्नेषु चान्ततो महर्षिष्वपि दोषानधिरोप्य स्वैरं व्याहरन्तो हृष्यन्तीति। तदेषां प्रतिवचनाय कृतक्षणा एव विचक्षणा भारतीयास्तेते । तत्साम्प्रतं तैत्तिरीयप्रातिशाख्यं तद्व्याख्यानं त्रिभाष्यरत्नं चाधिकृत्य विट्निनाम्ना पाश्चात्यविदुषा प्रवर्तितस्याधिक्षेपप्रचुरोपन्यासस्य प्रतिवचनाय प्रारभामहे—

यत्तावदुक्तं—तैत्तिरीयसंहितातत्प्रातिशाख्ययोस्सम्बन्धः न प्रातिशाख्यव्याख्यानं विना बोद्धुं शक्यते । प्रातिशाख्ये हि पदान्तरेण संवलितान्यसंवलितानि वा वैदिकपदान्युदाहरणरूपेणोपन्यस्तानि । एतानि क्वचित्स्वघटिततैत्तिरीयसंहितावाक्यानां सूचकानि सन्त्यपि न सर्वत्र तथाविधानि दृश्यन्ते। तथाहि— यद्यपि अष्टमाध्याये अष्टादशसूत्रे परिदृश्यमानं 'पष्टः' इति पदं प्रथमकाण्डद्वितीयप्रश्नैकादशानुवाकघटकत्वेन षष्ठकाण्डद्वितीयप्रश्नद्वितीयानुवाकघटकत्वेन च बोद्धुं शक्यते । तथाऽप्यष्टमाध्यायाष्टमसूत्रे परिदृश्यमानानि "अविभः । अकः । पुनः । पितः" इत्येतानि पदानि कुत्रत्यानि ग्राह्याणि कुत्रत्यानि न ग्राह्याणीति विविच्य बोद्धुं न व्याख्यानमन्तरा शक्यते । अतस्तैत्तिरीयप्रातिशाख्यावबोधः व्याख्यानसापेक्ष इति सिद्धम् ॥ इति तदिदं नस्यैव शोभतेतमाम् ॥ शुक्लयजुःप्रातिशाख्यादीन्यपि हि न संहितापाठमात्रमधिकृत्य प्रवर्तन्ते । तत्तत्प्रातिशाख्येषू-

पात्तान्यपि तत्तत्कार्यविशेषनिमित्तवन्ति पदानि सर्वाणि न संहितायामुपलभ्यन्ते । अपि तु यथासम्भवं कानिचित्संहितायाम् । कानिचित्पदपाठे । कानिचित्क्रमपाठे । सम्भवविमर्शबलादेव च तत्रतत्रोपात्तपदस्थानमवधार्यते । तथाऽवधारणं चास्मिन् तैत्तिरीयप्रातिशाख्येऽपि भविष्यतीति को विशेषोऽत्र तैत्तिरीयप्रातिशाख्ये । येन तैत्तिरीयप्रातिशाख्यावबोधो व्याख्यानसापेक्ष इत्येकान्तेन प्रतिज्ञायते ॥ यद्यपि प्रातिशाख्यान्तरेषु संहिताधिकारं पदाधिकारं क्रमाधिकारं च सूत्रयित्वैव तेते कार्यविशेषा विहितास्स्युः । तथाऽप्यस्मिन् प्रातिशाख्ये संहितापदक्रमजटासाधारणः कार्यविशेषस्तत्रतत्र अधिकारविशेषमसूत्रयित्वैव विधीयते संहितादिचतुष्टयसाधारण्यार्थमिति का नामानुपपत्तिः । संहितामात्रमधिकृत्य कृतं चेदपि प्रातिशाख्यमनधिगतसंहिताकानां पुरुषाणां व्याख्यानसापेक्षमेवार्थावगमं जनयेत् । तथा च "अविभः इत्यादीनि पदानि कुत्रत्यानि ग्राह्याणि कुत्रत्यानि वा न ग्राह्याणि" इति विशये स्वरघोषवत्परत्वरूपेण रेफादेशनिमित्तेन विशिष्टानि 'अविभः' इत्यादीनि यत्र लभ्यन्ते तत्र तान्येव अर्थात् जटास्थानि शाखान्तरस्थानि वा ग्राह्याणि । यत्र तु न लभ्यन्ते तथाविधानि संहितायां वा पदपाठे वा क्रमपाठे वा अतथाविधान्येव तान्युपलभ्यन्ते तत्रत्यानि न ग्राह्याणि निमित्तयोगविरहादिति सुबोधमेवेदं सचेतसामित्यास्तामेतत् ॥

एतेन—एतत्प्रातिशाख्ये लक्ष्यतयोपात्तानि कानिचित्पदानि न तैत्तिरीयसंहितायामधुनोपलभ्यमानायां दृश्यन्ते । तथा हि ८–८ सूत्रघटकं स्तनुत इतिपदं १३–१३ सूत्रघटकं चर्पन् इतिपदं १६–१३ सूत्रघटकं जीगिवा इतिपदं जिघासि इतिपदं च न तैत्तिरीयसंहितायामुपलभ्यन्ते । एतत्प्रातिशाख्यव्याख्याता

त्रिभाष्यरत्नकारः पदान्येतानि शाखान्तरगतानीति तत्र तत्रो- द्घुष्यति । वयं पुनर्नेदं युक्तं संमन्यामहे । शाखान्तरीयत्वेन व्याख्यात्रा कथितानि स्तनुतः, चर्षन्, जीगिवा, जिघासि इ- तीमानि हि पदानि तत्र तत्र सूत्रे स्वस्वाव्यवहितपूर्वधृतप- दानां किञ्चिद्विकृतरूपाणीति ज्ञायते । स्तनुतः स्तनुतः चर्मन् चर्षन् जिगिवा जीगिवा जिगासि जिघासि इति हि तत्तत्पदद्वन्द्वक्र- मो दृश्यते । न खल्वेतानि चर्षन्नित्यादीनि पदानि चतुर्ष्वपि वेदेषु क्वचिदप्युपलभ्यन्ते । अतश्चैतान्यवैदिकान्येव पाठकानां प्रमादपाठादेव नूनं सूत्रेषु लग्नानि । तैत्तिरीयप्रातिशाख्यक- र्ता च शाखान्तरमपि लक्षीचकारेति न वयं मन्यामहे—इति पा श्चात्योहो दुरूह एवेति व्यक्तीकृतम् ॥

यथा हि शुक्लयजुर्वेदस्य पञ्चदशसङ्ख्याता शाखाः तथैव, कृष्णयजुर्वेदापराभिधानस्य तैत्तिरीययजुषोपि सन्ति नानाशाखा इति स्मृतिपुराणचरणव्यूहादितोऽवधार्यते । कात्यायनीयस्य शु- क्लयजुःप्रातिशाख्यस्य च पञ्चदशशाखासाधारण्यं सुप्रसिद्धम् । तद्वदेव च आवश्यकं समुचितं च तैत्तिरीयप्रातिशाख्यस्यापि नानाशाखासाधारण्यं आत्रेयवाररुचमाहिषेयरूपभाष्यत्रयानुग- सम्प्रदायसमश्रिगतं साम्प्रदायिकैः तैत्तिरीयप्रातिशाख्यव्याख्या- तृभिरास्थितम् । तदेतत् शाखान्तरस्य स्वानवलोकनमात्रेणैव चेत्पाश्चात्यः परिसंचक्षीत परिसंचक्षतां का क्षतिरस्माकम् । न खलु पाश्चात्यदृष्टगोचरभूतानि तत्त्वानि शाखान्तराणि वा श- शशृङ्गकल्पानीति शक्यं वक्तुम् । नापि जनुषाऽन्धेन रूपं परिसं- ख्यातमित्येतावता तदसदेव भवेत् । किञ्च—पाठप्रमादेन हि यदेव सूत्रगतं पदं तदेव केवलं विकृतं पठ्येत न तु तेन

दृष्यदर्शनात् । एतेषां चतुर्णां पदानां पाश्चात्योपलब्धेषु चतुर्षु वेदेष्वदर्शनं तु न तेषामभावं गमयेत् । अप्रयोजकत्वात् । सन्ति हि एकवेदे अपरिदृष्टान्यपि पदानि वेदान्तरे । एवमेवोपलभ्यमानासु शाखास्वपरिदृष्टान्यपि पदानि शाखान्तरेषु प्रमाणसम्प्रदायप्रमितेषु भवेयुरेवेति ॥

किं बहुना—यस्मिन्नेव षोडशाध्यायत्रयोदशसूत्रे "हिपुजिशा" इत्यादौ जीगिशाशब्द उपात्तः तत्सूत्रव्याख्याने त्रिभाष्यरत्ने "जीगिशांसस्स्याम" इति शाखान्तरे इति तैत्तिरीयब्राह्मण (ब्रा. २-८-६) गतं वाक्यमुदाहृतम् । यस्मिन्नेव च सूत्रे "ऋजीपि" इत्यादौ जिघासिपदमुपात्तं तद्व्याख्यान एव तत्पदोदाहरणतया "प्रथमे जिघासि" इति शाखान्तरे इत्युदाहृतम् । तदेवं सति स्वहस्तगते कोशे उदाहृतमपि वेदवाक्यं सम्यगवगन्तुमकुशलस्य पाश्चात्यस्य "न खल्वेतानि चर्षेभित्यादीनि पदानि चतुर्ष्वपि वेदेषु क्वचिदप्युपलभ्यन्ते" इति स्वैरं प्रतिजानानस्य साहसं परां काष्ठामारूढमित्यवगन्तव्यम् । न च एतखपु वेदसंहितासु अदर्शनमेव तेषां पदानामस्मदभिमतमिति वाच्यं कतिपयसंहिताग्रन्थेऽदर्शनमात्रेण पदानामवैदिकत्वासिद्धेः । तस्मादस्मिन् प्रातिशाख्यस्यास्य नानाशाखाविषयकत्वं नानुपपन्नमिति । अत एव तत्र तत्र "देव्रते उभे भागधे ऊर्ध्वे विशाखे" इत्यादिसूत्रेषु विशाखे इत्यादौ विग्रहणादेः "तस्मिन् सहस्रशाखे" इति शाखान्तरवाक्यव्यावृत्त्यादेः फलत्वकथनं व्याख्यातॄणामुपपन्नतरम् । अत एव च—एतत्प्रातिशाख्यव्याख्याता त्रिभाष्यरत्नकारस्तु—पदान्येतादृशानि शाखान्तरगतानीति तत्र तत्र ब्रूयात् । सूत्रघटकपदप्रयोजनचर्चायामपि शाखान्तरगतपदानि प्रत्युदाहृत्य पदप्रयोजनं व्याख्यातेव दर्शय-

ति । तथाहि—" विशाखे " (4-11) इत्येतत्पदघटित 'वि' पदं शाखान्तरघटितस्य "सहस्रशाखे" इत्येतादृशशाखेपदस्य प्र-ग्रहनिवारणायेति ; तथाऽस्मिन्नेव सूत्रे " स्तुतशस्त्रे " " ऋक्सामे " " विधृते " " पूर्वजे " इत्येतादृशपदघटकानां स्तुत-ऋक्-वि-पूर्व-पदानां प्रयोजनं क्रमात् " ऊर्ध्वे शस्त्रे प्रतिष्ठिते " " ब्रह्म-सामे प्रतिष्ठिते " " अग्निधृते " " प्रथमजे " इत्येतादृशशाखा-न्तरघटकपादानां प्रग्रहवारणमेवेति; प्रत्युदाहरणान्युपन्यस्यति व्याख्याता । एवमेव ४–१२ सूत्रे "पशुश्रपणी," (भस्मश्रपणी) इति ; पञ्चदशसूत्रे, " तमाहुरी ह्वयति," " हुती पुनर्जुहोति," " हुती तस्माद्वेधाः " इति, सप्तत्रिंशत्सूत्रे " इन्द्राग्नी ह्वयामहे " इति, ६-५ सूत्रव्याख्यायां, " प्रमतिस्ते देवानाम् " इति, ११-१ सूत्रव्या-ख्यायां " धाता देवेभ्योऽसुरान् ". इति, ६-१६ सूत्रव्याख्यायां " गयस्फानोऽग्निपु " इति च शाखान्तरगतत्वेन प्रत्युदाहरणान्युप-न्यस्तानि-मम त्वेतानि सर्वाणि व्याख्यातृमतिविलसितानि मृषारू-पाणीति प्रतिभाति । न हि प्रातिशाख्यकर्ता यावत्पदं लक्ष्यत-योपन्यस्यं तावदेव ग्राह्यमिति नियमेन बद्धः—इति पाश्चात्या-धिक्षेपोपि गलहस्तितः । अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो-मुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥ इति हि सूत्र-लक्षणमामनन्ति ॥ तदिदं निरर्थकाधिकपदोपादानेऽत्र कथं घट-ताम् ॥ दृश्यते चाधिकांशोपादानस्य व्यावृत्तिस्सर्वत्रैव । तस्मा-त्तत्र तत्र व्याख्यातृभिरुपन्यस्ता शाखान्तरवाक्येषु तत्तत्पद-व्यावृत्तिस्साधीयसी सूत्रकृदभिमतैवेति विभाव्यताम् ॥

तदेवं व्याख्यात्रा " विशाखे " इत्यादौ शाखान्तरे प्रत्यु-दाहरणवाक्यान्युपन्यस्य व्यावृत्तिं वर्णयता प्रातिशाख्यस्य शा-खान्तरसाधारण्यस्य स्थापितत्वात् अन्यत्रापि स्वशाखायामस-

स्मभवत्प्रयोजनानां पदग्रहणानां शाखान्तरवाक्य एव प्रयोजनं नूनमभिसंहितं सूत्रकृतेति स्वत एवावधार्यते। अत एव तत्रतत्र प्रत्युदाहरणवाक्यन्यासमकृत्वैव "शाखान्तरे प्रयोजनम्" इत्येव केवलं स्मार्यते व्याख्यात्रा ॥ यथा—११, १९, १२, ३, १६,२, सूत्रेषु । न खल्वेतावता प्रत्युदाहरणवाक्यस्य विशिष्यानुपन्यासेन वा स्वेनानवलोकनमात्रेण वा तादृशानि वाक्यान्यप्रामाणिकान्येवेति शक्यमभ्यूहितुम् । सूत्रकारीयया निरर्थकाधिकपदाप्रयोगशैल्यैव तादृशतादृशशाखान्तरवाक्यसद्भावप्रमितेरिति ॥

अथ एकैकशाखापरत्वमेव प्रातिशाख्यस्य न त्वेकाधिकशाखापरत्वम् । अन्यथा प्रातिशाख्यपदयोगायोगादिति चेन्मैवं प्रतिशाखासु भवं प्रातिशाख्यमिति योगाङ्गीकारसम्भवेन प्रातिशाख्यस्यैकाधिकशाखापरत्वेऽपि क्षतिविरहात् । स्पष्टं चेदं शुक्लयजुःप्रातिशाख्यव्याख्याने अनन्तदेवकृते—प्रतिज्ञासूत्रपरिशिष्टोपक्रमे—अथ स्वरप्रक्रियाकथनानन्तरं स्वरपदोपलक्षितसंस्कारप्रक्रियोच्यत इति शेषः । यद्वा—पञ्चदशयजुश्शाखासाधारणसंस्कारकथनानन्तर्यार्थोऽयमथशब्दः । यद्येते संस्काराः प्रातिशाख्ये नियद्धा भवेयुस्तदा सर्वेषां काण्वादीनामपि स्युः । अतोपि तेषां पृथगेवोपदेशो युक्त इति । ननु प्रातिशाख्यस्यान्यधर्मसंनाकरणेन प्रातिशाख्यं भिन्नत्वात् कथं तेषां धर्मप्राप्तिरिति चेन्नैतदेवं यतः प्रतिपञ्चदशशाखायां भिन्नानि प्रातिशाख्यानि नोपदिष्टानि । किन्तु श्रौतस्मार्तसूत्रवत् प्रातिशाख्यसूत्रमपि पञ्चदशशाखासाधारणं समाम्नानम् । विज्ञापयति चामुमर्थमाचार्यप्रवृत्तिः तथा हि—देवेभ्यश्शुन्धध्वं देवेभ्यश्शुन्धध्वमित्येके। अस्मिन्नेकपदग्रहणमन्यशाखापरमिति भाष्यकृतः । एवं वायव-

स्थेत्युपायथस्स्थेति चैके । इत्यादि । एवं प्रातिशाख्यसूत्रेऽपि शाखान्तराभिप्रायेण हरिशयेत्येके इत्यादिषु एकपदमन्ववोचत् । एकस्यामेव शाखायां मतान्तरेण पाठान्तरमिति विरोधीति सङ्क्षेपः । प्रतिशाखासु भवं प्रातिशाख्यमिति सम्भवाभिप्रायेण बहुवचनान्तयोगेनापि निर्वाह इत्यास्तां तावत्—इति । वैदिकाभरणेऽपि "देवते उभे"(४–११) इत्यादिसूत्रे वीत्युपबन्धस्य व्यावर्त्यं शाखान्तरे । नन्वेवमनेकशाखाविषयत्वे प्रातिशाख्यमिति ग्रन्थस्य समाख्या विरुद्धयेत । नैतदस्ति । द्वित्रिशाखाविषयत्वेऽपि तदसाधारणतयोपपत्तेः । तथा बह्वृचानां शाकल्यबाष्कलशाखाद्वयविषयं प्रसिद्धम् । एवमुत्तरत्रापि द्रष्टव्यम् —इति ॥

यदपि—तैत्तिरीयशाखायाः संहितापाठादन्ये पदपाठादयस्सन्तीत्येतत्तैत्तिरीयप्रातिशाख्यकारेणाप्यङ्गीकृतमिति ज्ञायते । पदपाठं विना तैत्तिरीयप्रातिशाख्यकर्त्रा प्रातिशाख्यं कृतमित्येतत्तु दुरूहम् ॥ यद्यपीतरप्रातिशाख्येष्विव तैत्तिरीयप्रातिशाख्ये पदक्रमजटाविधायकानि यावल्लक्षणानि न दत्तानि । तथाऽपि तृतीयाध्यायप्रथमसूत्रे सन्धिविभागकाले विहितो ह्रस्वविधिः पदक्रमजटापाठेष्वन्वेति । पद नानापद ईङ्ख्य अवग्रहेत्यादयः एतत्प्रातिशाख्ये प्रयुक्ताः पारिभाषिकाश्शब्दाः पदपाठादिसत्तां सूचयन्त्येव । "इतिपरोपि" (4–4) "अनितिपरः" (4–30) इति सूत्रयोः पदपाठादिषु प्रचुरप्रयोग इतिशब्दः स्पष्टं परामृष्टः । तथा नवमाध्यायैकविंशतिसूत्रे दशमाध्यायत्रयोदशसूत्रे च आर्षशब्दप्रयोगेण पदपाठादयस्सूचिता एव । इति ॥ तत्तु सत्यमेव । यद्यपि—पदक्रमविशेषज्ञ इत्युपसंहारसूत्रे पदक्रमपाठयोः स्फुटनिर्देशरूपमपि पदक्रमपदं पदानां क्रमः तस्य विशेषः इति

त्रिभाष्यरत्नकृता व्याख्यातम् ॥ तथाऽपि—तैत्तिरीयकाण्डानुक्रमणिकायां—

वैशम्पायनो यास्कायैतां प्राह पैङ्गये।
यास्कस्तित्तिरये प्राह उखाय प्राह तित्तिरिः ॥
उखश्शाखामिमां प्राह आत्रेयाय यशस्विने।
तेन शाखा प्रणीतेयमात्रेयीति च सोच्यते ॥
यस्याः पदकृदात्रेयो वृत्तिकारस्तु कुण्डिनः।
तां विद्वांसो महाभागा भद्रमश्नुवते महत् ॥

इत्येवमात्रेयस्य पदकारतास्मरणात् आत्रेयस्य च प्रातिशाख्येऽस्मिन् (५–११) (१७–८) सूत्रयोर्निर्देशाच्च प्रातिशाख्यादस्मात्पुरैव पदपाठोऽभूदिति व्यक्ततरमेवेदं सम्प्रदायविदाम् ॥ एवं "ऋग्विरामः पदविरामो विवृत्तिविरामस्समानपदविवृत्तिविरामास्त्रिमात्रो द्विमात्र एकमात्रोऽर्धमात्र इत्यानुपूर्व्येण" इतिद्वाविंशाध्यायत्रयोदशसूत्रे पदविरामस्य द्विमात्रताविधानमपि प्रातिशाख्यतः प्रागेव पदपाठसद्भावं स्पष्टयति ॥

यदपि—एतत्प्रातिशाख्यानुसारिषु पदपाठादिषु इतिशब्दप्रयोगनियमः नावधार्यते। न वा यथाऽत्र पदपाठे उपसर्गस्सार्कमितिशब्दः प्रयुज्यते तथा स प्रयोज्य इति क्वाप्येतत्प्रातिशाख्ये तद्व्याख्याने वा कण्ठत उक्तं दृश्यते ॥ इति तदपि प्रातिशाख्यव्याख्यानानवबोधमेव गमयति। "आप्रावोपाभ्यधिप्रतिपरिविनीत्युपसर्गाः" इति (१–१) सूत्रे त्रिभाष्यरत्न एव "ननु 'प्रपरापसमन्ववनिर्दुर्व्याङन्यधयोऽप्यतिसूदभयश्च। प्रतिना सह लक्षयितव्याः पर्युपयोरपि लक्षणमत्र' इत्यादि पाणिनीया विशेषेण भणन्ति। कथमत्र सूत्रकृता निरर्गलमुपसर्गा इतिशब्देन सङ्कुचिताः। उच्यते—यजुर्वेदविषये एतावन्त एवेति मन्तव्यम्।

तर्हि 'प्रोपावाप' इतिसमुच्चये विशेषपाठः कथमुपलभ्यते। इतिपरत्वविधाने तस्य तात्पर्यं न तूपसर्गसंज्ञाविधाने विशेषपाठः" इत्युपलम्भात् । अत्र हि त्रिभाष्यरत्नसन्दर्भे शिक्षासमुच्चयवचनमुपसर्गाणां सर्वेषामितिपरत्वं विधत्ते इति स्पष्टमवगम्यत इति ॥ व्यासशिक्षायामपि च "प्रोपावापर्यधिव्युत्सुन्यन्धापाप्यत्यभिप्रति । पराग्निस्समवदुशाप्युपसर्गास्स्युरत्रहि" इत्युपक्रम्य प्रग्रहेङ्ग्योपसर्गाणामितिशब्दः प्रयुज्यते । परस्तात्पदकालेयं पूर्वोच्चारण एव हि ॥ प्रग्रहेङ्ग्योपसर्गान्ते इति स्यादप्यसांहिते । पुनस्त्विङ्ग्यक्रमे चादिर्विरामस्थं द्विधेष्यतः ॥ इति स्मर्यते ॥ एतेन—अपिच- यथा बह्वृचाथर्वप्रातिशाख्यकारैः इङ्ग्यलेखनं क्रियते तथा वा उतान्यरीत्या वा तैत्तिरीयैरिङ्ग्यलेखनं क्रियते इत्येतत्तु नैतत्प्रातिशाख्ये दर्शितम् ॥ बह्वृचाथर्ववेदिनः "उप—आययः" इतीङ्ग्यं लिखन्ति । यजुर्वेदिनस्तु "उपायय इत्युप—आययः" इति लिखन्ति। तैत्तिरीयप्रातिशाख्यव्याख्याता तु इतिशब्दं प्रयुज्य लिखति—इत्यपि दत्तोत्तरम् । सामायिकतया लेखनक्रमस्य प्रातिशाख्याकारैरननुशास्यत्वात् । यथैव हि समाम्नायते इङ्ग्यादिकं साम्प्रतं सोऽसौ प्रकारस्सकलोप्यनुशिष्ट एव प्रातिशाख्येऽस्मिन्निति ॥

यदपि – विंशत्यध्यायतृतीयसूत्रविहितः प्रातिहतः एतत्प्रातिशाख्यानुसारिपदपाठेषु न प्रवर्तते इति—तदिदं सत्यमेव । "अपि चेन्नानापदस्थमुदात्तमथ चेत्सांहितेन स्वर्यते स प्रातिहतः" इतीदं हि विंशत्यध्यायतृतीयसूत्रम् । तेन च संहिताभावेन स्वर्यमाणस्यैव प्रातिहतसंज्ञा विधीयते । सा च संज्ञा पदपाठे कथं प्रवर्तताम् । तथा च "सांहितेन स्वर्यते" इति सूत्रांशानुगुणैव पदपाठे प्रातिहताप्रवृत्तिः न कथं चिदपि दोषः ॥

यत्तु—अत्र सूत्रे लाघवात् "नानापद" इत्यस्य स्थाने "इङ्ग्य" पदमेवोपात्तुं युक्तमित्यादि। तदतिफल्गु। इङ्ग्यपदस्य समस्तमात्रवाचित्वात् "इषे त्वा" इत्यादौ प्रातिहतसंज्ञानापत्तेः।

यदपि—तैत्तिरीयपदपाठोऽन्यवेदपदपाठविलक्षणः कश्चिल्लक्षणविरुद्धश्चेति विज्ञायते। यतः "योजा" "एवा" (३-१५) "नीचा" (प्रा ५-८) "एकैकया" (प्रा ५-१९) इत्यादयः कतिपये शब्दाः एतत्पदघटितानां इतरवेदपदपाठानां वैलक्षण्येन पदपाठेष्वपि दीर्घान्ता एव दृश्यन्ते इति—तत्रोच्यते—तैत्तिरीयसंहितायां हि (१-८-५) "सुसंदृशं त्वा वयं मघवन्मन्दिषीमहि। प्र नूनं पूर्णवन्धुरस्स्तुतो यासि वशाँ॒ अनु। योजा न्विन्द्र ते हरी" इति पठिता ऋक् ऋग्वेदे प्रथमाष्टकस्य षष्ठेऽध्याये तृतीये वर्गे पठ्यते। परन्तु तैत्तिरीयसंहितायां "मन्दिषीमहि" इति पाठः। ऋक्संहितायां तु "वन्दिषीमहि" इति भेदस्सर्वसम्प्रतिपन्नः। तद्वत् "योज" इतिह्रस्वान्तः पाठः ऋक्संहितायां दीर्घान्तस्तु तैत्तिरीयसंहितायां पाठ इति पदपाठभिदा भविष्यतीति का नामानुपपत्तिः। एवं "एवा पित्रे" इत्यादौ "एव" इति ह्रस्वान्तं पदं ऋक्संहितादौ पठ्यते। अनुशिष्यते च ऋक्प्रातिशाख्यकारैः शुक्लयजुःप्रातिशाख्यकारैश्च तथा तैत्तिरीयसंहितायां तु "एवा" इति दीर्घान्तमेव पठ्यते इतीदमपि काचित्कसंहितापाठभेदवदुज्यत एव। ऋग्भाष्यकारा हि "एव" इत्यस्य एवमित्यर्थपरत्वं भाषन्ते। अवधारणार्थकस्य एव इत्यस्य एवमित्यर्थकत्वं तु नातीव स्वरसम्। तैत्तिरीयभाष्यकारास्तु "एवं" इत्यत्र सुलोपापवादडादेशेन "एवा" इति साधयन्ति। तस्मादिदमेव स्वरसं मन्यामहे। एवम्—प्र यो जज्ञे विद्वाँ॒ अस्य बन्धुं विश्वानि देवो जनिमा विवक्ति। ब्रह्म

प्रग्रहण उज्जभार मध्याग्नीचाउच्चा स्वधयाऽभिप्रतस्थौ। (सं २-३-१४) इत्यत्रापि "नीचा नीचप्रदेशात् पञ्चम्येकवचनस्य सुपां सुलुगित्याजादेशः। सांहितिको दकारोपजनश्छान्दसः। उक्तं च प्रातिशाख्ये—नीचा पूर्वोदकार उच्चापर इति। उच्चा उच्चप्रदेशात्। पूर्ववदाजादेशः" इति भाष्यकारैर्भाषणात् नीचा दीर्घपाठमेव साधीयांसं मन्यामहे॥ एवं 'प्रति तिष्ठन्त्येकैकयाऽस्तुतया समायन्ति' (७-१-८) इत्यत्र "एकैकयेत्येकया एकया" इति पदं पठ्यते। तदिदं युक्तमेव अत्र ह्रस्वान्तपाठप्रसक्तेरेवाभावात्॥

यदपि—इदं तावदत्र क्लिष्टसूत्रशैलीमूलमेव। यत्प्रग्रहाध्याये (४-७) यद्वोऽसांहितिकाः ओकारा अप्रग्रहास्संवृत्ताः ओ (१-४-३३) तो, उतो (१-७-२) उपो, प्रो (१-७-१३) इत्येते शब्दाः सम्बुद्ध्योकारान्ताश्च। अप्रग्रहाणामितिपरत्वं नास्तीति व्याख्यात्रोक्तेः पूर्वोक्ताश्शब्दा इतिपरा न भवन्तीत्यवधार्यते। अथापि त इमे शब्दा अप्रग्रहा अपि ओकारान्ताः पदपाठे इतिपरा एव प्रयुज्यन्ते इतरवेदेष्विव कृष्णयजुर्वेदेऽपि—इति॥ तत्रोच्यते—ओ इत्यस्य (१-४-३३) इत्येतदङ्कितं यदुदाहरणमुक्तं तत्र चतुर्थाध्यायषष्ठसूत्रेणैव प्रग्रहास्सिद्धः "प्रतिचक्ष्याभूदो ते" इत्यत्र ओकारस्य ते इति व्यञ्जनपरत्वात्। तो इत्यस्य (१-२-३) (६-१-८) इत्येतदङ्कितं स्थलद्वयं प्रदर्शितमुदाहरणम्। तत्र "तो" इतिपदं न समीक्ष्यते, "तो ते" इत्येकं पदमुपलभ्यते। "उतो" "उपो" "प्रो" इत्येतेषां (१-७-१३) इति स्थलं यत्प्रदर्शितं तत्र "प्रो" इत्येतदेकमेवोपलभ्यते। तत्रापि प्रग्रहत्वं (४-६) सूत्रादेव सिद्धम्। सुनिपुणमन्वेषणेऽपि नैकोपि तादृशश्शब्दो दृष्टिगोचरो भवति यत्र सूत्रद्वयोक्ताः प्रग्रहविधयो व्यभिचरितास्स्युः॥

वस्तुतस्तु—"समहदर्थपितपूर्वश्च" (४-७) इत्यस्मिन् सूत्रे "एवं पूर्वं इति किं, शतक्रतवुद्धंशमिव" इति प्रत्युदाहृतं दृश्यते त्रिभाष्यरत्ने। तत्र पदपाठेऽपि शतक्रतविति शत—क्रतो इत्येव पठ्यते। ततश्च शतक्रतविति सन्धिपाठादप्रग्रहृत्वमेव तौ इत्यस्येति सुव्यक्तम्। एवं वैदिकाभरणेऽपि तस्मिन्नेव सूत्रे "एवं पूर्वं इति किं—शविष्ठ धृष्णवागहि" इति प्रत्युदाहृतम्। तत्र च पदपाठे। "धृष्णो। एति। गहि" इत्येव पठ्यते इतिपरत्वं विनैव। अतस्तैत्तिरीयपदपाठे न मात्रयाऽपि तैत्तिरीयप्रातिशाख्यविरोधः। वेदान्तरे तत्रेतिपरत्वेन पाठस्तु न तैत्तिरीयप्रातिशाख्ये दूषणमाधातुमलम्॥ ऋक्संहितायां हि "गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः। ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे" इत्यवादेशमकृत्वैव पठ्यते। तैत्तिरीयसंहितायां तु तत्रावादेशं कृत्वैवेति॥

यदुक्तं—क्रमशब्द एतत्प्रातिशाख्ये त्रयोविंशाध्यायविंशसूत्रे चतुर्विंशाध्यायपञ्चमसूत्रे च प्रयुक्तो दृश्यते। चतुर्विंशाध्याये पष्ठसूत्रे च स्पष्टं क्रमपाठशब्दो निर्दिष्टः। परन्त्वेतानि सूत्राणि एतत्प्रातिशाख्यकारेणैव कृतानीत्येतत्तु सन्दिग्धम्—इति तत्र यथेतराणि सूत्राणि तथैवैतान्यपि क्रमशब्दघटितानि सूत्राणीति एतेषामेव प्रातिशाख्यकारप्रणीततायां सन्देहे न कमपि विशिष्य हेतुमुपलभामहे॥

वस्तुतस्तु—एषु प्रातिशाख्यसूत्रेषु क्रमशब्दः न क्रमपाठपरतया व्याख्यातः अपि तु—"विक्रमः क्रमः" इति विक्रमसहचरितद्वित्वपरतयैव व्याख्यातः। शास्त्रोपसंहारसूत्रे च "पदक्रम" इत्येतत् पदानां क्रमः पदक्रम इत्येव विवृतं "वर्णक्रमविचक्षणः" इत्यव्यवहितवाक्यानुसारादित्यवधेयं सूरिभिः॥

यदपि—त्रिभाष्यरत्ने विंशाध्यायद्वितीयसूत्रव्याख्याने क्रमपाठं त्यक्त्वा संहितापदजटापाठानेव व्याख्याता परामृशति। क्रमपाठपरामर्शोऽत्राश्चर्यावहः इति । तत्रेदमुच्यते—"सयकारवकारं त्वक्षरं यत्र स्वर्यते स्थिते पदेऽनुदात्तपूर्वेऽपूर्वे वा नित्य इत्येव जानीयात्" इति हि तत् सूत्रम् । सयकारं वा सवकारं वा अक्षरं स्वरः स्थिते पदे पदकाले यत्र स्थले स्वर्यते अनुदात्तपूर्वे अपूर्वे वा पूर्वाभावे वा सति सः नित्य एवेति सर्वत्र जानीयात् । सर्वत्रेति संहितापदजटास्वित्यर्थः इति तस्य त्रिभाष्यरत्नम् । अत्र हि क्रमपाठपरामर्शः संहितापदपाठयोरदृष्टस्य नित्यस्वरितस्य क्रमेऽनुपलम्भात् । संहितापदपाठधर्मयोः क्रमपाठेऽतिदेशेन संहितापदपाठयोर्दृष्टस्य नित्यस्वरितस्य क्रमपाठे श्रवणस्यावश्यप्राप्तत्वाच्च । यद्यपि पदपाठेऽदृष्टो नित्यस्वरितस्वरः संहितायां न पठ्यत इति संहितापदोपादानं विफलम् । तथाऽपि सर्वत्र पदजटयोरित्यर्थः इत्युक्तौ संहिताया नित्यस्वरसंद्भावो न प्रतीयेत । न खलु संहितायां अतिदेशातः स्वरः प्राप्यते । क्रमस्य तु अनुल्लेखेऽप्यत्र व्यासशिक्षादौ संहितापदपाठधर्मातिदेशबलादेव नित्यस्वरितप्राप्तिरव्याहतेति युक्तः क्रमपाठपरामर्शोऽत्र ॥

यदपि—अष्टमाध्यायषोडशसूत्रं त्रिभाष्यरत्नकारस्तथाऽर्थं प्रमाणं विनाऽपि व्याचष्टे । यथा तत्र जटासमन्वयोऽपि स्यात् इति । तत्र—यतो जटाया अपि पतत्यातिशाख्यविषयत्वं प्रागेव समर्थितम् । संप्रति तत्र जटासाधारण्यकायां शिक्षायां "रेफोर्ध्वो लुप्यते रेफस्तत्पूर्वो दीर्घमाप्नुयात्" ॥ इति स्मरणात् "रुक्मो अन्तरन्ता रुक्मो रुक्मो अन्तः" इत्येव जटारूपं साधीय इत्यवगम्यते । ततश्चास्मिन् प्रातिशाख्ये तादृग्जटारूपोपपादकविध्यन्तरादर्शनात्

"अनवर्णे" इति सूत्रे तुशब्दस्य प्रयोजनान्तरादर्शनाच्च तुश-ब्दारम्भादवर्णपूर्वोऽपि ह्रारभारादीनां विसर्गो लुप्यते । पूर्वस्व-रश्च दीर्घमापद्यते यथा—"रुक्मो अन्तरन्ता रुक्मो रुक्मो अन्तः" इति त्रिभाष्यरत्नकारकृतं व्याख्यानं सप्रमाणमेव । अन्यथोपद-र्शितव्यासशिक्षावचनबहुलशिष्टसम्प्रदायाभ्यां सिद्धस्य जटा-रूपस्यासिद्धेः । अत एव वैदिकाभरणेऽन्यथाप्रदर्शितमुपदर्शि-तस्थलीयं जटारूपं प्रत्युक्तम् । यदपि—वैदिकाभरणे "मूलशा-स्त्रे त्ववर्णपूर्वस्यापि कस्यचित् रोरि इति लोपस्स्मर्यते । स खलु 'सुवो रोहाव' इत्याद्यस्मत्समाम्नायविरुद्धत्वान्निवर्त्यः । स चात्र तुशब्देन निवर्त्यते । तेन 'सुवो रोक्ष्यामि' इत्यादिरूपसिद्धिः" इति तुशब्दप्रयोजनमुक्तं तन्न "अनवर्णपूर्वः" इत्यस्मिन् शास्त्रे विशेषतः रेफलोपारम्भबलादेवात्र मूलशास्त्रप्राप्तिनिवर्तनसम्भवेन तुशब्दवैयर्थ्यात् । तस्मात् तुशब्दस्य त्रिभाष्यरत्नकृतोक्तं प्रयो-जनमेव युक्तम् ॥

यदपि—पञ्चमाध्यायत्रयस्त्रिंशत्सूत्रमनुसृत्य यद्व्याख्यातोऽयं जटापाठे क्लिष्टोच्चारणं तकारागमं विधत्ते । तन्न साधु. यतस्सू-त्रकारः जटामनभिचिन्त्यैव तत् सूत्रं कृतवानिति गम्यते । इति—तन्न "टनकारपूर्वश्च तकारः" इत्यस्मिन् सूत्रे चकारेण पूर्वसूत्रात् सपकारपरः इत्यन्वादेशात् तत्र च पकारपर इत्यंशस्य "अ-नूयाजौ पदऋ्पडनूयाजावनूयाजौ पद" इत्यादिजटातोऽन्यत्रोदाह-रणालाभेन जटापरतयैव तदंशस्य व्याख्येयत्वात् । "ङपूर्वः कसयोर्भवेत् टनपूर्वश्च तो भवेत्" इति व्यासशिक्षावचनमप्य-त्रैवानुकूलम् । शास्त्रविहिते तु तत्र तकारे क्लिष्टोच्चारणत्वं नैव दोषः । पाश्चात्यमुखे हि सकलैव दैवी भाषा क्लिष्टोच्चारणा। किं बहुना—अत्रैवं प्रातिशाख्यसूत्राणां जटापरतामधिक्षिपन्नेवा-

सौ पाश्चात्यः "११–१६, १७ सूत्रव्याख्यानयोः यच्च जटापाठात्प्रत्युदाहरणानि सङ्गृहीतानि तन्नचाय्यम्। तथा च एतत्प्रातिशाख्यस्य कर्ता कर्तारो वा जटां मनसि निधायैव प्रातिशाख्यमेतच्चक्रुरिति सुवचम्" इति वदन् हन्त पूर्वोत्तरस्वोक्तिविरोधमपि न पर्यालोचयते ॥

यदपि—(२३-२४, २४-५) सूत्रयोः निर्दिष्टः विक्रमशब्दः क्रमविकृत्यर्थमभिदधानो जटामभिधत्ते इत्यपि सुवचम्। इति—तन्न "स्वरितयोर्मध्ये यत्र नीचं स्यादुदात्तयोर्वाऽन्यतरतो वोदात्तस्वरितयोस्स विक्रमः" इति (१९-१) सूत्रेण शास्त्रेऽस्मिन् विक्रमशब्दस्य परिभाषितस्य जटापरत्वासम्भवात् ॥

यदपि—"पृक्तस्वरात्परः" इति सूत्र (१३-१६) व्याख्यायां स्वकृतापार्थपरिपोषाय "नलं प्लवम्" इति शाखान्तरगतत्वेन प्रत्युदाहरणं न्यस्यति—इत्याह तत्रत्यस्य व्याख्यातृकृतार्थस्यापार्थतामनिरूपयन्नेव स्वैरम्। तदपि तस्यैव कृतमतेरुचितम् ॥

यदपि—"अकारस्तु संहितायामपि" इति सूत्रव्याख्यायां व्याख्याताऽयं तैत्तिरीयसंहितागतमपि 'ब्रह्मान्' इति पदं शाखान्तरगतत्वेन प्रत्युदाहरतीति—दोषमुद्भावयामास तदपि "अयज्ञं पठित्वा कुचोद्यं करोति" इत्यस्य न्यायस्य प्रथमं निदर्शनम्। तत्सूत्रव्याख्याने हि त्रिभाष्यरत्ने "यह्वाम्" इत्येतदेवोदाहरणं शाखान्तरगतत्वेन समुपात्तम्। तच्च आरण्यकस्य पञ्चमप्रपाठकप्रथमानुवाक एव समाम्नायते न तैत्तिरीयसंहितायामिति ॥ एतेनैव—तैत्तिरीयप्रातिशाख्यकर्ता शाखान्तरमपि लक्षीचकारेति न वयं मन्यामहे—इति वचनमप्यप्राज्ञवचनमेवेति व्यक्तीकृतम् ॥

यदपि—सन्ति च कानिचित्पदानि यानि तैत्तिरीयसंहितायामपरिदृश्यमानान्यपि व्याख्यात्रा संहिताघटकत्वेनैवोदाहृतानि । एतानि च मद्वशंगतेषु हस्तलिखितेषु पुस्तकेष्वेव कदाचिद्दृष्टान्यपि मयाऽद्य विस्मृतस्थलान्यभवन् । पुनरप्यल्पफलं तादृशपदानां विस्तृतसंहितायामन्वेषणं मया न कृतम् । एतान्येव हि तानि पदानि—'अच्छावाकः' (१४-५) "उच्चा स्तं अयजन्त" (२-४१) "तस्माद्धरूपम्" (२०-३) "दाद्यन्हि" (२१-१६) "नश्चिदति" (१४-१०) एतानि च प्रायेणोपक्षितान्यपि सत्यान्येवेति मत्वा व्याख्यात्रोदाहृतानीति दृश्यते—इत्युक्तं तदपि नूनं बहुलतमलेखकप्रमादकलुषितत्रिभाष्यरत्नकोशावष्टम्भेन विप्रलब्धस्यैव वचनं मन्यामहे । न खलु तानि तानि पदानि तत्तत्स्थाने तेन निर्दिष्टानि एतद्देशीयकोशेषु क्वचिदप्युपलभ्यन्ते आम्नायन्ते वा ॥

एतेन—अन्यच्च "कविशस्तः" (१६-२) इत्येतादृशोदाहरणान्वेषणाय प्रवृत्तोऽहं प्रमादृष्ट्या "कविशस्ताः" इत्युदाहरणमुपलब्धवान् । सन्ति चान्यान्यन्विष्याप्यनुलब्धान्युदाहरणानि यथा—"अद्य वसु वसतीतीन्द्रमेव" (१०-१०) "अन्वेनं माता" (२०-१) अन्त्यमेतदुदाहरणं शाह्व (६-१७-२) आश्व (३-३) पैतृप्र (२-६) एषु दृश्यते इति वेबर्नामा विद्वान् वदति—"अहोरात्रे पार्श्वे" (८-७) इत्युदाहरणं तैत्तिरीयारण्यके (३-१३-२) दृश्यते । "उत श्रवसा पृथिवीं मित्रस्य" (९-१२) इत्युदाहरणं "उपाह्वल्यस्कन्दाय" (१०-९) "चतुर्होता" (२-२५) तै. ब्रा. (२-२-३) "ब्रह्मौदनं पचति" (१०-७) तै. सं. (१-१-९) "यदछन्दसाम्" (१४ १०) "या प्राची दिक्" (४-३३) "घर्मोभ्यः" (१४-१६) "घर्मेभिः" (१४-१६) "शितिकण्ठाय स्वाहा" (१३-११) "स नः पर्षत्" (२३-१७) ऋग्वेद (१-९९-१) । एतानि च

वाक्यानि केषुचिदेव त्रिभाष्यरत्नकोशेषु दृश्यन्ते । संहितायाम्न्विष्टान्यपि मया न लब्धानि– इत्यपि पाश्चात्यवचनं दत्तोत्तरं–तत्तद्वाक्यानामस्मद्देशीयत्रिभाष्यरत्नकोशेषु क्वाप्यनुपलम्भात् ॥

यदपि–क्वचिच्च संहिताबहिर्भूतान्यपि लक्ष्याणि तैत्तिरीयप्रातिशाख्यकर्त्रभिप्रेतानीति ज्ञायते तदनुरोधाच्च त्रिभाष्यरत्नकारोपि तैत्तिरीयब्राह्मणारण्यकाभ्यामुदाहरणानि कानिचित्सङ्गृह्णाति यथा–"येव तपति" इति तैत्तिरीयारण्यकपञ्चमप्रपाठकान्तिमपदानि (१८-१) सूत्रव्याख्यायामुदाहृतानि तथा (२४-६) सूत्रव्याख्यायां "द्वादशाग्निष्टोमस्य स्तोत्राणि। प्र नक्षत्राय देवाय। स ईं ममाद महि कर्म कर्तवे" तै. ब्रां. (२-५-८) इति "सिंहे व्याघ्र उत या पृदाकौ" तै. ब्रा. (२-७-७) इति च तैत्तिरीयब्राह्मणादुदाहरणानि सङ्गृहीतानि । एवमेव (२१ ६) सूत्रव्याख्यायां "ऋतस्य धूर्षदम्" तै. ब्रा. (१-२-१) इति तैत्तिरीयब्राह्मणादुदाहृतं (१९-३) सूत्रव्याख्यायामपि "योऽपां पुष्पं वेद" इत्युदाहरणं दत्तं इति–तत्रेदमुच्यते। कृष्णयजुर्वेदसामान्यस्यैव हीदं प्रातिशाख्यमित्यवोचाम। ततश्च तैत्तिरीयसंहिता ब्राह्मणमारण्यकं चेतीदमखिलमेवास्य प्रातिशाख्यस्य विषय इति युक्तमेव तत्तदुदाहरणम् ॥

यत्पुनरुच्यते -अपिच (१८-२) सूत्रव्याख्यायां व्याख्यात्रा संहितायामन्तिमपदत्वेनाभिमतं बन्धुरितिपदमुदाहृतमपि तत्पदमाधुनिकसंहितायां न दृश्यते–इति–तत्तु युक्तरूपमेव अनधिगतसम्प्रदायरहस्यानां याहशताहशकोशनिरीक्षणमात्रेणैव स्वैरं व्याहरताम् । संदृश्यते हि तैत्तिरीयसंहितायाः प्राचीनेषु कोशेषु भूयस्सु बन्धुपदमन्ते । शिष्टाः खलु कतिपये पारायणादेरन्यत्र अन्तिमपदप्रकाशनमहितफलं मन्वानाः श्रद्धातिरेकेण बन्धुपदं नाध्यापयन्ति न लिखन्ति च ॥

यदपि—"सन्ति यद्यपि प्रातिशाख्यकारविस्मृतानि कानिचिल्लक्ष्याणि तैत्तिरीयसंहितायां तथाऽपीदमत्र महदाश्चर्यं हि खलु यदगाधापरिमितप्रक्रियाकार्याणि विषयन्तर्गतानि कुर्वता प्रातिशाख्यकारेणानेन विस्मृतानि लक्ष्याण्येवमल्पीयांसि संवृत्तानीति। विस्मृतानि च लक्ष्याणि तत्र तत्रच टिप्पणीषु मया सूचितान्यपि तानि सर्वाण्यप्यत्र सङ्गृह्य प्रकाश्यन्ते" इत्युपक्रम्य विस्मृतलक्ष्यतया स्वाभिमतान्युदाजिहार कानिचित् तदिदं महासाहसिकत्वमेवास्य यन्महर्षिष्वपि सूत्रकारेषु विस्मरणाद्युत्प्रेक्षणम्। तथा च तदुक्तित एव व्यक्तमिदं दर्शयामः। अयं हि तेन प्रदर्शितः प्रथमो दोषः—रक्षा (१-४-२४) इति पदं तृतीयाध्यायाष्टमसूत्रविधेः बहिर्भूतं न कृतं—इति। 'अवा सचस्वा तुदा मृडा यर्धा शिक्षा रक्षाऽद्या भवा भजा यन्ना चरा पिवा ना धामा धारया धर्या घा वर्धया बोधाऽत्रा तत्रा मुश्राऽश्वस्या पृणस्वा हिष्वा त्वन्तरा जनिष्टा युक्ष्वाऽच्छा" इति हि तृतीयाध्यायाष्टमसूत्रम्। अस्य च अवा इत्यादिषु अनवग्रहेषु अन्त्यस्वरो विभागे व्यञ्जनपरो ह्रस्वमापद्यते इत्यर्थः। "अदब्धेभिस्सवितः पायुभिष्टं शिवेभिरद्य परिपाहि नो गयम्। हिरण्यजिह्वस्सुविताय नव्यसे रक्षा माकिर्नो अघशंस ईशत" इत्यस्मिन् तैत्तिरीयसंहिताप्रथमकाण्डचतुर्थप्रपाठकचतुर्विंशोऽनुवाके रक्षा इत्येतत् पदविभागकाले ह्रस्वतामापद्यत एव कुतस्तद्वहिष्करणाकरणमाक्षिप्यते। रक्ष माकिः इति हि तत्र पदपाठः। "रक्षाः" इति दीर्घविसर्गान्ततया तत्र पदं पठित्वा तत्सूत्राक्षेपस्तु अयुक्तं पठित्वा कुचोद्यं करोतीत्यस्य प्रथमं निदर्शनम्॥

यदपि—देवी (६-१-७) इति पदं प्रथमाध्यायैकपञ्चिसूत्ररीत्या प्रग्रहीकृतमपि वस्तुतोऽप्रग्रहमेव इति सूत्रकाराधिक्षेपणं

म्नातं तथैव भवतीति वाक्यार्थः पर्यवसितः । एतदभिप्रायेणैव त्रिभाष्यरत्न एव एतत्सूत्रोपसंहारे "प्रभृतीति किम् । त्वमग्ने रुद्रः" इति याज्यायां "दिवस्परि प्रथमं जज्ञे अग्निः" इति वाक्यं "अग्नयेऽन्नवते" इत्यत्र "इतः प्रथमं जज्ञे अग्निः" इति पुनरुक्तं सत्तथैव भवेदिति चेत्—मैवं—त्रिपदमात्रादेव तथा भाव इति नात्र वक्तुं युक्तं किन्तु जज्ञे संस्थाने इति जज्ञेग्रहणसामर्थ्यात् । अन्यथा तस्य वैयर्थ्यात्—इत्यभिहितम् । तदेवं सति कथमत्र पाश्चात्याक्षेपस्यावतारः ॥

यदपि—एवमेव अलोपाधिकारे (११-१२) अध्याययोः "येऽन्तरिक्षे" (४-६-११) "ये अपरीषु" (१-४-३३) इति चोदाहरणे न सङ्गृहीते इति सूत्रकाराधिक्षेपणं तदपि वैदिकाभरणाख्यव्याख्याऽनवलोकननिबन्धनम् । वैदिकाभरणे हि स्पष्टमतिप्रसङ्गाप्रसङ्गरूपा दोषास्समुन्मीलिताः । किञ्चात्र- अलोपाधिकारे "येऽन्तरिक्षे' 'ये अपरीषु' इति चोदाहरणे न सङ्गृहीते" इत्युक्तिरसमञ्जसैव । "येऽन्तरिक्षे ये दिवि येषाम्" (४-६-११) इत्यत्राकारलोपस्याम्नायमानत्वेन अलोपाधिकारे सङ्ग्रहानावश्यकत्वात् । प्रत्युत 'यथोक्तं पुनरुक्तं त्रिपदप्रभृति' (१-६३) इति रीत्या सङ्गृहीतत्वेन अतिप्रसङ्गस्यैव तदंशे वक्तव्यत्वात् । वस्तुतस्तु—"यथोक्तं' इति सूत्रे 'कार्यभाजः पदस्य तृतीयत्वं विशेयम्' इति व्याख्याय कार्यभाजः पदस्य तृतीयत्वमिति किम् । 'येऽन्तरिक्षे ये दिवि तेभ्यः' इत्युच्ये' । 'येऽन्तरिक्षे ये दिवि येषाम' इति रुद्रोत्तमानुवाके" इति प्रत्युदाहरणं दर्शयता त्रिभाष्यरत्नकृतैव तत्सङ्ग्रहप्रयुक्तोऽतिप्रसङ्गो निवारितः । न चेदं त्रिभाष्यरत्नकृतो व्याख्यानं क्लिष्टमिति भ्रमितव्यम् । क्लेशलेशस्याप्यदर्शनात । सर्वथा सर्वमिदं पाश्चात्यस्य तांस्तान् ग्रन्थानना-

सादयतः आसादितेष्वपि ग्रन्थेषु साम्प्रदायिकानर्थाननधिगच्छतः व्यामोहैकविलसितमित्यवधेयम् ॥

एतेन—यत्तु—एतल्लक्ष्यद्वयसङ्ग्रहाय (१-६३, ११-३) सूत्रयोः व्याख्यानं त्रिभाष्यरत्नकारेण कृतं तत्र केवलं क्लिष्टं अपि तु सूत्रकारानभिप्रेतमिति च भाति—इत्यपि दत्तोत्तरं वेदितव्यम्। "यथोक्तं" (१-६३) सूत्रे "येऽन्तरिक्षे" इत्येतत्सङ्ग्रहणार्थस्य "त्रयाणां पदानां समाहारस्त्रिपदम् । कार्यभाजः पदस्य तृतीयत्वं विज्ञेयम्" इत्यस्मिन् त्रिभाष्यरत्नकृत्कृतव्याख्याने क्लेशलेशस्याप्यनवगमात् सूत्रकारानभिप्रेततायामपि हेत्वभावात् । 'धाता राति (११-३) इत्यादिसूत्रव्याख्याने तु 'सा या' इति पदद्वयं मन्दधियां प्रतिपत्त्यर्थमिति केचित् । अन्ये त्वन्यथाऽपि कथयन्ति—अस्यानुवाकस्य शेषभूता या ऋगन्यत्र स्थिता साऽपि स्वीकर्तव्येति । यथा "ये अपरीषु पश्यान्" इत्यस्मिंस्तु अतिप्रसङ्गदोषः वैदिकाभरणकृतैवोक्त इति न तत्र पाश्चात्यसंरम्भावकाशः । तथा च वैदिकाभरणे—"धातारातिरुपवाजपेयजुष्टश्येनायोऽप्यभुवक्षितिरियमेवेयुरग्निर्मूर्धा" इत्यादिसूत्रं पठित्वा "इयमेव सा या । चतुष्टोमो अभवत् । ईयुष्टे ये । ये अपरीषु । अन्ये त्वियमेव सा ये ति पठन्तः तत्सहचारित्वादुत्तरानुवाकेऽपि कार्यं भवतीत्याहु । तत्र स्फुटोऽतिप्रसङ्गः । न च सहोपयोगित्वलक्षणं सहचारित्वनियामकम् । तत्रापि 'सम्पश्यामि' इति पञ्चमन्त्रानुवाकेष्वतिप्रसङ्गात" । इति । वस्तुतस्तु—नास्य वैदिकाभरणोक्तस्य दोषस्य प्रसक्तिस्त्रिभाष्यरत्नपक्षे—तथा हि—"इयमेव सा या । इति सा येत्यर्धांशस्य सूत्रे ग्रहणात् व्यर्थं सत्पदं किञ्चिदर्थं ज्ञापयतीति न्यायात् एतदनुवाकशेषभूतस्य ऋगन्तरस्यान्यत्र स्थितस्यापि ग्रहणं ज्ञाप्यते इति हि अस्या-

नुवाकस्य" इत्यादित्रिभाष्यरत्नकारवाक्याक्षरार्थः। 'इयमेव' इत्ये-तदनुवाकशेषभूतं ऋगन्तरं च 'ईयुष्टे ये' इत्येतदेव नान्यत्। "सम्पश्यामि" इत्यादयोऽनुवाकास्तु "उप प्रयन्तः" इत्यनुवाकोत्तरभूता अपि न तावत् 'इयमेव सा या' इत्यनुवाकशेषभूताः। तथा च सति कथं वैदिकाभरणप्रदर्शितातिप्रसक्तिः प्रसरेत्। "अन्ये तु 'इयमेव सा या' इति पठन्तः तत्सहचारित्वादुत्तरानुवाकेऽपि कार्यं भवतीत्याहुः" इत्येवं वैदिकाभरणकृतः त्रिभाष्यरत्नकारमतानुवादस्तु अनुक्तोपालम्भ एव। किञ्च—सहोपयोगोऽपि एकविधिपरिगृहीतैकक्रियाशेषत्वरूपः 'इयमेव सा या' इत्यनुवाकेन 'ईयुष्टे ये' इत्यस्य 'इयमेव सा या प्रथमा व्यौच्छत्' इति षोडश व्युष्टीरुपदधाति—इति कल्पविनियोगदर्शनात्। न खलु तादृशः 'उपप्रयन्तो अध्वरम्' इत्यनुवाकेन सह तदुत्तरानुवाकानां 'सम्पश्यामि' इत्यादीनां दृश्यते। अपि च—'ईयुष्टे ये' इत्यनुवाकः तैत्तिरीयसंहितायां (१-४ प्रपाठके) नैवाम्नायते किन्तु आरण्यके 'चित्तिस्स्रुक्' इति प्रपाठक एवेति भट्टभास्करमाधवाचार्ययोर्मतम्॥

यदपि—"सो अग्निः" "ऊर्ध्वो अस्तात्" (५-२-३) इति लक्ष्यद्वयमप्यलोपाधिकारेऽनुक्तमप्युख्यान्तर्गतत्वेन चरितार्थमभवदिति भाति—इति तदिदं सत्यमेव। तथाचेदं प्रातिशाख्यकारस्य गुण एव न दोष इति कथमिदं दोषोद्घाटनप्रस्तावे समुल्लिख्यते॥

यदपि—एवमेवानुस्वारागमाधिकारे (१६-२६) 'स्वादुपᳲसदः' (४-६-६) "क्षोपᳲसादम्" (२ ६-१) इत्युदाहरणद्वयं न सङ्गृहीतमिति भाति—इति तदपि त्रिभाष्यरत्नादिव्याख्यानानवधारणनिबन्धनमेव। त्रिभाष्यरत्ने हि—"शिशुमार" (१६-२६) इत्यादि सूत्रे एव "संशित" इत्यस्य "ब्रह्मसंशितो होषः" इत्युदाहर-

णमुपन्यस्य "संसद" इति पाठे "स्वादुप॑ःसदः" इत्यभिहितम् । ततश्च "स॑ःशितस्स॑ःसदस्स॑ःसादस्स॑ःशिता" इत्येवं सूत्रपाठावधारणात् "स्वादुप॑ःसदः" (४-६-६) "स्त्रीप॑ःसादम्" (२-५-१) इत्युभयोरपि सङ्ग्रहः । स्पष्टं चेदं कुम्भघोणनगरमुद्रिते त्रिभाष्यरत्नग्रन्थे इति न कथञ्चिदपि सूत्रकारो भगवानृषिरधिक्षेपमर्हति ॥ कोशेषु च केषुचित् मूले संसदसंसादपदद्वयस्यादर्शनं व्याख्याने च तदुदाहरणादर्शनं लेखकप्रमादादेवेति विदांकुर्वन्तु विद्वांसः ॥

एतेन—यद्यपि तैत्तिरीयसंहितातैत्तिरीयप्रातिशाख्ययोः लक्ष्यलक्षणतासाधुत्वविचारे संहितापदसूचनो पदपाठपुस्तकं चात्यावश्यके स्तः ते च न मयाऽधिगते । तथाऽपि मत्कृतः पूर्वपक्षः सिद्धान्तश्च क्वचिन्निर्मूलीभविष्यन्नपि न सामान्यतो निर्मूल इति ज्ञेयं इत्यप्युन्मीलितमिति ध्येयम् ॥

यदप्युच्यते—अयं तावन्मम सिद्धान्तः यदिदं प्रातिशाख्यं अधुनोपलभ्यमानायास्तैत्तिरीयसंहिताया एव लक्षणमिति । इयमेकैव शाखा कृष्णयजुर्वेदीयास्वनेकासु शाखास्विदानीमप्युपलभ्यते । काठकशाखा तु प्रायेण तैत्तिरीयसंहिताया न भिन्ना । तथा च तैत्तिरीयप्रातिशाख्यमित्येतत्प्रातिशाख्यस्य नामधेयं न्याय्यं सार्थं चेति ज्ञेयम् इति—तत्र वदामः—तैत्तिरीयसंहितापदं हि 'इषे त्वा' इत्यादिसप्तकाण्डेष्वेव व्यवह्रियते वैदिकैः नान्यत्र । 'ब्रह्मसन्धत्तम्' इत्यादिषु काण्डेषु तु ब्राह्मणपदमेव व्यवह्रियते न संहितापदं न तरां तैत्तिरीयसंहितापदम् । किञ्च—तेषु ब्राह्मणकाण्डेषु आदितः पारक्षुद्रशाखापदं व्यवह्रियते । अन्त्ये तु काठकशाखापदं स्मर्यते हि—

माध्यन्दिनः कठः कण्वः पारक्षुद्रस्तथा परे।
ये यजुर्ब्राह्मणाचार्याश्शतमेकोत्तरं द्विजाः ॥ इति ॥

इदं च प्रातिशाख्यशास्त्रं सप्तकाण्डीरूपसंहितायाः इव त्रिकाण्डीरूपब्राह्मणभागस्यापि लक्षणमिति च सर्वसम्मतम्। तदेवं सत्यस्य प्रातिशाख्यस्य तैत्तिरीयप्रातिशाख्यमिति कथं नामोपपद्यताम् ॥ एवं—"इयमेकैव शाखा कृष्णयजुर्वेदीयास्वनेकासु शाखास्विदानीमप्युपलभ्यते" इति वदता पाश्चात्येनैव तैत्तिरीयसंहिताऽतिरिक्तानां कृष्णयजुर्वेदीयानां शाखानामनेकासां सद्भावोऽभ्युपगतः। तथा च तासामपीदमेव लक्षणं भवेत् अन्यस्य तल्लक्षणशास्त्रस्यानुपलम्भात् इति कृष्णयजुःप्रातिशाख्यमित्येवास्य नाम समुचितं मन्यामहे। यथा कात्यायनकृतस्य प्रातिशाख्यस्य शुक्लयजुःप्रातिशाख्यमित्याख्या। "काठकशाखा तु प्रायेण न तैत्तिरीयसंहिताया भिन्ना" इत्यपि पाश्चात्यवचनं साहसैकमूलम्। अनादिसिद्धवैदिकव्यवहारतो हि शाखाविशेषनिर्णयः कार्यः न स्वेच्छया। अन्यथा बह्वृचादिशाखाया अपि तैत्तिरीयसंहितात्वापत्तेः। तथा च वैदिकाः 'इषे त्वा' इत्यादिसप्तकाण्ड्यामेव तैत्तिरीयसंहितापदं व्यवहरन्तीति कथं कठशाखायाः तैत्तिरीयसंहितात्वो वदतामभेदः। यदि तु कृष्णयजुरवान्तरभेदस्येव कृष्णयजुर्वेदसामान्यस्याप्यस्ति तैत्तिरीयाख्या यथा द्राविडादिसमाख्या विशेषे सामान्ये च इत्युच्यते तदा कृष्णयजुस्सामान्याभिप्रायेण तैत्तिरीयप्रातिशाख्यसमाख्याऽपि नास्माभिरपोद्यत इत्यवधेयम्। यदा तु तैत्तिरीयैः कृतं प्रातिशाख्यमिति तात्पर्येण तैत्तिरीयप्रातिशाख्यसमाख्योच्यते तदा तु न काचिदनुपपत्तिः ॥

यत्तु—न च तैत्तिरीयैः कृतं प्रातिशाख्यं तैत्तिरीयप्रातिशाख्यमिति मन्तव्यम्। यतोऽस्मिन् ग्रन्थे कृष्णयजुर्वेदीयशाखान्तराचल-

र्षिभिस्साकमनेकाचार्यान् नामतोऽनूद्य पञ्चमाध्यायैकचत्वारिंशत्सूत्रे मीमांसकानां मतं त्रयोविंशाध्यायचतुर्दशसूत्रे आह्वारकानां मतं त्रयोविंशाध्यायपञ्चदशसूत्रे तैत्तिरीयाणां मतं चानूदितं दृश्यते । न हि ग्रन्थकारास्स्वग्रन्थेषु परमतं परनाम्नेव स्वमतं स्वनाम्ना निर्दिशन्ति । ग्रन्थकृतामस्मच्छब्देन स्वमतनिर्देशस्सार्वत्रिकः इति—तत्तु आस्माकीनग्रन्थकारसम्प्रदायानधिगमनिबन्धनं "मनुरब्रवीत्" "तदुपर्यपि बादरायणः" इत्यादौ ग्रन्थकृतां स्वनाम्नैव व्यवहारदर्शनात् । प्रत्युत अस्मच्छब्देन ग्रन्थकृतां व्यवहारस्यैव क्वचिदपि प्राक्तननिबन्धेष्वदर्शनात् ॥

यदपि—अपि च यदत्र ग्रन्थे तैत्तिरीयमतत्वेनोपन्यस्तं न तदेतत्प्रातिशाख्यस्य मतं—इति—तदपि, साहसमेव । प्रातिशाख्येऽत्र तैत्तिरीयमतत्वेनोपन्यस्तस्य स्वमतताया एव वैदिकाभरणकृता स्पष्टीकृतत्वात् । तथाच—"मन्द्रादयो द्वितीयान्ताश्चत्वारस्तैत्तिरीयकाः" (२३-१७) इति सूत्रव्याख्याने—"तेषु मन्द्रादयो द्वितीयान्ताश्चत्वारस्स्वराः प्रतिलोमक्रमेण मन्द्रचतुर्थतृतीयद्वितीयास्तैत्तिरीयका भवन्ति । तित्तिरिणा प्रोक्तं तैत्तिरीयं अस्मच्छाखा । तत्र भवास्तैत्तिरीयकाः 'धन्वयोपधाद्वुञ्' इति वुञ्। यथाक्रममस्मत्स्वाध्यायवर्तिनः अनुदात्तस्वरितप्रचयोदात्ता भवन्तीत्यर्थः।" इति वैदिकाभरणम् ॥

यदपि च—इदं चात्र सुगमं—यदधुनोपलभ्यमाना तैत्तिरीयसंहिता तदीयप्रातिशाख्यलक्षणस्य च क्वचित् विरुद्धेति। तथा हि—नवमाध्यायद्वितीयसूत्रेऽघोषपरस्य विसर्जनीयस्य श्रुत्यभावः विहितः । एवं पञ्चमाध्यायचतुर्विंशतिसूत्रे शचछपरस्य नकारस्य श्रुत्यभावः विहितः । एवं पञ्चमाध्यायपञ्चविंशतिसूत्रे लपरनकारस्यापि श्रुत्यभावः विहितः । एवं पञ्चमाध्यायस-

यस्त्रिंशत्सूत्रे पदान्त्यटकारपदादिसकारयोः मध्ये नकारसकारयोः मध्ये च ककारागमः विहितः। चतुर्दशाध्याये च द्वित्वागमादीनि कार्याणि विहितानि। एतानि च सर्वाणि मुद्रितायां लिखितायां वा संहितायां न दृश्यन्ते। अतः विभेः सम्प्रदायोऽन्य एवेति स्पष्टं ज्ञायते—इति—तत्रोच्यते—विद्वदेकसमधिगम्याः किल केचन विशेषाः प्रातिशाख्यगताः। लेखकास्तु प्रायोऽविद्वांस एवेति कथं नाम तांस्तान् विशेषान् ते लिखेयुः। न खलु लेखकालेखनमात्रेण सम्प्रदायस्यान्यथात्वम्। विद्वदध्यापकैः पठनपाठनयोस्तत्तद्विशेषस्यानुसन्धानादिभिरनुवर्त्यमानत्वात्। वर्णक्रमाध्येतृभिश्च स्पष्टमेते विशेषाः पाठेन परिपाल्यन्ते इति स्फुटं सम्प्रदायविदाम्॥

यदपि—अपिचानुस्वारस्य प्रत्येकाक्षरत्वं संहितायामङ्गीकृतमिति न स्पष्टं ज्ञायते। प्रातिशाख्ये त्वत्र अनुस्वारस्य प्रत्येकाक्षरत्वं वा उत स्वरविकाररूपता वेत्येतत्सन्दिग्धमेव संवृत्तं यथा द्वितीयाध्यायत्रिंशत्सूत्रे इति—तत्रोच्यते। 'अनुस्वारोत्तमा अनुनासिकाः' (२-३०) इति सूत्रेण अनुस्वारस्य प्रत्येकाक्षरताया एवाभ्युपगतत्वात्। स्पष्टं चेदं तत्रैव वैदिकाभरणे—अनुस्वारश्च उत्तमाश्च आनुनासिक्यगुणयुक्ता भवन्ति। अनुस्वारो व्यञ्जनं वा स्वरो वेति परमतम्। तन्निरासार्थमिदमुच्यते। अनुस्वारोऽप्युत्तमवद्व्यञ्जनमेवास्मच्छाखायाम्। अर्धगकाररूपत्वात्। इति॥

यदपि - किञ्च—अनुवाकेषु पञ्चाशत्पदपरपर्यायखण्डिकाविभागः एतत्प्रातिशाख्यकाले नासीदेव। यतः सति तादृशखण्डिकाज्ञाने तृतीयाध्यायत्रयोदशसूत्रे "उदमर्सी" इति पाठं प्रातिशाख्यकर्ता न कुर्यात् इति—तत्रोच्यते—पञ्चाशत्पदपरपर्यायखण्डिकाविभागो हि अध्यापकैरध्ययनसौकर्याय परिकल्पितः। तथा

च ऋङ्मध्ये यत्र पञ्चाशत्पद्यनुरोधेन विच्छेदः क्रियते सोऽयं पौरुषेयः । आम्नायस्तु तत्र अविच्छिन्नसंहितारूपेणैव । तथा च "ते ते धामान्युश्मसी गमध्ये गावो यत्र भूरिशृङ्गा अयासः" इत्यर्धर्चस्य अविच्छिन्नसंहितयैवाम्नायात् पदकाले ह्रस्वत्वाय "उश्मसी" इति पठनं युज्यत एव सूत्रकृतः । न चेयता पाठसौकर्यार्थकल्पितस्यासंहितपाठस्य प्रातिशाख्यसूत्रकारकाले सतोपि काचिदनुपपत्तिरुपलभ्यते । "यूपं ते ते धामानीति वैष्णवीभ्यां ऋग्भ्यां कल्पयति" इति कल्पसूत्रकारैर्विनियोगानुरोधादपि ते ते धामानीति ऋग्विनियोगकाले "उश्मसी गमध्ये" इत्यविच्छेदेनैव पठ्यते याज्ञिकैः । "वैष्णव्यर्चा कल्पयति वैष्णवो वै देवतया" (सं. ६-३-४) इति च ब्राह्मणम् । प्रातिशाख्यकाले तादृशखण्डिकाविभाग आसीदेवेति न वयमधुना प्रतिजानीमहे । तथा विभागसद्भावे भवदुक्तं बाधकमसदित्येवास्माकमाशयः ॥

यदपि—अन्यच्च दशमाध्यायैकोनविंशसूत्रे अवावादेशसम्बन्धिवकारलोपो विहितः यकारलोपोपि साङ्कृत्यमतेनेतिदशमाध्यायैकविंशतिसूत्रेण दर्शितः तथाऽपि संहितायां तादृशवकारोऽलुप्त एव दृश्यते—इति—तत्रोच्यते—ईदृशविधिविकल्पेषु हि कश्चिदेव विधिरभिमतः सूत्रकृतोऽस्य । विध्यन्तराणि तु पराभिमतानीति व्याख्याकारैरेव स्पष्टीकृतम् । तथा च "वकारस्तु साङ्कृत्यस्य" इत्यस्मिन् सूत्र एव—"सान्निध्यान्निषेधो लभ्यते । साङ्कृत्यस्य मते अवर्णपूर्वो वकारो न लुप्यते । यकारस्तु लुप्यत एवेत्यर्थः । वायविष्टये । अहावनदत । पूर्वाचार्यमतनिवर्तकस्तुशब्दः । सूत्रमिदमेवेष्टम् । न तु पूर्वद्वयं परद्वयं च" इति त्रिभाष्यरत्नम् । वैदिकाभरणेऽप्येवं दृश्यते । महाभाष्यकारोपि—"व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्" इतीदृशसन्दिग्धस्थलेषु सम्प्रदायानुसारिव्याख्यानमेव शा-

रणमाह । ततश्च "वकारस्तु साङ्कृत्यस्येतिसूत्रानुसारिणी तैत्तिरीयसंहिता दृश्यत इति कथं प्रातिशाख्यतल्लक्ष्ययोर्विरोधस्सभुज्जृम्भताम् । वस्तुतस्तु—सर्वेऽप्येते विधयः सूत्रकाराभिमता एव । तेष्वेकैकविधिकल्पं परिगृह्य एकैकशाखाम्नायः प्रवर्तते । तथा च यान्येतान्यापस्तम्बसूत्रिभिरस्माभिरधीयमानानि संहिताब्राह्मणारण्यकानि तानि "वकारस्तु साङ्कृत्यस्य" इत्यनुशासनमनुसृत्य पठ्यन्तेऽस्माभिः । शाखान्तरं तु विध्यन्तरमनुसृत्येति न कोऽपि दोषः । अतोऽपि च याजुषनानाशाखासाधारणत्वं प्रातिशाख्यशास्त्रस्यास्य फलति ॥

एतेन—अपि च स्वरितात्पूर्वं स्वरितस्य कम्पस्संहितायां सर्वत्र यथानिमित्तं दृश्यते । प्रातिशाख्ये तु स च कम्पः परमतविपयत्वेन एकोनविंशाध्याये तृतीयसूत्रेऽनूदितः—इत्यपि दत्तोत्तरं वेदितव्यम् ॥

यदपि च—अपि च पञ्चदशाध्यायाष्टमसूत्रेण विहितायानुनासिक्यस्तुतौ किं परमतेन? उत प्रातिशाख्यकारमतेनेत्येतत्सन्दिग्धं—इति—तत्रोभयत्राप्युच्यते—प्रातिशाख्यशास्त्रेऽत्र हि विधिविकल्पेषु तुशब्दघटितं शास्त्रं सूत्रकारानुमतमिति सम्प्रदायः । तथा च (१५-८) सूत्रे "तुशब्दः परमतं व्यावर्तयति । अपिशब्दस्समुच्चये । तेनेदं स्वमतमिति सिद्धम्" । इति वैदिकाभरणम् । इत्थं च "वकारस्तु साङ्कृत्यस्य" (१०-२१) इति सूत्रे साङ्कृत्यमतानुमतत्वेनोक्तोऽपि वकारलोपनिषेधः तुशब्देन स्वाभिमतत्वेनापि द्योतितः । तदनुसार्येवायं साम्प्रतिकसंहितापाठोऽस्माकमुपलभ्यते । एवं "अकारस्तु संहितायामपि" (१५-८) इति सूत्रविहितमानुनासिक्यमपि तुशब्दबलात्स्वमतत्वेनैव संसूचितम् । तदनुसार्येव चास्माकमाम्नायः

"सुश्लोकां ४" इत्यादौ दृश्यते इति नोक्तो विरोधः न वा सन्देहः ॥

यत्तु—अपि च स्वरितात्पूर्वं स्वरितस्य कम्पस्संहितायां सर्वत्र यथानिमित्तं दृश्यते। प्रातिशाख्ये तु स च कम्पः परमतविषयत्वेन एकोनविंशाध्याये तृतीयसूत्रेऽनूदितः इति । तत्रोच्यते—तत्र परमतीयत्वेनोक्तेर्न स्वानभिमतत्वे तात्पर्यं अपि त्वर्थान्तर एवेति हि वैदिकाभरणकृता एकोनविंशाध्यायान्तिमसूत्रे सावतरणं विवृतम् । तस्मात् न इमे सर्वेऽप्याक्षेपाः प्रातिशाख्यसम्प्रदायव्याख्यानानधिगममूलका एवेत्यवधारयन्तु निपुणाः ॥

यदपि—प्रथमाध्याये (४६-४७) सूत्रयोः निर्दिष्टं स्वरितस्वरूपं तस्मिन्नेवाध्याये (४४-४५) सूत्रयोर्वर्णितं च स्वरितस्वरूपमन्यदेवेत्यतः कीदृशं स्वरितलक्षणमेतत्प्रातिशाख्यकाराभिप्रेतमित्येतत्तु सन्दिग्धमेवेति—तदपि त्रिभाष्यरत्नायनवबोधनिबन्धनम् । प्रथमाध्यायस्य षट्चत्वारिंशे सूत्रे "तस्यादिरित्यारभ्याभिहितेऽस्मिन् विकल्पजाते सूत्रमेतदेवेष्टम् । 'प्रश्लिष्टप्रातिहतयोर्मृदुतरः' (२०-११) 'तैरोव्यञ्जनपादवृत्तयोः' (२०-१२) इति लक्षणानुकूल्यात् । न तूपरितनमपि सूत्रमिष्टं एतल्लक्षणप्रातिकूल्यात्" इति त्रिभाष्यरत्नसन्दर्भे षट्चत्वारिंशसूत्रोक्तस्यैव स्वरितस्वरूपस्य एतत्प्रातिशाख्यकाराभिमततायास्स्थापितत्वात् ॥

एतेन—प्रायेण प्रथमाध्याये (४४-७) सूत्राणि प्रक्षिप्तानि स्युः—इत्यपि परास्तम् । प्रक्षेपोत्प्रेक्षाहेतोः कस्याप्यनभिधानात् ॥

यदपि—एवं द्वितीयाध्याये (१९) सूत्रे अनुस्वारस्वरभक्तिलक्षणे विवादग्रस्ते इति—तदपि न सत् । तस्मिन्नेव सूत्रे एकेषामित्युक्त्या तत्सूत्रोक्तस्य स्वरभक्तिधर्मस्य एकीयमतानुसारितास्फोर-

णात्। स्वमते च स्वरभक्तीनां आनुनासिक्यस्यैव द्वितीयाध्यायत्रिंशसूत्रे प्रातिशाख्यकृता "अनुस्वारोत्तमा अनुनासिकाः" इतिसूत्रेऽभिहितत्वात्। स्पष्टं चेदं (२-१९) सूत्रे त्रिभाष्यरत्ने वैदिकाभरणे चेति। यदपि च—बहूनि च प्रक्षिप्तान्यत्र प्रातिशाख्ये लभ्यानीति दृश्यन्ते। (१७ ८. २२-१४, १९. २३-२, १४, १६, २०. २४-५,.६) सूत्रेषु विहितानि छन्दोलक्षणानि प्रक्षिप्तानीति भाति। तान्येतानि प्रातिशाख्यान्तरसाधारणानि स्वभावत एव प्रक्षिप्तानीति ज्ञायते इति—तदपि प्रक्षेपोत्प्रेक्षाहेतोः कस्याप्यनिरूपणात्साहसमात्रमेव। न खलु प्रातिशाख्यान्तरसाधारणार्थत्वमेव प्रक्षेपहेतुः। साधारणार्थानामपि विशेषविध्यनुरोधेनैव तत्र तत्र शास्त्रेषु बहुधा प्रतिपादनदर्शनात्। अन्यथा साधारणार्थानां क्वचिदपि प्रतिपादनासम्भवे अशास्त्रीयत्वमेव सर्वथाऽऽपद्येतेति न किञ्चिदेतत्, दृश्यन्ते हि शुक्लयजुःप्रातिशाख्यादौ "अन्त्याद्वर्णात्पूर्व उपधा" (१-३५) इत्यादयस्साधारणा अप्यर्था बहुधा समनुशिष्टाः॥

यदपि—एकप्रकरणस्थानि चान्यप्रकरणे सप्रक्रमभङ्गं दृश्यमानानि सूत्राणि तत्तत्स्थलेषु क्रमभङ्गं कुर्वन्तीत्येष प्रक्रमभङ्गोऽन्यः। क्रमभ्रष्टानि च सूत्राणि यथा-प्रथमाध्याये (२५, २६, २७, ६०) सूत्राणि. सप्तमाध्याये (१३, १४) सूत्रे. चतुर्दशे (१२-१३) सूत्रे. पञ्चदशे (६, ७, ८, ९) सूत्राणि। एषु च सूत्रेषु सप्तमाध्यायस्य त्रयोदशचतुर्दशसूत्रे तु प्रातिशाख्ये अवश्यारम्भणीये एव। तथाऽपि क्रमभङ्गो दुष्परिहरः इति। तदसारम्-प्रथमाध्यायद्वाविंशसूत्रे हि "ग्रहणस्य च" इत्यत्र सूत्रगतस्य अकारान्तस्य प्रातिपदिकग्रहणपरत्वं कथितम्। तत्र आसन्नानासन्नयोरुभयोस्सम्भवे आसन्नस्यैव ग्राहकं भवतीति नियमपरं (२९) सूत्रं सङ्गतमेव॥

एवं तदुत्तरं "अनेकस्यापि" इत्येतदपि सूत्रं (१-२६) नियम-

परतयैव प्रवृत्तमिति सुसङ्गतम्। तदेवं सूत्रद्वयं संज्ञाप्रकरणे प्रक्रान्तसंज्ञापरतया प्रवृत्तम्। (१-२७) सूत्रं तु संज्ञारूपमेवेति नास्त्यसङ्गतिवार्ताऽपीति विभाव्यताम्। एवं प्रथमाध्यायस्य पश्चिमं "नानापदीयं च निमित्तं प्रग्रहस्यादिषु" इत्येतत्सूत्रमपि न क्रमभ्रष्टम्। तत्पूर्वसूत्रे हि "उपबन्धस्तु देशाय नित्यम्" इत्यस्मिन् उपबन्धस्य पदपाठादौ पृथग्भूतस्यापि स्वकार्यकरत्वमनुशिष्टम्। तद्वदेवोत्तरस्मिन् सूत्रे निमित्तविशेषस्य पृथग्भूतस्यापि स्वकार्यकरत्वमुपदिश्यते इति कुतः क्रमभ्रंशाशङ्का॥

सप्तमाध्याये तु "आघापपूर्वस्तष्टम्" "थश्च ठम्" इत्येते सूत्रे (७-१३, १४) णत्वविधिनिषेधमध्यपातितया यद्यपि क्रमभ्रष्टे तथाऽपि मूर्धन्यभूतणत्वविधिप्रसङ्गात् मूर्धन्यभूतटठविधी समारब्धावत्रैव। ततश्च अधिकृतणत्वनिषेध इति नासङ्गतिः। दृश्यन्ते हि बहुधा शास्त्रान्तरेष्वपि प्रासङ्गिका विधयः परश्शतमित्थमेव निर्वाह्याः। पूर्वतन्त्रे च मन्त्रलक्षणादिकं प्रासङ्गिकतयैव समादधिरे॥ वैदिकाभरणकारस्तु—आघापपूर्वस्तष्टमितिसूत्रपाठमभिप्रयन् स्पूर्वानुवृत्तिलोभादत्रैव णविधिनिषेधमध्ये आघापूर्वस्य टविधिरारभ्यते। आरब्धे च तस्मिन् लाघवात् पपूर्वस्यापि टविधिरत्रैव योज्यते। समनन्तरं च पपूर्वत्वानुवृत्तिलाघवात् थस्य ठविधिरप्यत्रैवेति समादध्यौ॥

एवं चतुर्दशाध्यायस्य द्वादशत्रयोदशे सूत्रे "प्रथम ऊष्मपरो द्वितीयम्" "वाडभीकारस्यासस्थानपरः" इत्येते सूत्रे अपि न क्रमभ्रष्टे। पूर्वं स्पर्शस्य वर्गीयप्रथमागमविधेः प्रसक्ततया समनन्तरं वर्गीयद्वितीयागमविधेस्सुसङ्गतत्वात्। यद्यपि वर्गीयप्रथमोद्देश्यकः उत्तमतृतीयादिविधिरष्टमेऽस्तीति तत्रैवायमारब्धुमुचितः। तथाऽपि अष्टमे "अथ प्रथमः" इत्यधिकारः पदान्तमात्रविषयकः। अयं च विधिः पदान्तापदान्तोभयसाधारण इत्यत्रैव चतुर्दशाध्याये समारब्धः।

स्पष्टं चेदं वैदिकाभरणे चतुर्दशाध्यायद्वादशसूत्र एवेति ॥

एवं—पञ्चदशाध्यायस्य षष्ठादीनि चत्वारि सूत्राण्यपि न क्रमभ्रष्टानि । पञ्चदशोपक्रमे हि "न कारस्य रेफोष्मयकारभावाल्लुप्ते च मलोपाच्च पूर्वस्वरोऽनुनासिकः" इति सूत्रे अनुनासिको विहितः ततो द्वितीयादिभिः सूत्रैश्चतुर्भिस्तत्प्रतिषेधेन अनुस्वारो विहितः । ततष्षष्ठे सूत्रे अप्रग्रहसंज्ञानां समानाक्षराणां आनुनासिक्यं विहितमेकेषामनुमतम् । एवं सप्तमाष्टमसूत्रे अपि आनुनासिक्यविधिपरे एवेति नैतानि सूत्राणि क्रमभ्रष्टानि । नवमे तु "सर्वमेकयमं पूर्वेषाम्" इति सूत्रे सर्वस्य वर्णजातस्य ऐकश्रुत्यविधायके यद्यप्यस्ति क्रमभ्रंशः अनुनासिकानुस्वारविधिप्रकरणविरोधात् । तथाऽप्यस्य नवमसूत्रस्य ऐकश्रुत्यविधायकत्वं प्रथमं व्याख्याय समनन्तरं "अथापरे कथयन्ति—सर्वमेकस्वरमनुनासिकं भवतीति । समानाक्षरमात्रापेक्षामधिक्षेप्तुम्" इत्येवं आनुनासिक्यविधिपरतयैव त्रिभाष्यरत्ने व्याख्यानाच्च क्रमभ्रंशशङ्काऽवसरः ॥

एवं-षोडशाध्यायस्य चतुर्विंशसूत्रत्वेनाभिमते "ऐकार उत्यस्य नितान्तः" इत्यस्मिन् सूत्रेऽपि न क्रमभङ्गश्शङ्कनीयः। पूर्वसूत्रे हि 'रंहै' इत्यस्मिन्ग्रहणेऽनुस्वारागमे विहिते प्रसङ्गात्तस्मिन्नेव ग्रहणे ऐकारस्य नितान्तापरपर्यायं तीव्रतरप्रयत्नत्वं विहितं लाघवलोभात्। प्रकरणान्तरे हि तस्य निमित्तत्वे विधीयमाने 'रंहै' इति शब्दस्य रूपं पृथक्परिगृह्यैव विधातव्यमिति गौरवं स्यात् । प्रासङ्गिके चार्थे न क्रमभ्रंशशङ्का प्रसङ्गसङ्गतेरेव सद्भावात् ॥

एव-द्वाविंशाध्यायस्य तृतीयप्रभृति षट्सूत्र्यपि न क्रमभ्रष्टा शब्दप्रकृतिभेदयोः प्रथमद्वितीयसूत्राभ्यामुक्तौ "तत्र शब्दद्रव्याण्युदाहरिष्यामः" इति तृतीयसूत्रे शब्दस्वरूपादिनिर्धारणार्थानां शास्त्रे-

वश्यापेक्षितानां परिभाषणामुपस्थितौ तासां कथनं प्रतिज्ञाय चतुर्थादिभिः पञ्चभिस्सूत्रैरेतच्छास्त्रीयपरिभाषाणां कथनात् क्रमभ्रंशशङ्काया अनुत्थानात् ॥

यदपि-" इदं तावदन्यद्वैलक्षण्यमेतत्प्रातिशाख्यस्य यदत्र व्याकरणशास्त्रप्रसिद्धाः पारिभाषिकशब्दा न प्रायोऽयन्तेति। नापि तानि पारिभाषिकपदान्यत्रावश्यकानि। यतः प्रक्रियासाम्यमनुसृत्य पदं वा पदवृन्दं वा नात्र लक्षीक्रियते। अपि तु संहितास्थं तत्तत्पदं पदोपपदानि वा पृथक्कृत्वा सविस्तारं लक्षणं क्रियते" इत्युपक्रम्य "यद्यपि त्रयोदशाध्याये (१५)सूत्रे अलोपपदेन षोडशाध्याये (२५) सूत्रे सङ्ख्यास्वितिपदेन च व्याकरणपद्धतिमनुसृत्य सामान्यविधिः कृतः तथाऽपि तादृशसामान्यविधिद्वयस्यापवादबाहुल्येन कृतस्सङ्कोचः सामान्यविधिमनभिरोचनीयमेव करोति" इत्यभिहितं तदिदं तस्यैव मनोरमम्। तयोर्विध्योरपवादादर्शनात् ॥

यदपि-त्रिभाष्यरत्नकारोऽयं व्याख्याता न गुरुपरम्पराप्राप्तप्रातिशाख्यावबोध इति स्पष्टमवभासते। यतोऽयं गुरुपरम्पराप्राप्तवैदुष्य इव सुनिश्चितं निस्संदेहं च न सूत्राणि व्याचष्टे—इति त्रिभाष्यरत्नकारमाक्षिपति-तन्मन्दं सम्प्रदायाधिगतार्थेनापि व्याख्यात्रा-अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्। अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥ इत्याद्यनुरोधेन सूत्राणां विश्वतोमुखतया इत्थमप्यस्य विवृतिस्सम्भवतीति प्रदिदर्शयिषया कृतानां व्याख्याविकल्पानामुपपत्तेः। दृश्यते हि सम्प्रदायाधिगततत्त्वार्थानामपि पुरुषाणां स्वबुद्धिकौशलावेशेन साम्प्रदायिकार्थेषु अनुपपन्नताप्रतिसंहितिः तामनुरुन्धानाश्च स्वबुद्धिकौशलविलसितानि निबन्धेष्वपि निष्टङ्कयन्ति। न चैतावता तेषां सम्प्रदायानधिगमदशक्यदशङ्कितुम्॥

यदपि—यद्यपीदं प्रातिशाख्यं प्रमाणश्रद्धेयशास्त्रमिव तद्धस्तं

गतम् तथाऽप्यसौ व्याख्याता कानिचित्सूत्राणि नावगन्तुं शक्नोति। कानिचिच्चासम्पूर्णानि मत्वा पदाध्याहारेण पूर्णीकर्तुं प्रयतते। कानिचिच्च स्वस्य स्वशाखीयानां च मतस्य विरुद्धानीति विरोधपरिहाराय प्रयतते। इति त्रीणि दूषणान्याह व्याख्यातॄर तत्र प्रथमम सिद्धम्। इतरत् द्वितीयं तु न दूषणीभवितुमुचितम्। तथ हि यत्तावत् समनन्तरमेव "यथा–१–१९, २१. १३–१६. १४–५, ११. १७–५. २१–७. सूत्रेषु स्वव्याख्यानेन साकं व्याख्यान्तराण्यपि व्याख्यातृनामनिर्देशं विनोपन्यस्यति" इत्युक्तं तदिदं कस्य दोषस्य स्थापनायेति न वयं विद्मः। न खलु अन्यकृतव्याख्यानानुवादमात्रेण वा तत्तद्व्याख्यानकर्तृनामानिर्देशेन वा अनुवक्तुरनभिज्ञता सम्भाव्यते॥

एतेन–(२-१९,२१) सूत्रयोः स्वव्याख्यानं स्वपूर्वाचार्यानुमतामितिवदति इत्युक्तिरपि निरर्थिकेति व्यक्तीकृतम्। वदतु नाम तथा। तावता तथा वक्तुः को दोषः प्रसज्यताम्॥

यदपि—(२-१४. ४-४०. ८-१९,२०, २२. १८-७) सूत्रेषु स्वपूर्वाचार्ययोः वररुचिमाहिषेययोः परस्परं विरोधं दर्शयति। इति तदपि न व्याख्यातारं दोषस्थापनायालम्। वररुचिमाहिषेययोः प्राचीनयोर्व्याख्यात्रोर्विरोधसद्भावमात्रेण तदनुवादकस्य त्रिभाष्यरत्नकारस्य दोषासंस्पर्शात्॥

यदपि—प्रायेणैते सर्वेऽपि विवादाः तुशब्दचशब्दाद्यर्थरूपानल्पविषयानुद्दिश्य कृताविर्भावाः केशार्धैर्धाकरणप्रयासप्रायाः भरतगण्डीयेभ्य आर्येभ्यो रोचन्ते इति—तदिदं सूत्रशैलीतत्त्वानवबोधनिबन्धनम्। सूत्रेषु हि संक्षेपार्थप्रवृत्तेषु चशब्दतुशब्दादयो न व्यर्थमुपादीयन्ते। अतोत्र सूत्रेषु समुपात्तानां तेषां शब्दानां प्रयोजनविचाराः व्याख्यातृभिः प्रवर्तिताः कथं नाम केशार्धैर्धाकरणप्रयास-

प्राया भवेयुः। न खलु महर्षिसूत्राणीमानि पृथग्जनवृथाजल्पितानि। येन वृथापदजटिलताऽप्यत्र विपह्येतेति ॥

यदपि—(८-२०) सूत्रे उत्तमोत्तरीय इति ,कस्यचिदाख्येत्येकः पक्षः। द्वावुत्तमोत्तरीय इति कस्यचिदाख्येत्येकः पक्षश्च प्रदर्शितः। तदनयोः कतरः प्रमाणमिति तु न निर्धारितमिति—तदेतदपि न व्याख्यातृत्रिभाष्यरत्नकारदूषणायालम्। प्राचीनव्याख्याकर्त्रोः वररुचिमाहिषेययोरनुमतौ ह्येतौ पक्षौ। तयोः प्रदर्शनमात्रेणैव कृतार्थोऽयं त्रिभाष्यरत्नकारः। यत्र हि तयोस्तारतम्यं स्वरूपव्याक्रियामात्रेणैव सुग्रहं तत्र ह्येकतरपक्षसाधुतानिर्धारणायानिबद्धपरिकरा एव प्रबन्धकाराः प्रायः ॥

यदपि—(२-२. १४-६,२२. १५-९. २३-१७) सूत्रेषु सूत्रकाराभिप्रेतं सूत्रार्थमजानान एवोहापोहबलेन नानाविधं सूत्राणि व्याचष्टे। तेषु नानाविधार्थेषु नैकोपि समञ्जसो भवति। यत्र चैषु स्थलेष्वेकधैव व्याचष्टे तच्च न हृदयंगममिति—तदप्यसमञ्जसप्रज्ञताविलसितमेव। त्रिभाष्यरत्नकारकृतव्याख्यानेष्वसमञ्जसतां प्रतिजानानेन हि सा सोपपत्तिकमुपपादनीया। न खलु प्रतिज्ञामात्रात्कस्यचिदर्थस्य सिद्धिर्भवति। वयं तु सुनिपुणं निध्यायन्तोपि तदुल्लिखितसूत्रेषु त्रिभाष्यरत्नकारकृतानां व्याख्यानां न लेशतोप्यसामञ्जस्यं बुध्यामहे ॥

एतेन—२-१२. ४-४. ५-२९. ७-११. १४-३. सूत्रेषु स्पष्टार्थेष्वपि कारणं विनाऽपि विपरीतार्थे प्रयतमानोसौ खिद्यति। १-६१. ३-१, ८-१६ ११-३, १६-२६. सूत्रेषु सूत्रकारस्य विस्मृतिप्रमादौ परिहरिष्यन्महाक्लेशेन सूत्राणि व्याचष्टे। कचिच्च १-५८. १३-४. २१-१४, १६ सूत्रेषु स्वस्य स्वपूर्वाचार्यवररुच्यादीनां च यदिष्टं सूत्रकारानभिप्रेतं च तत्सूत्रकाराभिप्रेतमिति सूत्राण्यर्थयितुं प्रयतते—

इत्यपि प्रत्युक्तम् । त्रिभाष्यरत्नकृदुक्तस्य सूत्रार्थस्य सूत्रकारानभिमततया अनुपपादनात् ॥

यदपि—प्रयतमानश्चेत्थं सूत्रकारकृतेषु परमतानुवादेषु कांश्चित्सूत्रकाराभिप्रेतान्मन्यते । यथा त्रयोदशाध्यायषोडशसूत्रोक्तं दुद्दिळष्ळस्थानीयं डकारं पौष्करसादिमताभिप्रेतं सूत्रकाराभिप्रेतमिति सूत्रं व्याचष्टे । एष च डादेशः एतत्प्रातिशाख्यसंहितोभयबाह्य इति सम्प्रदायात् ज्ञायते इति—तदप्यतिसाहसिकतामेवास्य प्रपञ्चयति । "मृडातीदृशे" "तेनो मृडयन्तु" इत्यादौ तैत्तिरीयसंहितायां ळकारस्थाने डकाराध्ययनस्य साम्प्रदायिकतायास्सुप्रसिद्धत्वात् ॥

यद्यपि—मृड सुखने इत्येव धातुः पठ्यते । तथाऽपि "डढौ ळळ्हावेकेषाम्"* (४-१४४) इति शुक्लयजुःप्रातिशाख्यादितः समानपदे स्वरमध्ये सामान्यतः डकारस्य ळकारादेशविधानात् मृडयतीत्यादौ डकारे ळकारस्य शाखान्तरे प्रसक्तत्वात्तद्विनिवृत्त्यै विधानमिदमस्माकं सफलमेव ॥

एतेन—चतुर्दशाध्याये तृतीयसूत्रे परमतत्वेनोक्तान्यपि ळकारादिवर्णद्वित्वानि स्वमतत्वेन परिगृहीतानि—इत्यपि प्रत्युक्तं वेदितव्यम् । वर्णक्रमे तैत्तिरीयशाखायामस्यां लवकारपूर्वस्पर्शद्वित्वस्यैव साम्प्रदायिकत्वात् ॥

यदपि—१४-१७ सूत्रे प्लाक्षिमतमपि प्रथमपरोष्मद्वित्वविषया प्रक्रिया स्वमतत्वेनाङ्गीकृता । तथा चैतदर्थानुरोधेन २१-१६ सूत्रं १४-२६ सूत्रभागं चापार्थयति इति—तदपि विपरीतमतेस्तस्यैव शोभनम् । "प्रथमपरश्च प्लाक्षिप्लाक्षायणयोः" (१४-१७) इति सूत्रे

* डकारढकारौ एकेषामाचार्याणां मतेन यथासङ्ख्यं ळकारळ्हकारावापद्येते । यथा—ईळे । अषाळ्हा । इति वृत्तिः ॥

हि ग्लाक्षिमतत्वेन सूत्रकृता निर्दिष्टं प्रथमपरस्योष्मणो द्वित्वप्रतिषेधनम्। तदिदं प्रथमपरोष्मणो द्वित्वप्रतिषेधनं ग्लाक्षिमतत्वेनोल्लिखितमपि सूत्रकृतस्स्वानुमतं यदि न स्यात् तदा प्रथमपरस्याप्यूष्मणो द्वित्वं स्वानुमतं भवेत्। तथा च सति "न क्रमे प्रथमपरे" (२१-१६) इति सूत्रे ऊष्मणः क्रमे सति तस्मिन्नूष्मणि प्रथमपरे वा सति न स्वरीभवति इत्यर्थके "प्रथमपरे" इत्यंशो विफलस्स्यात्। प्रथमस्वरस्याप्यूष्मणः स्वमते द्वित्वावश्यकत्वेन क्रमे इत्यनेनैव "वर्ष्टा" इत्यादीनां सङ्ग्रहसम्भवात् प्रथमपरोष्मणो द्वित्वस्यैव स्वमतत्वमाश्रित्य "न क्रमे" इति सूत्रे 'प्रथमपरे' इत्यस्य क्रमविशेषणतामाश्रित्य ऊष्मणः प्रथमपरे द्वित्वे स्वरभक्तिर्न भवति। इत्यर्थकरणे "वर्ष्टा पर्जन्यः" इत्यादौ स्वरभक्तिनिषेधलाभेऽपि "दार्ढ्यम्" इत्यादौ स्वरभक्तिनिषेधो न लभ्येत। तस्मात् ऊष्मणः क्रमे सति तस्मिन्नूष्मणि प्रथमपरे वा सति स्वरभक्तिर्न भवतीत्यर्थ एवाश्रयणीयः। तथा च प्रथमपर इत्येतदनुरोधात् प्रथमपरश्चेति ग्लाक्षिमतमेव सूत्रकृदनुमतमिति सिद्धम्। तस्मात् (१४-१७) सूत्रस्य (२१-१६) सूत्रस्य च त्रिभाष्यरत्नकारकृते व्याख्याने सुसङ्गते एव परस्परम्। (१४-२६) सूत्रव्याख्यानेऽपि नानुपपत्तिलेशोपि दृश्यते। न हि कचिदप्येषु सूत्रेषु अपार्थकथनमुपलभामहे ॥

एतेन—१४-२८ सूत्रस्य यथाश्रुतमक्षरार्थं विहायाश्रद्धेयोऽन्योऽपार्थः कृतः—इत्यपि प्रत्युक्तम्। अपार्थताया अनुपपादनात् प्रतिज्ञामात्रेण चार्थासिद्धेः। "पदान्तश्च व्यञ्जनपरः प्राकृतः" (१४-२८) इति सूत्रे हि व्यञ्जनपर इति स्पर्शव्यतिरिक्तव्यञ्जनपर इत्यर्थः। अन्यथा स्पर्शानामपि ग्रहणे पूर्वसूत्रेऽपि स्पर्शपर इत्युक्त्यात् पौन-

रुक्तर्थं स्यात् । इति त्रिभाष्यरत्नकृतं व्याख्यानं अत्यन्तमेव सङ्गतम् वैदिकाभरणेऽपीत्थमेव व्याख्या परिदृश्यते। "स्पर्शः स्पर्शपरः (न द्वित्वमापद्यते)" (१४–२७) इति हि पूर्वसूत्रम् । एवमस्मिन् 'पदान्तश्च' इति सूत्रे पदान्तः नकार एव विवक्षितः । अन्यस्पर्शस्य पदान्तास्थित्यभावात् इति त्रिभाष्यरत्ने । वैदिकाभरणे तु शिक्षाऽनुरोधान्नकारमात्रग्रहणमित्युक्तम् ॥

एवं (१३–४) सूत्रस्याप्यश्रद्धेयतरोऽपार्थः कृतः इत्यनवबोधविलसितमेव । तत्र कथमप्यपार्थितावि रहात् । तत्र हि "न संसामिति तु रापरः" इति सूत्रे तुशब्दस्य इतरव्यावर्तकस्योपात्तस्य "पदान्तस्य व्यञ्जनपरः प्राकृतः" इति "वक्ष्यमाणं द्वित्वनिषेधं तुशब्दो निवारयति तस्मादत्र द्वित्वसिद्धिः" इति तात्पर्यमुपवर्णितम् । तदिदं साधीय एव ॥ पदान्तश्चेति सूत्रे हि "चकारः स्थानिस्पर्शापकर्षकः । पारिशेष्यान्नकारस्यानुकर्षणम् । तथा हि—अन्तस्थादिव्यञ्जनपरत्वे सत्यन्यस्पर्शानामाधिकृतानां पदान्ते स्थितिर्नास्ति सम्राट् इत्यत्रास्तीति चेत्—नैवं........ उपपादितम्" इत्युक्तं त्रिभाष्यरत्ने ॥

यत्तु १४–२, ३ सूत्रे आनुस्वारागमपरे आनुनासिक्यविरोधेन सूत्रकर्तुः स्वमताभिमते कथिते इत्युक्तम् । तत्र तथा सूत्रकर्तुस्स्वमताभिमतत्वकथने त्रिभाष्यरत्नकारस्य कथं नु वा दोषः प्रसरति । पञ्चदशाध्यायस्य प्रथमसूत्रे हि नकारस्य रेफोष्मयकारभावाल्लुभे च मलोपाद्य पूर्वस्वरोऽनुनासिकः । इत्यस्मिन् नकारस्य रेफभावादूष्मभावाद्यकारभावाद्यकारात्स्थयकारे लुप्ते सति मलोपाद्य पूर्वस्वरस्यानुनासिक्ये विहिते "नैकेषाम् । त-

तस्त्वनुस्वारागमः" इति सूत्राभ्यां तदानुनासिक्यं प्रतिषिध्य पूर्वस्वरात्परोऽनुस्वारागमो विहितः। अयमेव चानुनासिक्यप्रतिषेधपक्षः सूत्रकर्तुस्स्वमतत्वेन व्याख्याकृद्भिः कथितः। तदत्र को नु खलु दोषः प्रसरेत्॥

यदपि—एवं १५–८ मन्त्रे पदान्तानुनासिक्याविधायकं स्वमताभिप्रेतं कृतमिति—तत्रापि त्रिभाष्यरत्नकारव्याख्याने लेशतोपि न दोषमीक्षामहे। अस्य पूर्वसूत्रे हि "पदं च प्लुतं शाङ्खायनकाण्डमायनयोः" इत्यस्मिन् प्लुतवतः पदस्य पदकाले आनुनासिक्यं विहितम्। समनन्तरसूत्रे त्वस्मिन् "अकारस्तु संहितायामपि" इत्यत्र तुशब्देन परमतव्यवच्छेदकारणात् पदान्तप्लुताकारानुनासिक्यविधेः स्वमतत्वोत्कीर्तनं व्याख्याकृतां युक्ततरमेव॥

एतेन—एवं ओङ्कारोच्चारणक्रमप्रदर्शकेषु अष्टादशाध्यायस्थेषु सूत्रेषु द्वितीयषष्ठे स्वमताभिप्रेते कृते। दशमाध्याये पदान्तवकारालोपविधायकं एकविंशसूत्रं लोपविधायकादेकोनविंशसूत्रादभ्यर्हितं कृतम्। एवं प्रथमपूर्वहकारस्य चतुर्थत्वापादकं पञ्चमाध्यायस्थं अष्टत्रिंशत्तमं सूत्रं सिद्धान्तत्वेन परिगृहीतम्। एवं स्वरितविषयकविवादेषु प्रथमाध्यायस्थं षट्चत्वारिंशत्तमं सूत्रं परिग्राह्यं कृतम्। इत्यपि पाश्चात्योक्तिः न त्रिभाष्यरत्नकारोक्तिदूषणायालमिति व्यक्तीकृतम्॥ इत्थमेव च—२–१९, २७, ४७, ४८. ११–१९. १९–२. २१–१३. २३–१४, १५, १६, १७, १८, १९ सूत्राणि किमिष्टानि उतानिष्टानीति नान्यतरार्थोपि दर्शितः सत्स्वप्येतेष्विष्टेषु वाऽनिष्टेषु न किमपि प्रयोजनमस्तीति किं तानि तिरस्कृतानि? सन्ति चान्यानि बहूनि सूत्राणि यान्येष

व्याख्याताऽनिष्टानीति तिरस्करोति यानि चेष्टानीत्यभिनन्दति अनिष्टानि यथा—१-४, २१. २-२०. ४-२३. ५-३, ३१. ९-६. १०-११. १३-३. १४-२२. १६-२९। इष्टानि यथा-१-४६. ५-३७, ४१. ८-२२. १०-२१. १४-३, ९, १३, २६, ३३ १५-२, ७, ९. १६-१६, २४. १७-७. १८-५, ७. १९-३. इत्युक्तिरपि समाहिता वेदितव्या ॥

यत्पुनः—न केवलमेतैरज्ञानमूलैरपार्थैर्दोषभागयं व्याख्याता। किन्तु भरतखण्डीयानां स्वसमानशीलानां व्याख्यातॄणां या नैसर्गिकी न्यूनता तयाऽपि न वियुक्तः। क्वचित्तस्य व्याख्यानं लाघवेन बालिशत्वेन च दुष्टम्। अनर्थकेषूपसर्गाद्यव्ययेषु अर्थगाम्भीर्यनिर्धारणे यत्नः क्वचित्। क्वचिच्च स्वैरात् शैलीभेदादर्थभेदे यत्नः। क्वचिच्च स्वाभिप्रेतार्थपरिपोषाय निष्प्रमाणं शब्दव्युत्पादनं इत्यादयो बहवो दोषाः मदीयटीकायां तत्र तत्र दर्शिताः—इति दूषणं न केवलं त्रिभाष्यरत्नकारं प्रति अपि तु सर्वान् भारतीयान्प्रति च निगमितं तदिदं समुचितमेव भारतीयज्ञानविज्ञानकौशलासहिष्णूनामिति विजानन्त्येव विवेचकाः॥

२२-५-१९०६. पण्डितरत्न कस्तूरिरङ्गाचार्यः.



श्री.

हरिः ओम्.

# तैत्तिरीयप्रातिशाख्यम्.

## सोमयार्यविरचितत्रिभाष्यरत्नाख्यव्याख्यया गार्ग्यगोपालयज्वविरचितवैदिकाभरणाख्य-व्याख्यया च सहितम्.

---

### अथ वर्णसमाम्नायः ॥ १ ॥

भक्तियुक्तः प्रणम्याहं गणेशचरणद्वयम् ।
गुरूनपि गिरां देवीमिदं वक्ष्यामि लक्षणम् ॥
व्याख्यानं प्रातिशाख्यस्य वीक्ष्य वाररुचादिकम् ।
कृतं त्रिभाष्यरत्नं यद्भासते भूसुरप्रियम् ॥

श्लोकयोरनयोरयमर्थः—भक्तियुक्तः अहं गणेशपादद्वयं गुरून् गिरां देवीमपि—वाग्देवीमित्यर्थः । तां च प्रणम्य लक्षणमिदं वक्ष्यामि, यत् लक्षणं, त्रिभाष्यरत्ननामकं भूसुरप्रियं विद्वत्प्रियं सत् भासते । कीदृशं लक्षणं ? प्रातिशाख्यस्य व्याख्यानरूपं वाररुचादिकं भाष्यजातं वीक्ष्य न्यूनातिरेकपरिहारेण कृतं विरचितम् । आदिशब्देन आत्रेयमाहिषेये गृह्येते । अत एव त्रि-

" विधेर्मध्यस्थनासिक्यो न विरोधो भवेत् स्मृतः । तस्मात् कुर्वन्ति कार्याणि वर्णानां धर्म एव तत् ॥ "

इति शिक्षाकारवचनं धर्मधर्मिणोरभेदविवक्षयोपपद्यते " अथ विसर्जनीयः" (८-९) इत्यनेन विसर्जनीय उक्तः । "नासिकाविवरणादानुनासिक्यम्" (२-९३) इति रङ्ग उक्तः । "ह्रस्वात् परो ळो ङम्" (१३-१६) इति ळकार उक्तः । "स्पर्शादनुत्तमात्" (२१-१२) इति चत्वारो यमा उक्ताः । "रेफोष्मसंयोगे रेफस्वरभक्तिः" (२१-१९) इति स्वरभक्तिरुक्ता । अनेन क्रमेण याजुर्वैदिकवर्णानां षष्टिसंख्या सूत्रत एव विस्पष्टं द्रष्टव्या । ननु "त्रिषष्टिश्चतुष्षष्टिर्वा वर्णाः शम्भुमते मताः" इति शिक्षावचने सति कथं षष्टिसंख्या नियम्यते ? तत् लौकिकवैदिकसर्ववर्णविषयमिति न शिक्षावचनेन विरोधः । अत्र सूत्रैरेतावतामेवोपलम्भादेष निर्णयो वर्णितः । वर्णानां समाम्नायो वर्णसमाम्नायः ॥ १ ॥



प्रणम्य साङ्गमाम्नायमाचार्यांश्च प्रणीयते ।
व्याख्यानं प्रातिशाख्यस्य गार्ग्यगोपालयज्वना ॥
अर्थरत्नैर्न्यायगुणैः पूर्वशास्त्रार्णवोद्धृतैः ।
रचितं धारयन्त्वेतद्वैदिकाभरणं बुधाः ॥

अथ किमर्थं प्रातिशाख्यं नाम लक्षणं प्रणीयते ? तदुच्यते— "गुरुत्वं लघुता साम्यं" (२४-१) इत्यादि " सर्वं तु विज्ञेयं " (२४-५) इति वक्ष्यति । तदविज्ञाने पदक्रमविशेषाधनवगमादाचार्यत्वा-

सिद्धिः । तदसिद्धावध्ययनाद्यसिद्धिः । न च लिखितपाठादिना वेदोऽधिगन्तव्यः, 'तस्मात्स्वाध्यायोऽध्येतव्यः'[1] इति श्रुतेः । तस्मात् "गुरुत्वं लघुता" (२४-६) इत्यादीनां विज्ञानायेदं शास्त्रं प्रणीयते, तद्विज्ञाने सत्याचार्यत्वयोग्यतापत्त्याऽध्ययनाद्युपपत्तिरिति ॥

ननु नैतदस्ति प्रयोजनम् । तथाहि—

गुरुलघ्वादिविज्ञानं नास्यारम्भप्रयोजनम् ।
उक्तं तत्सर्वमङ्गेषु शिक्षाव्याकरणेषु यत् ॥

यदत्र विशेयतया वक्ष्यते "गुरुत्वं लघुता साम्यम्" (२४-५) इत्यादि तत्सर्वं वेदाङ्गतया प्रसिद्धेषु शिक्षाव्याकरणेषूपदिष्टमेव । अतो न तद्विज्ञानार्थं प्रातिशाख्यमारम्भणीयमिति ॥

एवं प्राप्तेऽभिधीयते—

विकल्पभाजां शास्त्राणामपि दृष्टानुवर्तिनाम् ।
तत्तच्छाखाविशेषेषु व्यवस्थार्थमिदं स्मृतम् ॥

यद्यपि 'गुरुत्वं लघुता साम्यम्' (२४-६) इत्यादि विज्ञेयं सर्वं शिक्षायां व्याकरणेषूपदिष्टमेव । तथाऽपि तत्तत्र न सुग्रहं, विप्रकीर्णत्वात् विषयविभागानवगमात् विशेषतोऽनुपदेशाच्च । तथाहि— सन्ति तावच्च व्याकरणानि लौकिकवैदिकशब्दसाधारणानि । तत्र ,यानि कार्याणि छन्दोमात्रविषयाणि पठ्यन्ते तान्यपि प्रायशः सर्ववेदशाखासाधारणानि भवन्ति । तत्र ये कार्यविकल्पाः "स्वरितो वाऽनुदात्ते पदादौ"[2] इत्येवमादयः ते छन्दसि सर्वेषु स्वरविषयेषु न तुल्यं प्रवर्तन्ते भाषायामिव, किन्तु विषयभेदात् व्यवतिष्ठन्ते । अथ ये नित्याः कार्यविधयः तेऽपि

---

[1] तै. आ. २—१५.

[2] पा. ८—२—६.

छन्दसि वैकल्पिका भवन्ति, "सर्वे विधयश्छन्दसि विकल्प्यन्ते" इति स्मरणात् । ये त्वनियतविषया एव विधयो "बहुलं छन्दसि"[1] इति तेषां व्यक्तं विषयविभागस्य दुष्करत्वम् । तथा "व्यत्ययो बहुलम्"[2] "दृष्टानुविधिश्छन्दसि" इत्यादौ कार्यस्वरूपमपि दुर्ग्रहं, किमुत विषयविभागः । एवं शिक्षास्वपि क्वचित्क्वचित् लोकवेदसाधारणा उपदेशा भवन्ति,

अष्टषष्टिं पठन्त्येके चतुष्षष्टिमथापरे ।

इत्येवमादयः । तथा—

नित्योऽभिनिहतश्चैव क्षैप्रः प्रश्लिष्ट एव च ।
एते स्वाराः प्रकम्पन्ते यत्रोच्चस्वरितोदयाः ॥

इत्यादिविधीनां विषयविभागो नावगम्यते । यद्यप्यविगीतशिक्षानुसारेण केषांचिद्विधीनां शक्यो विषयविभागः प्रतिभाति, तथाऽप्यसौ न सर्वेषां शक्यः । अपि च—अद्यत्वे नियमातिक्रमादृषयो न जायन्ते । न चानृषिस्सर्वाणि लक्ष्याणि लक्षणानि च शक्नोति सम्यगधिगन्तुं, का कथा तद्व्यवस्थापनायाम् । न चैकशाखाध्यायिनोऽपि तदतद्विषयलक्षणविवेकमुखेन तत्स्वरूपनिर्णयश्शक्य इति वाच्यम्, अतद्व्यावृत्तिरूपानवगतौ तन्निर्णयायोगात् अतद्रूपानवगतौ व्यावृत्त्यवगमायोगाच्च । तथा च भगवानक्षपादः—'विमृश्य पक्षप्रतिपक्षाभ्यां अर्थावधारणं निर्णयः' इति । तदेतद्विद्वांसः परमकारुणिका महर्षयः प्रतिशाखं व्यवस्थितानां शिक्षाव्याकरणोपदिष्टकार्याणां विस्पष्टोपदेशानि लक्षणानि प्रणयन्ति स्म । तन्नान्तरीयकतया तु तत्रतत्र स्पष्टोपदिष्टान्यपि कार्याण्यनुवर्ण्यन्ते । तानि प्रातिशाख्यानीत्याख्यायन्ते ।

[1] पा. २—४—३९.   [2] पा. ३—१—८५.

तद्वशात्तु कार्यविशेषाणां शाखाविशेषेषु व्यवस्था सुगमा सम्पद्यते ॥

यद्येवं 'दीधीवेवीटाम्'[1] 'षष्ठीयुक्तश्छन्दसि वा'[2] इत्यादीन्यपि छान्दसकार्याण्यत्रावश्यवाच्यानि ॥

अत्रोच्यते—

न च शाखाविशेषस्थं कार्यं वाच्यमिहाखिलम् ।
यस्माद्व्यवस्था शेषस्य वेद्या कतिपयोक्तितः ॥

न खलु शाखाविशेषव्यवस्थितानि सर्वाणि छान्दसकार्याणि वक्तव्यानीत्यस्ति नियमः, अपि तु बोधयितव्यानीत्येव । तत्र कतिपयेषूपदिष्टेषु अवशिष्टानामपि तद्वशेन व्यवस्था शक्यतेऽवगन्तुम् । तथा हि—

संहिता तत्पदाध्यायः क्रमाध्याय इति त्रिधा ।
प्रसिद्धोऽस्य समाम्नायो विषयो वक्ष्यते ततः ॥
व्यवस्थितेषु कार्येषु तद्वर्तिष्विह केषुचित् ॥
कार्यान्तराणां तन्मूला व्यवस्था सुगमा भवेत् ॥

यद्यप्यात्रेयोपक्रमात्पदक्लृप्तेः पूर्वं अस्मत्सहितैकरूपैव समाम्नाता। तथाऽप्यर्थसम्प्रत्ययार्थं आत्रेयेण यदा पदाध्यायः प्रवर्तितः तद्संदेहार्थं क्रमाध्यायश्च, तदा प्रभृति स्वरूपेण पदात्मना क्रमात्मना चेति त्रिधा समाम्नायते । स खलु त्रिधा समाम्नायोऽस्य शास्त्रस्य विषय इति शास्त्रान्ते दर्शयिष्यति "पदक्रमविशेषज्ञ." (२४-६) इति । तत्रानेन लक्षणेन समाम्नानसिद्धपदरूपे संहितारूपे च सुविज्ञाते व्युत्पत्तिगम्यार्थानुरूपः प्रकृतिप्रत्ययविभागो रूपविशेषानुगुणः कार्यविशेषयोगश्च शिक्षाव्याकरणोपदिष्टस्सुग-

[1] पा. १—१—६.
[2] पा. १—४—९.

मस्सम्पद्यते । तथा चेदं लक्षणं संहितातत्पदरूपनिर्णयमुखेन इहानुक्तानामपि कार्याणां व्यवस्थां बोधयतीति शाखाविशेषात्मकलक्ष्याणां शिक्षाव्याकरणात्मकलक्षणानां च मङ्घटनार्थमारम्भणीयमिति सिद्धम् ।

तस्मात्तत्तत्समाम्नाये प्रातिशाख्याविरोधतः ।
कार्यं सर्वं व्यवस्थाप्यं शिक्षाव्याकरणोदितम् ॥

अत्र प्रथमाध्याये संज्ञापरिभाषमारभ्यते । तत्रादौ वर्णसमाम्नायस्तस्य विषयतया प्रस्तूयते—अथ वर्णसमाम्नायः ॥

अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते, नानन्तर्यार्थे । कुतः? "त्वथैवेति विनिवर्तकाधिकारकावधारकाः" (२०-६) इति परिभाषणात्, तस्यात्रानुपपत्त्यभावात् । वर्ण्यन्ते व्यक्तं ध्वन्यन्त इति वर्णा अकारादयः । समित्युपसर्गस्सहत्वं द्योतयति । आम्नानमभ्यासः । यत्र समुदितानामभ्यासः क्रियते स समाम्नायः । आङत्र मर्यादायामित्ययुक्तं, क्रियायोगिनस्तस्य मर्यादार्थत्वासम्भवात् । वर्णानां समाम्नाय इति षष्ठीसमासः । सोऽधिकृतो वेदितव्यः । केषां वर्णानाम्? येऽस्मत्स्वाध्यायवर्तिनः । कियन्तः ते वर्णाः, कश्च तेषां क्रमः? तदुच्यते—

स्वरास्स्पर्शास्तथाऽन्तस्था ऊष्माणश्चाथ दर्शिताः ।
विसर्गानुस्वारळाश्च नासिक्याः पञ्च चोदिताः ॥

इह खलु "षोडशादितस्स्वराः" (१-६) इति पञ्चभिस्सूत्रैरकारादिहकारान्ता एकपञ्चाशद्वर्णा गणशो निर्दिष्टाः, "ऊष्मविसर्जनीय" (१-११) इति विसर्जनीयो दर्शितः, "अनुस्वारश्च" (१-३४) इत्यनुस्वारः, "पृक्तस्वरात्परो ळो डं" (१३-१६) इति ळकारः, "स्पर्शादनुत्तमात्" (२१-१२) इत्यादिभिस्त्रिभिस्सूत्रैः पञ्च नासिक्या विहिताः । एवमेकोनषष्टिवर्णा अस्मदीयैस्समाम्नायन्ते ॥

ननु व्याकरणप्रसिद्धानां नवानामचां ह्रस्वदीर्घप्लुतभेदात्सप्तविंशतिस्स्वरा भवन्ति। तत्र "षोडश स्वराः" इति केषां ग्रहणम्?

तदुच्यते—वासिष्ठशिक्षायाम् "ऌवर्णदीर्घं परिहाप्य स्वराः षड्विंशतिः प्रोक्ताः" इत्यादिना अष्टषष्टिवर्णानुक्त्वा अष्टपञ्चाशत्पक्षार्थं पुनरपि ऋवर्णप्लुतं ऌवर्णप्लुतं सन्ध्यक्षरह्रस्वप्लुतांश्चेति दश स्वरान् परिहाप्य षोडशस्वरपक्ष उक्तः। स इहाविरुद्धत्वात्परिगृह्यते॥

ननु "सपूर्वस्यार्धसदृशमेकेषाम्" (११-१९) इति अर्धकारार्धाकारौ विधास्येते, तयोः कुत इहानुपादानम्?

अस्मत्स्वाध्यायेऽनुपलम्भात्। तदुक्तं महाभाष्ये—ननु सभ्याश्छन्दोगानां सात्यमुग्रिराणायनीया अर्धीयते—"सुजाते ए अश्वसूनृते" "अध्वर्यो ओ अद्रिभिस्सुतम्" "शुक्रं ते ए अन्यत्" इति। एतेन वेदस्थप्रणवस्वरस्य मात्रार्धस्य वचनं[1] सूत्रकारस्यानिष्टमवगम्यते, तदभ्युपगमे परिमाणभेदकृताद्वर्णभेदात्सप्तदशस्वरापत्तेः। स्वाध्यायारम्भसमाप्तिप्रणवानां तु सत्यपि मात्राभेदे वेदबाह्यत्वान्न सप्तदशस्वरापत्तिरित्यविरुद्धं तद्वचनम्। स्पर्शान्तस्थासु च न सङ्ख्याविप्रतिपत्तिरस्ति; किन्तु ऊष्माणि बह्वृचास्तु शषसह ᳲक ᳲपदुस्स्पृष्टविसर्जनीयात्मका अष्टौ ऊष्माण इत्याहुः। तत्रास्माकं विसर्जनीयस्य दुस्स्पृष्टस्य च नोष्मस्वन्तर्भावः "ऊष्मविसर्जनीय" (१-१२) इति पृथग्ग्रहणात्, "पूर्वस्वरात्परो ळो ढं" (१३-१६) इति निर्देशसामर्थ्याच्च। दुस्स्पृष्टस्य ऊष्मान्तर्भावे तस्य अघोषत्वात् "घोषवत्परश्च" (९-८) इत्योत्वं न स्यात्।

[1] 'मात्रार्धमवचनं' इति च पाठः.

अत्र ळकारळ्हकारयोरस्मत्संहितायां अविद्यमानत्वेऽपि शुक्रियब्राह्मणे पितृमेधादिषु च विद्यमानत्वात्समाम्नानमत्र क्रियते। तथा च शिक्षायाम्—"चत्वारश्च यमास्तथा" इति चत्वार एव नासिक्याः स्मर्यन्ते । सूत्रकारस्तु समाम्नायसिद्धत्वात् अत्र 'हकारान्नणमपरात्' (२१-१४) इति हकारद्वित्ववत् पञ्चमं नासिक्यं विधास्यति। यत्तु कैश्चिदुच्यते—"हकारान्नणमपरात्" इति गुणविधिरेव न वर्णान्तरविधिरिति, यदपि स्वरभक्त्याख्यमुक्तवर्णव्यतिरिक्तं वर्णद्वयमस्तीति, तदुभयमेकविंशे निराकरिष्यामः। तेन व्यवस्थितमेतत्—

ह्रस्वदीर्घप्लुतावर्णवर्णोवर्णा ऋऋ ऌ च।
एऐ ओऔ इति ज्ञेयाः षोडशेहादितस्स्वराः॥

कखौ गघौ ङचछजाः झञौ टठडढा णतौ।
थदौ धनौ पफबभमास्स्पर्शाः पञ्चविंशतिः॥

यरौ लवौ चतस्रोऽन्तस्थाश्च ऽकशषस ऽपहाः।
षडूष्माणो विसर्गानुस्वारौ ळो नास्यपञ्चकम्॥

इत्येकोनाष्षष्टिवर्णा अस्मत्स्वाध्यायवर्तिनः॥ इति।

ये पुनः आसामकारादिवर्णजातीनां व्यक्तिभेदाः ते त्वानन्त्यादगण्या इति जातीनामेव सङ्ख्योक्ता। न च गुणभेदस्य जातिभेदकत्वं गवादिषु दृष्टम्। तथाऽनुप्रदानादिभेदादेव वर्णवैशेष्यं वक्ष्यति। उक्तं च पुनर्महाभाष्ये—"अभेदका गुणा इत्येव न्याय्यम्" इति। तस्मादेतावन्त एव वर्णभेदाः॥ २॥

## अथ नवादितस्समानाक्षराणि ॥ २ ॥

'अथ' इति संज्ञाधिकारार्थः । अस्मिन् वर्णसमाम्नाये 'आदितः' आरभ्य 'नव' वर्णाः, समानाक्षरसंज्ञा भवन्ति । यथा— अ आ आ ३ इत्यादि । संज्ञायाः प्रयोजनं—"दीर्घं समानाक्षरे सवर्णपरे" (१०–२) इत्यादि । नन्वीदृशी महती संज्ञा किमर्था ? शिक्षादिशास्त्रप्रसिद्ध्यनुरोधायेति ब्रूमः ॥ २ ॥

अत्र अथेति संज्ञापरिभाषमधिक्रियते । पूर्वसूत्रस्थं "वर्णसमाम्नायः" इति पदमिहानुवृत्तं षष्ठ्यन्ततया विपरिणम्यते । तेनायमर्थः—वर्णसमाम्नायस्यादितो नव वर्णाः समानाक्षरसंज्ञा भवन्ति । संज्ञायाः प्रयोजनं—'तस्य त्राता भवसि'[1] इत्यत्र पदान्तस्वराणामानुनासिक्यं भवति । अत्र समानाक्षराणीति महती संज्ञा किमर्थमाश्रिता ? तदुच्यते—

अन्वर्थत्वं महासंज्ञाः व्यञ्जन्त्यर्थान्तराणि च ।
पूर्वाचार्यैरतस्तास्तु सूत्रकारेण चाश्रिताः ॥

न क्षरन्तीत्यक्षराणि क्षरणमन्याकृतया चलनं तद्भावात्स्वरेष्वक्षरशब्दो वर्तते । 'अक्षरव्यञ्जनानामनुपलब्धिर्ध्यानः' (२३-७) इति स्वरवाचित्वं दृश्यते । एकारादयस्स्वराः सन्ध्यक्षराणीत्याख्यायन्ते स्वरद्वयसन्धिरूपत्वात् । तद्भावात्तु समानरूपाः अकारादय इतरे स्वराः समानाक्षराणीति । अत एव शौनकेन—"अष्टौ समानाक्षराण्यादितस्ततश्चत्वारि सन्ध्यक्षराण्युत्तराणि" इति सन्ध्यक्षरेभ्यः प्राचां सर्वेषां समानाक्षरसंज्ञोच्यते । आचार्यस्तूपसर्ग-

[1] सं. १–२–१४.

संज्ञावदुपयोगानुगुण्यान्नवानामेवाह । अन्यत्तु मतम्—ऋकारादीनां त्रयाणां स्वरद्वयसन्धिरूपत्वाभावेऽपि रूपद्वयसद्भावादेषा संज्ञा न युक्तेति नवानामेवाहेति ॥ २ ॥



## द्वेद्वे सवर्णे ह्रस्वदीर्घे ॥ ३ ॥

तेषु समानाक्षरेषु द्वेद्वे ह्रस्वे द्वेद्वे दीर्घे वा ह्रस्वदीर्घे वा दीर्घह्रस्वे वा अक्षरे परस्परं सवर्णसंज्ञे भवतः । इयमन्वर्थसंज्ञा । सवर्णत्वं नाम सादृश्यमुच्यते । तस्मादकारादीनामिकारादिभिर्न सवर्णसंज्ञाशङ्का, भिन्नस्थानप्रयत्नत्वात् अनयोः । संज्ञायाः प्रयोजनं—"दीर्घं समानाक्षरे सवर्णपरे" (१०-२) इत्यादि । ह्रस्वं च दीर्घं च ह्रस्वदीर्घे ॥ ३ ॥

अत्र समानाक्षरविशेषणत्वान्नपुंसकलिङ्गनिर्देशः । ह्रस्वं च दीर्घं च ह्रस्वदीर्घे । यद्यत्र समानाक्षराणामेकगणत्वमाश्रित्य तन्नत्ययोः ह्रस्वदीर्घयोर्मिथस्सवर्णसंज्ञा विधीयते तदा द्विवचनेनैव तदुपपत्तेः द्वेद्वे इति वीप्सावचनमनर्थकं स्यात् । तस्मादवर्ण इवर्ण उवर्ण इति त्रीन् गणान् समाश्रित्य तस्मिन् तस्मिन् गणे ये द्वेद्वे ह्रस्वदीर्घे ते परस्परं सवर्णसंज्ञे भवत इत्यर्थो विज्ञायते । तेनान्यगणस्थस्य ह्रस्वस्य अन्यगणस्थस्य दीर्घस्य च न सवर्णसंज्ञाप्रसङ्गः । संज्ञायाः प्रयोजनम्—"राष्ट्रं यशस्यादीर्गच्छति"[1] "मानवीत्याह"[2] इत्येकादेशः ॥

[1] सं. १—६—१०. [2] सं. २—६—७.

नन्वेवं व्याख्याने सजातीययोः ह्रस्वव्यक्तयोस्सवर्णसंज्ञा न स्यात् " अथाब्रवीत् "[1] " दधतूखे "[2] तथा दीर्घव्यक्तयोरपि " स ते माऽऽस्थात् "[3] तथा "न प्लुतपूर्वं"(१-४) इति द्वयोरिकारयोस्सवर्णसंज्ञाप्रतिषेधोऽनर्थकस्स्यात् " अग्ना३ इ । इति । आह "[4] इत्यत्र प्राप्तयभावात् । तस्मादत्र ह्रस्वानि च दीर्घाणि च ह्रस्वदीर्घं इति समाहारद्वन्द्वस्य सप्तम्यन्तस्येदं रूपं ह्रस्वदीर्घे इति । तथाच समानाक्षरेषु ह्रस्वदीर्घेषु द्वेद्वे सवर्णसंज्ञे भवत इति विज्ञानात्सर्वमुपपद्यते ॥

अत्रोच्यते—अस्मिन्नपि व्याख्याने यकारादिव्यक्तीनां सजातीयानां मिथस्सवर्णसंज्ञा न स्यात् । इष्यते च सा । " अन्तस्स्थापरश्च सवर्णमनुनासिकम् " (५-२८) " सवर्णसवर्गीयपरः " (१४—२१) इति ॥

ननु माभूत्तत्र पारिभाषिकं सवर्णत्वं, सारूप्यात्मकं तु भविष्यति । वर्णशब्दः स्वरूपवचनोऽप्यस्ति । ' साम्नो वा एष वर्णो यद्धिरण्यम् ' इति ॥

यद्येवं " अथाब्रवीत् "[1] " दधतूखे "[2] इत्यादिष्वपि तदुपपत्तेर्नेदं सूत्रं क्लृप्त्यम् । क्लिष्टकल्पनायामपि अकारस्य इकारादिभिस्सावर्ण्यमित्याद्यतिप्रसङ्गः तदवस्थ एव स्यात् । न च तत्परिहाराय अन्वर्थसंज्ञाबलात् समानरूपयोरेव सावर्ण्यमास्थेयम्; ह्रस्वदीर्घयोरसरूपत्वात् सर्वत्र सावर्ण्याभावप्रसङ्गः । तस्माद्यथोक्त एव युक्तस्सूत्रार्थः ॥

---

[1] स. ३—२—११. [2] सं. ४—१—६. [3] सं. १—१—२.
[4] स. ६—५—८. [5] स. २—४—११.

नन्वत्राप्युत्तरसूत्रस्यासङ्गतिस्स्यात्, एतत्सूत्रप्राप्तविषयत्वाभावात् । नैष दोषः सति सम्भवे हि "अनन्तरस्य विधिर्वा प्रतिषेधो वा" इति न्यायः प्रवर्तते । अत एव व्याकरणे "ष्णान्ता षट्"[1] इत्यनन्तरविषयो विधिरिष्यते । इह च 'न तकारपरः' (७-१९) इति तादृशप्रतिषेध इत्यलं विस्तरेण॥ ३॥



## न प्लुतपूर्वम् ॥ ४ ॥

प्लुतपूर्वं समानाक्षरं सवर्णसंज्ञं न भवति । प्लुतमस्मात् पूर्वमिति प्लुतपूर्वम् । यथा "अग्ना३ इत्याह"[2] इत्यत्र "दीर्घं समानाक्षरे सवर्णपरे" (१०-२) इत्येकादेशः प्रसक्तः । तच्चानिष्टम् । प्रतिषिद्धायां त्वेवं सवर्णसंज्ञायां पारिशेष्यात् "इवर्णोकारौ यवकारौ" (१०-१५) इति पूर्वस्य इकारस्य यत्वं स्यात् । स च यकारः 'लुप्येते त्ववर्णपूर्वौ यवकारौ' (१०-१९) इति लुप्यते । यकारे लुप्ते सति 'इवर्णपर एकारम्' (१०-४) इत्येकादेशः प्रसक्तः, सोऽपि निषिध्यते "न प्लुतप्रग्रहा" (१०-२४) इत्यनेन । तस्मात् "अग्ना३ इत्याह"[2] इति सिध्यति ॥ ४ ॥

प्लुतः पूर्वो यस्मात्समानाक्षरात् तत् प्लुतपूर्वम् । तथाभूतं समानाक्षरं प्रति सवर्णं न भवति । सवर्णतायाः परस्परप्रतियोगिकत्वात् एकस्य सावर्ण्ये प्रतिषिद्धे इतरस्यापि तत्प्रतिषिद्धं

---

[1] पा. १—१—२४.  [2] सं. ६—५—८.

भवति । इदमेवात्रान्वर्थसंज्ञाफलम् । सावर्ण्यप्रतिषेधेन तत्कार्यमेव प्रतिषिध्यते। यथा व्याकरणे—'नाज्झलौ'[1] इत्यादिभिः सवर्णत्वप्रतिषेधः । तथा—"अग्ना३ इ। इति। आह"[2] इत्यत्र "दीर्घं समानाक्षरे सवर्णपरे" (१०–२) इत्येकादेशो न भवति, किन्तु "इवर्णोकारौ यवकारौ" (१०–१६) इति यत्वम् । "लुप्येते त्ववर्णपूर्वौ यवकारौ" (१०–१९) इति तल्लोपश्च, ततः "न प्लुतप्रग्रहौ। परश्च परश्च।" (१०–२४, २६) इति सन्धिप्रतिषेधात् इष्टरूपसिद्धिः ॥ ४ ॥



## षोडशादितस्स्वराः ॥ ५ ॥

वर्णसमाम्नायस्य आदित आरभ्य षोडश वर्णाः स्वरसंज्ञा भवन्ति । अकारादय औकारपर्यन्ता इत्यर्थः । संज्ञायाः प्रयोजनं—"अथ स्वरपरो यकारम्" (९-१०) इत्यादि ॥ ५ ॥

वर्णसमाम्नायस्यादितः षोडश वर्णास्स्वरसंज्ञा भवन्ति । आदित इत्यनुक्तौ समानाक्षरेभ्यः परेषामेव स्वरसंज्ञेति शङ्का स्यात् । संज्ञायाः प्रयोजनम्—'युङ्क्ष्व'[3] 'आऽस्मिन्नुग्राः'[4] इति ङकारनकारयोर्द्वित्वम् । निर्वचनं—स्वयं राजन्ते नान्येन व्यज्यन्त इति स्वराः । तदुक्तम्—

> यस्स्वयं राजते तं तु स्वरमाह पतञ्जलिः ।
> उपरिस्थायिना तेन व्यक्तं व्यञ्जनमुच्यते ॥ इति ॥ ५ ॥



[1] पा. १—१—१०  [2] सं. ६—५—८.
[3] सं. १—८—१५.  [4] सं. ३—३—१.

## शेषो व्यञ्जनानि ॥ ६ ॥

स्वरेभ्यः शेषो वर्णराशिर्व्यञ्जनसंज्ञो भवति । ककारादिस्वर-भक्तिपर्यन्त इत्यर्थः । संज्ञायाः प्रयोजनं—"व्यञ्जनं स्वराङ्गम्" (२१-१) इत्यादि ॥ ६ ॥

शिष्यत इति शेषः । स्वरेभ्यः परे वर्णाः सर्वे व्यञ्जन-संज्ञा भवन्ति । संज्ञायाः प्रयोजनं 'विश्वाहा शर्म यच्छतु'[1] इत्यत्र ह्रस्वादेशः। निर्वचनं तूक्तं—परेण स्वरेण व्यज्यत इति व्यञ्जनमिति ॥ ६ ॥



## आद्याः पञ्चविंशतिस्स्पर्शाः ॥ ७ ॥

व्यञ्जनेष्वाद्याः पञ्चविंशतिवर्णाः स्पर्शसंज्ञा भवन्ति । ककारा-दयो मकारपर्यन्ता इत्यर्थः । "अथ नवादितस्समानाक्षराणि" (१-२) "षोडशादितस्स्वराः" (१-५) इतिवत् आदित इति वक्तव्ये आद्या इति शब्दान्तरप्रयोगोऽर्थान्तरसूचकः । व्यञ्जनेष्वाद्या न तु स्वरे-ष्वाद्या इति विज्ञेयम् । संज्ञायाः प्रयोजनम्—"स्पर्शस्स्पर्शपरः" (१४-२७) इत्यादि ॥ ७ ॥

आद्या इति पुल्लिङ्गनिर्देशो विधेयानुसारात् । यथा 'शैत्यं हि यत्सा प्रकृतिर्जलस्य' इति । विधेयबोधकस्पर्शशब्दस्य तु पुल्लिङ्गत्वं सूत्रप्रयोगनिबन्धनम् । तथाऽऽह वार्तिककारः—'लिङ्गमशिष्यं लो-काश्रयत्वाल्लिङ्गस्य' इति । एवमुत्तरयोरपि सूत्रयोर्द्रष्टव्यम् ।

[1] तै. ४—६—४.

विंशतिरित्यादिशब्दास्तु सङ्ख्येयवृत्तित्वेऽपि नियतलिङ्गसङ्ख्या भवन्ति, यथा—'शतं ब्राह्मणाः पिबन्ति'[1] इति। ततश्च व्यञ्जनेष्वादितः पञ्चविंशतिः स्पर्शसंज्ञानीत्युच्यन्ते । संज्ञायाः प्रजोजनं—"इदं क्षत्रं दुष्टरमस्तु"[2] इति मकारस्यानुनासिकादेशः । निर्वचनं तु—स्पृष्टप्रयत्नजन्यत्वात्स्पर्शा इत्याख्यायन्ते । न त्वेवमन्तस्स्थानामाख्या स्पृष्टप्रयत्नजन्यत्वाभावात्[3] रूढ्यभावाच्च ॥ ७ ॥



## पराश्चतस्रोऽन्तस्स्थाः ॥ ८ ॥

स्पर्शेभ्यः परे चत्वारो वर्णा अन्तस्स्थासंज्ञा भवन्ति । संज्ञायाः प्रयोजनम्—" अन्तस्स्थापरश्च सवर्णमनुनासिकम् " (५-२८) इत्यादि॥

स्पर्शेभ्यः पराणि चत्वारि व्यञ्जनान्यन्तस्स्थासंज्ञानि भवन्ति। संज्ञायाः प्रयोजनं—'देवासुराश्संयत्ता आसन्'[4] इत्यादिषु मकारस्य अनुनासिकादेशः । निर्वचनं तु—जिह्वामध्यप्रभृतीनां करणानामन्तैर्जन्यत्वाद्धरलवा अन्तस्स्था इत्याख्यायन्ते ॥ ८ ॥



## परे षडूष्माणः ॥ ९ ॥

अन्तस्स्थाभ्यः परे षड्वर्णा ऊष्मसंज्ञा भवन्ति । संज्ञायाः प्रयोजनं—" ऊष्मा स्वरपरः " (१४-१६) इत्यादि ॥ ९ ॥

अन्तस्स्थाभ्यः पराणि षट् व्यञ्जनानि ऊष्मसंज्ञानि भवन्ति ।

[1] सं. १—८—१८.
[2] सं. ४—४—१२.
[3] स्पृष्टप्रकर्षाभावात् इति वा पाठः.
[4] ब्रा. १—५—१.

संज्ञायाः प्रयोजनं—'धारा व्यानशुः'[1] इत्यत्र ह्रस्वाभावः। निर्वचनं तु—ऊष्माख्यबाह्यप्रयत्नयोगादूष्माण इत्याख्या। न तु सा प्रथमद्वितीयादिषु, रूढ्यभावात् ॥ ९ ॥

—co—

## स्पर्शानामानुपूर्व्येण पञ्चपञ्च वर्गाः ॥१०॥

स्पर्शानां मध्ये आनुपूर्व्येण पञ्चपञ्च वर्णा वर्गसंज्ञा भवन्ति कचटतपाद्यो ङञणनमान्ता इत्यर्थः। संज्ञायाः प्रयोजनं—"टवर्गश्च तवर्गपरः" (१४-२०) इत्यादि ॥ १० ॥

स्पर्शानां मध्ये आनुपूर्व्येणादित एवारभ्य क्रमेण पञ्चपञ्च अवान्तरगणभूता वर्गसंज्ञा भवन्ति। अत्र वर्गशब्दस्य गणपर्यायतया गणान्तरेऽपि शक्तस्य शक्त्यवच्छेदेन स्पर्शावान्तरगणेषु विनियोगात् स्पर्शमात्रसमूहस्यान्तस्थादिसमूहस्य च न वर्गत्वम्। तेन 'याक्छन्दः'[2] इत्यत्र ककारस्य "सवर्णसवर्गीयपरः" (१४-२३) इति द्वित्वनिषेधो न भवति। "उपव्ययते"[3] इत्यत्र वकारस्य च नेत्यादि द्रष्टव्यम् ॥ १० ॥

—co—

## प्रथमद्वितीयतृतीयचतुर्थोत्तमाः ॥ ११ ॥

एकैकस्मिन् वर्गे यथाक्रमेण वर्णाः प्रथमद्वितीयतृतीयचतुर्थोत्तमसंज्ञा भवन्ति। सिद्धेऽपि संख्यानिमित्ते[4] नाम्नि संख्यान्तरान-

[1]सं. ५—७—७. [2]सं. ४—३—१. [3]सं. २—५—११.

[4]"संख्यामात्रनिमित्ते" पाठान्तरम्.

भिधानार्थं[1] संज्ञान्तरं कथयितुं प्रथमादिसंज्ञाविधानम्[2] । तत् कथम्? ककारादीनामेव प्रथमादिसंज्ञाप्रत्ययार्थं, स्वरान्तस्थोष्मप्रभृतिषु तु संख्यासंज्ञाप्रतिपत्त्यर्थम् । संज्ञायाः प्रयोजनं—"प्रथम ऊष्मपरो द्वितीयम्" (१४–१२) "तृतीयं स्वरघोषवत्परः" (८–३) "हकारो हचतुर्थेषु" (२–९) "नानुत्तम उत्तमपरः" (१४–२४) इत्यादि ॥ ११ ॥

वर्गेषु चानुपूर्व्येण ते ते वर्णाः प्रथमद्वितीयादिसंज्ञा भवन्ति कचटतपाः प्रथमाख्याः । खछठथफाः द्वितीयाख्याः । गजडदबास्तृतीयाख्याः । घझढधभाश्चतुर्थाख्याः । ङञणनमा उत्तमाख्या इति । इदमपि सूत्रं गणान्तरेषु संज्ञानिवृत्त्यर्थम् । एवं हि अकाराकारयोः प्रथमद्वितीयसंज्ञानिवृत्त्या 'देववगृहि दशतवल्शं'[3] 'मा विश्वायुस्सा विश्वव्यचाः'[4] इत्यत्र 'ऊष्मपरोऽघोषपरे' (९–१) इति विसर्जनीयलोपो न ॥ ११ ॥

---

## ऊष्मविसर्जनीयप्रथमद्वितीया अघोषाः ॥

ऊष्माणश्च विसर्जनीयश्च प्रथमद्वितीयाश्चाघोषसंज्ञा भवन्ति । संज्ञायाः प्रयोजनं—"अघोषपरस्तस्य" (९–२) इत्यादि ॥१२॥

---

[1] "शब्दान्तराभिधानार्थं" इत्यपि पाठः.

[2] निर्देऽपि ग्रहणार्निमित्ते नाम्ना नियमार्थं प्रथमादिसंज्ञाविधानम्. इति पाठान्तरम्.

[3] स. १–१–२.

[4] स १–१–३.

ऊष्माणश्च विसर्जनीयश्च प्रथमद्वितीयाश्चेति वर्णा अघोषसंज्ञा भवन्ति । संज्ञायाः प्रयोजनं—"अघोषेषु श्वासः" (२-१०) इत्यनुप्रदानविशेषसिद्धिः । निर्वचनं तु—घोषाख्यबाह्यप्रयत्नाभावादघोषा इत्याख्या ॥ १२ ॥

—o—

## न हकारः ॥ १३ ॥

न भवत्यघोषसंज्ञो हकारः । ऊष्मत्वादघोषत्वे प्राप्ते तदपवादोऽयम् ॥ १३ ॥

हकारस्योष्मत्वादघोषसंज्ञा प्राप्ताऽनेन प्रतिषिध्यते । ये तु "हकारान्नणमपरात्" (२१—१४) इत्यत्र गुणविधिमिच्छन्ति तेषां "हकारः" इति कारशब्दनिर्देशो न घटते, नासिक्यत्वात् । अथोत्तमपरस्यैव नासिक्यत्वादतथाभूतस्य तदुपपत्तिः । तर्ह्युत्तमपरस्याघोषत्वं स्यात् । ततश्च 'अपैवास्मै तध्नुयते'[1] इति रूपासिद्धिः । "हकारान्नणमपरात्" इति च व्याहतं स्यात् ॥

—o—

## व्यञ्जनशेषो घोषवान् ॥ १४ ॥

अघोषेभ्योऽन्यो व्यञ्जनशेषो घोषवत्संज्ञो भवति । यद्यपि "ऊष्मविसर्जनीय" (१—१२) इत्यघोषेषूक्तेषु व्यञ्जनशेषस्य पारिशेष्यात् घोषवत्त्वं सिद्धम् । यथा—देवदत्तयज्ञदत्तयोरपरशुर्देवदत्त इत्युक्ते परः

[1] ब्रा. ३—९—६.

## वर्णः कारोत्तरो वर्णाख्या ॥ १६ ॥

कारोत्तरो वर्णो वर्णस्य आख्या भवति । यथा—"अथैकारैकारौ" (४–८) इत्यादि । कारशब्द उत्तरो यस्मादसौ कारोत्तरः ॥ १६ ॥

कारशब्द उत्तरो यस्मात्स तथोक्तः । वर्णशब्दस्वरूपं कारशब्दोत्तरस्य तस्य वर्णस्याख्या भवति । संज्ञायाः प्रयोजनम्—"अकारव्यवेतो व्यञ्जनानाम्" (१–१७) इत्यादिव्यवहारः । तदनेन सूत्रेण "वर्णात्कारः"[1] इति व्याकरणोक्तः कारप्रत्ययोऽनुवर्णितः ॥ १६ ॥

—ॐ—

## अकारव्यवेतो व्यञ्जनानाम् ॥ १७ ॥

अकारव्यवहितो वर्णः कारशब्दोत्तरो व्यञ्जनानामाख्या भवति । यथा—"टनकारपूर्वश्च तकारः" (५–३३) इत्यादि । अकारेण व्यवेतः अकारव्यवेतः ॥ १७ ॥

ननु किं व्यञ्जनैःपृथगुच्चारणानुपपत्तौ श्रेयः? उत सुखोच्चारणार्थं वर्णान्तरं मध्ये निवेश्य प्रयोक्तव्यः? इति संशये द्वितीयकल्प एवेष्टव्यः । 'योऽसौ ककारस्तकारो वा' इति प्रयुञ्जानैर्वैयाकरणस्तथैवाङ्गीकृतत्वादित्याह—

व्यञ्जनानां स्वरूपात्परः कारशब्दो मध्यवर्त्यकारेण व्यवहित आख्या भवति । न तु केवलव्यञ्जनोच्चारणानुपपत्तौ तदाख्या

[1] पा, वार्तिकम्

परशुमानिति सिद्धम् । तथाऽपि शास्त्रे सं॰ व्यवहारार्थं संज्ञानिर्देशः क्रियते, पारिशेष्याद्दपि कण्ठोक्तेर्विशेषात् । अन्यथा "न हकारः" (१–१२) इति हकारस्याघोषसंज्ञा निषेध्यते । नापि हकारो घोषवान्, विध्यभावात् । तथैव व्यञ्जनशेषः । स्वरा अपि तथा न घोषवन्तो नाप्यघोषाः । तथा सति "घोषवत्परश्च" (९–८) इति यत्र वक्ष्यति तत्र सन्देहः स्यात् घोषवत्परो नाम किम्पर इति । तस्मा भूदितीदं सूत्रमारभ्यते । व्यञ्जनरूपः शेषो व्यञ्जनशेषः । अत्र सूत्रे चोद्यपरिहाररूप एष विशेषो माहिषेयभाषितः । संज्ञायाः प्रयोजनं—"घोषवत्परश्च" (९–८) इत्यादि ॥ १४ ॥

व्यञ्जनशेष इति वचनादघोषव्यतिरिक्तानि सर्वाणि व्यञ्जनानि घोषवत्संज्ञानि भवन्तीति सिद्ध्यति । शेष इत्येतावत्युक्ते प्रकृतानामूष्मस्पर्शानामेव शेषस्य संज्ञा स्यात् । संज्ञायाः प्रयोजनं—'तद्गुल्गुलु'[1] इत्यत्र प्रथमस्य तृतीयादेशः । निर्वचनं तु—घोषाख्ययाऽऽप्रयत्नयोगात् घोषवदाख्येति ॥ १४ ॥

---

## आप्रावोपाभ्यधिप्रतिपरिविनीत्युपसर्गाः ॥

आ प्र अव उप अभि अधि प्रति परि वि नि इत्येते शब्दा उपसर्गसंज्ञा भवन्ति । ननु—

प्रपरापसमन्ववनिर्दुर्व्याङ्न्यध गोऽप्यतिमूद्भयश्च ।
प्रतिना सह लक्षयितव्याः पर्युपयोरपि लक्षणमत्र ॥

[1] सं. ६—2—८.

वर्तते। संज्ञायाः प्रयोजनम्—"ङपूर्वः ककारः" (५–१२) इत्यादिर्व्यवहारः॥ १७॥

—:o:—

## न विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारनासिक्यानाम्॥ १८॥

विसर्जनीयादीनां वर्णत्वाविशेषात् कारोत्तरत्वं प्राप्तमनेन निवर्त्यते। न खलु विसर्जनीयादीनां कारोत्तरता भवति। कुतः सर्वत्र तथाप्रयोगानुपलम्भात्। ननु यथा—"वर्णः कारोत्तरो वर्णाख्या" (१–१६) इति वर्णशब्दवाच्यस्यैव कारोत्तरत्वम्, "अथ नकारो णकारम्" (७–१) इत्यादि; न तु वाचकस्य। अन्यथा वर्णकार इति स्यात्। तद्वद्विसर्जनीयादीनामपि[1] वाच्यग्रहणमेव युक्तं नान्यथा। तथा सति वाचकपरतया वररुच्यादिविरचितमुदाहरणं "अवसाने रविसर्जनीय" (१४–१९) इत्याद्यं चानुचितमिति चेत् मैवं मंस्थाः। वाच्यानां केवलानामप्रयोगात् अत्र वाच्यवाचकयोरभेदविवक्षया सूत्रसरणिरित्युदाहरणगमनिका॥

किमेवं विसर्जनीयादीनामपि व्यञ्जनानां सुखोच्चारणार्थं वर्णान्तरान्तर्धानेन कारशब्दः आख्या भवति नेत्याह—

अः इति विसर्जनीयः। वायोर्विसर्जनेन जन्यत्वात्। ᳵक इति जिह्वामूलीयः। जिह्वामूलेन जन्यत्वात्। ᳶप इत्युपध्मानीयः। उपध्मानेन जन्यत्वात्। अनुस्वर्यते पश्चार्धे स्व-

[1] विसर्जनीयादीनामित्यत्रापि.

रवदुच्चार्यते इत्यनुस्वारः। नासिकायां भवा नासिक्याः । एतेषां वर्णान्तरान्तर्हितोऽपि कारशब्द आख्या न भवति । ततश्च यथा—'कुप्वोः ≍क≍पौ च'[1] इति व्याकरणसूत्रे वर्णद्वयाधिकौ[2] जिह्वामूलीयोपध्मानीयौ निर्दिश्येते, एवमत्र "ङपूर्वः ककारः" (९–३२) इति विसर्जनीयस्य जिह्वामूलीयस्य वा निर्देश इति न शङ्कनीयम्। न ह्यत्र विसर्जनीयकारो जिह्वामूलीयकारः इत्यादिसंज्ञापूर्वककारशब्दाख्या प्रतिषिध्यते, प्राप्त्यभावात् यदा च विसर्जनीयादीनां सुखोच्चारणार्थं वर्णान्तरप्रक्षेपयोग्या कारशब्दाख्या प्रतिषिध्यते तदा तत्प्रक्षेपानर्हानुपपन्नोच्चारणाख्या दूरत उत्सारिता। ततश्च "अकारो व्यञ्जनानाम्" (१–२१) इति वक्ष्यमाणाऽप्याख्या एतेषामसम्भवव्युदस्तत्वान्न सम्भवति ॥१८॥

## एफस्तु रस्य ॥ १९ ॥

रस्य तु एफशब्द आख्या भवति । यथा—"रेफोष्मपरः" (१३–२) इति रेफस्य व्यञ्जनत्वाविशेषात् प्राप्तं कारोत्तरत्वम्, अकारव्यवेतत्वं च तदुभयं तुशब्दो निवारयति । अन्ये त्वन्यथा मन्यन्ते, अकारव्यवेतत्वमेवेति । तदसाधु । तथा सति कदाचित् कारोत्तरता कदाचिदेफोत्तरता चेति विकल्पः स्यात्। यथा—"अकारो व्यञ्जनानाम्" (१—२१) इति विधानाद्विकल्पः । तथा हि, "रेफोष्मसंयोगे" (२१–१६) "रपः पूर्वो ह्वनी (७–११) इत्यादि । न त्वेवं कारोत्तरत्वमपि विकल्पेन स्वीकृतं कुत्रचित्। तस्मादस्मदुक्त एव युक्तः तुशब्दार्थः ॥ १९ ॥

[1] पा. ८—३—३७.

[2] वर्णद्वयाभ्यधिकौ.

र इत्यस्य व्यञ्जनस्य स्वरूपपूर्वक एफशब्द आख्या। संज्ञायाः प्रयोजनम्—"आशीर्पदया"[1] इत्यादौ रेफादेशः। निर्वचनं तु—रिफ्यते विपाट्यते वस्त्रादिपाटनध्वनिवदुच्चार्यत इति रेफः। तथा च याजयान्तविसर्जनीयस्यादेशविधावाहाश्वलायनः—"विसर्जनीयोऽनत्यक्षरोपधो रिफ्यते"[2] इति। अत्रापवादादेव कारशब्दाख्यानिवृत्तेस्तत्प्रतिषेधो न कर्तव्य इति तुशब्दार्थः। यद्वा—"रादिफः"[3] इत्यकारसहितादेव स्वरूपादिफप्रत्ययो विधीयते। न तु केवलादिति ॥ १९ ॥



## ह्रस्वो वर्णोत्तरस्त्रयाणाम् ॥ २० ॥

वर्णोत्तरो ह्रस्वः त्रयाणां ह्रस्वदीर्घप्लुतानामाख्या भवति। यथा—"इवर्णपर एकारम्" (१०–४) इत्यादि। वर्णशब्द उत्तरो यस्मादसौ वर्णोत्तरः ॥ २० ॥

ह्रस्वो वर्णो वर्णशब्दपरस्तदादीनां त्रयाणां वर्णानां आख्या भवति ॥ यथा—'अवर्णे' (२–१२) इति अकारादीनाम्। संज्ञायाः प्रयोजनम्—"देवा वसव्याः"[4] इत्यादौ विसर्जनीयस्य लोप। निर्वचनं तु—अ इति रूपमनुवृत्तं यस्मिन् वर्णत्रये तदवर्णमिति॥२०



## अकारो व्यञ्जनानाम् ॥ २१ ॥

व्यञ्जनानामकार आख्या भवति। यथा—"शचछपरः"

[1] स. ६—२—९. [2] आश्व. श्रौ. १—५—१०
[3] पा. वार्तिके. [4] सं. २—४—८.

(५–२२) इत्यादि । कारशब्दोत्तरत्वं इदं च विकल्प्यते । समुच्चये तु—"अकारव्यवेतो व्यञ्जनानाम्" (१–१७) इति व्यर्थं स्यात् । ननु तर्हि कारोत्तरता किमर्था, तदानीमपि व्यवायरूपेण अकारलाभात् स एव आख्या भवतु । सत्यम् । शिक्षादिशास्त्रप्रसिद्धसङ्केतानुसारायेति परिहारः । अपरे तु सङ्गिरन्ते—अकारः सर्वस्वरान्तस्य व्यञ्जनस्य ग्राहक इति । यथा—"मनः क्षेमे"[1] "घनाघनः क्षोभणः"[2] "उक्थशासः क्षाम"[3] इत्यादि "न क्षपरः" (९–३) इति प्रतिषेधस्योदाहरणं स्यादिति । तदसारम् । कुतः "वाचापपूर्वस्तटम्" (७–१३) इति पपूर्वस्य तकारस्य टत्वे कृते 'इषे ट्वा' इति स्यात् । तच्चानिष्टम् । किञ्च—"यवनह्रस्वरपरेषु" (१२–४) इत्यत्र स्वरपरशब्दो व्यर्थः स्यात्, भवन्मते सर्वस्वरान्तस्य स्वीकारनियमात् । तस्मादनुपपन्नमेवैतन्मतं मन्महे । किन्तु वर्णमात्रस्याख्या ॥ २१ ॥

व्यञ्जनानां तत्तत्स्वरूपपूर्वकोऽकार आख्या भवति । यथा—"तकारथकारौ शचछपरः" (५–२२) इति । नन्विह व्यञ्जनानां अकारान्ताख्यया लघीयस्यैव शक्ये निर्देशे किमिति गरीयसी कारशब्दाख्या क्रियते? तदुच्यते—

शिक्षाव्याकरणानां यदयं विवरणात्मकः ।
ग्रन्थस्ततोऽत्र नातीव शब्दसङ्कोच इष्यते ॥

[1] तै. ५–२–१. [2] सं. ४–६–४. [3] सं. २–६–१२.

वर्णोत्कार इतीदं च व्याख्यातव्यं तु वार्तिकम्।
शीक्षास्थाश्च ककारादिशब्दा इति तदाश्रयः ॥ २१ ॥

## ग्रहणस्य च ॥ २२ ॥

लक्ष्यं निमित्तं च ग्रहणमित्युच्यते। गृह्यत इति ग्रहणं, गृह्यतेऽनेनेति निमित्तमपि ग्रहणं, पदैकदेशः, प्रातिपदिकमिति यावत्। चकारः पूर्वसूत्रोक्तमकारमाकर्षति। ग्रहणस्य प्रातिपदिकस्य सर्वावस्थस्य अकार आख्या भवति। यथा—"किंश्शिल किंश्शिल" (१६–२६) इति परः किंश्शिलशब्दो लक्ष्यम्। उदाहरणं यथा—"किंश्शिलश्चतुर्थः"[1] "किंश्शिलाय च क्षयणाय च"[2]। "ओष्ठेवःपरो लुप्यते" (१०–१४) इति तु निमित्तम्। यथा—"स्वाहोष्ठाभ्याम्"[3] "उपयाममधरेणोष्ठेन"[4] ॥ २२ ॥

गृह्यत इति ग्रहणं वेदस्थदशब्दः। तत्त्रिविधं, कार्यभाङ्निमित्तमुपबन्ध इति तस्यापि स्वरूपपूर्वकोऽकार आख्या भवति यथा—"साहस्रसारथिः" (६–१३) इति कार्यभाजः। "चौ यरश्रपरः" (४–३१) इति निमित्तस्य। "न सकृयकारपरे" (८–२६) इत्युपबन्धस्य ॥ २२ ॥

## अःकार आगमविकारिलोपिनाम् ॥ २३ ॥

आगमादीनामःकार आख्या भवति। अःकार इति प्रथमाविभक्ते-

[1] सं. ५—५—९. [2] सं. ४—५—९.
[3] सं. ७—३—१६. [4] सं. ५—७—१२

रुपलक्षणम् । आगमस्य यथा—"द्वितीयचतुर्थयोस्तु व्यञ्जनोत्तरयोः पूर्वः" (१४–५)। विकारिणो यथा—"अथ नकारो णकारं" (७–१) । लोपिनो यथा—"तिष्ठन्त्येकया सपूर्वः" (९–१९) इत्येकवचनानि । "लपरो लकारम्" (५–२९) इति द्विवचनम्। "आनुपूर्व्यान्नासिक्याः" (२१–१२) इति बहुवचनम् । आगमश्च विकारी च लोपी च आगमविकारिलोपिनः, तेषाम् ॥ २३ ॥

अनेन पारिभाषिकाणां कृत्रिमाणां चागमादिवाचिनां शब्दानां विभक्तिविशेषो नियम्यते । अःकार इत्यकारविसर्जनीययोस्समुदितयोर्व्याकरणसिद्धेन कारप्रत्ययेन निर्देशः । स खलु बहुलग्रहणानुवृत्त्या वर्णसमुदायादपि भवति । अःकारेण प्रथमा विभक्तिरुपलक्ष्यते ।

अन्यत्र विद्यमानस्तु[1] यो वर्णश्श्रूयतेऽधिकः ।
आगम्यमानतुल्यत्वात्स आगम इति स्मृतः ॥
प्रकृतिस्थस्य शब्दस्य स्थाने यस्यापरो भवेत् ।
स्वतो गुणान्तरोपेतः स विकारोह तत्समः ॥
प्रकृतिस्थस्तु यच्छब्दः संहितायां न दृश्यते ।
तत्स्थाने च न शब्दोऽन्यस्स लोपी नश्वरोपमः ॥

एतेषामागमादीनां प्रथमाविभक्तिराख्या भवति । आगमस्य यथा—"मृपुमिधुपूर्वश्शकारश्चपरः" (६–४) "हकाराद्वणमपरान्नासिक्यम्" (२१–१४) इति । विकारिणो यथा—"असम्पूर्वोऽरमृकारः" (५–९) "लपरो लकारम्" (५–२९) इति । लोपिनः—"ई पूर्वो मकारः" (९–१२) इति ॥ २३ ॥

—o—

[1]अन्यत्राविद्यमानस्तु इति पाठान्तरम्.

## ग्रहणं वा ॥ २४ ॥

तेषां आगमादीनां कचिद्ग्रहणं वा भवति । अःकारेण विनाऽपीति तात्पर्यम् । आगमस्य यथा—" आदिरःहृतिः " (१६-२९) इत्यादि । विकारिणो यथा—" हन्यादुप्यमानं च " (७–३) इत्यादि । लोपिनो यथा—" एष स स्यः " (९–१९) इत्यादि ॥ २४ ॥

ग्रहणं पूर्वतरसूत्रे व्याख्यातम् । तदेव सूत्रस्थं वेदस्थस्य तस्याख्या भवति । 'ग्रहणस्य च' (१–२२) इत्युक्तं अकारान्तरूपं वा । न तु तत्र विभक्तिरिष्यते इत्यर्थः । विभक्तिनिवारणार्थमेवेदं सूत्रमत्र कृतम् । इतरथा 'ग्रहणस्य च' (१–२२) इत्येतस्मात्परं क्रियेत ॥ २४ ॥

---

## आसन्नः सन्देहे ॥ २५ ॥

सन्देहे सति आसन्नं वर्णं पदं वा गृह्णीयात् । " स्वयमातृण्णां च विकर्णीं चोत्तमे "[1] इत्यत्र चकारद्वयसम्भवात् प्रग्रहनिमित्तत्वेन कतरस्योपादानं कर्तव्यमिति सन्देहे यदासन्नं कार्यभाजस्तदेव स्वीकर्तव्यं—" चोत्तमे " (४–११) इति सूत्रे । वर्णस्य यथा—" आपृपती " (४–१९) इत्यादि ॥ २९ ॥

[1] सं. ५—३—७.

यस्मिन् विधौ विशेष्यमेव वा, विशेषणमेव वा निर्दिश्यते, विशेषणताऽर्हं विशेष्यताऽर्हं च अनेकं प्रकृतं, तत्र कतरदस्य विशेषणं कतरदस्य विशेष्यमिति वा संशये आसन्नं प्रत्येतव्यम्। यथा—"अमी चक्षुषी" (४—१२) इत्याद्यनुक्रम्य "पूर्वश्च" (४–१३) इति वक्ष्यते तत्र कस्मात्पूर्व इति विशेषणाकांक्षायां आसन्नो द्यावापृथिवीशब्द एव प्रत्येतव्यः विशेषणतया। न व्यवहितास्ततः पूर्वशब्दाः[1]। तथा—"जपरो जकारम्" (५–२१) इति विशेषणनिर्देशे प्रकृतयोः नकारतकारयोः आसन्नस्तकार एव विशेष्यतया प्रत्येतव्यः। अन्ये तु व्याचक्षते—आसन्नं शब्दरूपं कार्यविधिषु दृश्यमानं सन्देहे उपतिष्ठते। सन्देहस्यैव निवृत्त्यर्थं तद्गृह्यते न तु तस्य पृथक्त्वे कार्यनिवृत्त्यर्थम्। यथा—"सेदु होता"[2] इत्यत्र विसर्जनीयलोपनिमित्तस्य इच्छब्दस्यासन्नं उ इत्येतत्—"स इध्मेन"[3] इत्यादिविषयत्वसन्देहनिवृत्त्यर्थमेव गृह्यते। न तु क्रमाध्याये 'सेत्। इदु।'[2] इत्यत्र उशब्दस्य पृथक्त्वे लोपनिवृत्त्यर्थमिति। तेन तस्य पृथक्त्वेऽपि सेदिति रूपसिद्धिः। तदयुक्तम्। न हि 'स इध्मेन'[3] इत्यादिषु सन्देहोऽस्ति। किन्तु—अतिव्याप्तिरेव। यदप्युच्यते, "पूर्वजे प्रभृत्याऽयम्" (४–२१) इत्यत्र कतरस्य पूर्वजेशब्दस्य ग्रहणमिति संशये उत्तरावधेरासन्नः पूर्वजेशब्दो गृह्यत इति। तत्त्वयुक्ततरं अनिष्टावहत्वात्। 'नानिष्टार्थे शास्त्रप्रवृत्तिः' इति हि न्यायविदां निष्ठा ॥ २१ ॥

—o—

[1] न व्यवहितास्ततः पूर्वस्मदानेकशब्दः इति पाठान्तरम्.

[2] सं. १—१—१४.

[3] सं. २—१—१४.

## अनेकस्यापि ॥ २६ ॥

सन्देहे अनेकस्य पदस्य वर्णस्य वा ग्रहणं भवति । अपि-शब्दः सन्देह इत्यन्वादिशति, यथा—"तिष्ठन्त्येकया सपूर्वः" (९–१९) "एवोत्तरे" (४–११) इत्यादि ॥ २६ ॥

उक्तस्य क्वचिदपवादमाह—

यत्र तु विशेषणस्य द्विबहुवचनान्ततया अनेकाकांक्षा भवति, तत्रानेकस्यापि प्रकृतस्य सम्प्रत्ययो भवति । "लपरौ लकारम्" (५—२६) इति तकारनकारयोः । "नकार एतेषु ञकारम्" (५–२४) इति शचछजानाम् । न त्वासन्नस्यैकस्य नकारस्य ञकारस्य वा व्यक्तिभेदाश्रयणेन द्विवचनबहुवचने उपपाद्ये ॥ २६ ॥

## प्रथमो वर्गोत्तरो वर्गाख्या ॥ २७ ॥

वर्गशब्दोत्तरः प्रथमः स्ववर्गस्याख्या भवति, यथा—"टवर्गश्च तवर्गपरः" (१४–२०) इति । वर्गशब्द उत्तरो यस्मादसो वर्गोत्तरः ॥ २७ ॥

वर्गशब्द उत्तरो यस्मात्स तथोक्तः । अत्र भाविप्रयोगानुसारेणाकारान्ततया निर्दिष्टः । प्रथमाख्यो वर्णो वर्गशब्दान्तः तदादेर्वर्गस्याख्या भवतीति वेदितव्यम् । यथा—"कवर्गे स्पर्शयाति" (२–३९) "टवर्गश्च तवर्गपरः" (१४–२०) इति । निर्वचनं तु—कस्य वर्गः कवर्गः, टस्य वर्गष्टवर्ग इति ॥ २७ ॥

## अं विकारस्य ॥ २८ ॥

अमिति शब्दो विकारस्याख्या भवति । अमिति द्वितीया-विभक्तेरुपलक्षणम् । यथा—" प्रथमपूर्वो हकारश्चतुर्थं " (५—३८) " अथ नकारो णकारम् " (७—१) ॥ २८ ॥

अमिति द्वितीया विभक्तिरुपलक्ष्यते—

सविकारो यदन्यस्य स्थाने शब्दान्तरं स्मृतम् ।
द्वितीयया तु निर्देशे तस्यैव प्रत्ययो मतः ॥

यथा—" असंपूर्वोऽरमृकारः " (५—९) । " उदात्तमुदात्तवति " (१०—१०) । अत्र द्वितीया विभक्तिः शब्दान्तरविकारस्यैव नियम्यते । न तु गुणविकारस्य । तेन—" पूर्वस्वरोऽनुनासिकः " (१५—१) " अनुदात्तानां प्रचयः " (२१—१०) इत्यादिगुणविधिषु निर्देश उपपद्यते ॥ २८ ॥

## पूर्व इति पूर्वः ॥ २९ ॥

यः पूर्वशब्देन विशिष्यते स तत्रैव स्वेन रूपेणोपलक्षितो ज्ञातव्यः, न तु रूपसामान्यादन्यो भिन्नदेशस्थः । यथा—' द्यावापृथिवी " (४—१२) " पूर्वश्च " (४—१३) इति प्रग्रहो भवतीति वक्ष्यति । पूर्वत्वात् " यावती द्यावापृथिवी महित्वा "[1] इति यावतीशब्दः प्रग्रहः । " यावती वै पृथिवी "[2] इति तु न स्यात् प्रग्रहः ॥ २९ ॥

[1] म. १—२—१.
[2] ब्रा. ५—२—१.

अस्मात्पूर्वः कार्यभागिति विधाने तत्पूर्वदेशस्थ एव प्रत्येतव्यः। न तु तत्स्वरूपोपलक्षणमाश्रित्य देशान्तरस्थोपि। तद्यथा— "द्यावापृथिवी" (४-१२) "पूर्वश्च" (४-१३) इति 'यावती द्यावापृथिवी'[1] इत्यत्र यावतीशब्दान्तः प्रग्रहो विधीयते। ततः 'यावती पौर्णमासी'[2] इत्यादावपि प्रग्रहत्वं न कल्प्यम् ॥ २९ ॥



## पर इत्युत्तरः ॥ ३० ॥

यः पर इतिशब्देन विशिष्यते, सोऽपि तत्रैव स्वेन रूपेण प्रत्येतव्यः। यथा—"द्वे" (४-४९) "परश्च" (४-५०) इति प्रग्रहो भवतीति वक्ष्यति। परत्वात् "द्वे जाये विन्दते"[3] इत्यत्र जायेशब्दः प्रग्रहः। "योनिरसि जाय एहि"[4] इत्यत्र तु न प्रग्रहः ॥ ३० ॥

अस्मात्परः कार्यभागिति विधौ तदुत्तरदेशस्थ एव प्रत्येतव्यः। न तत्स्वरूपो देशान्तरस्थोऽपि। यथा—"द्वे" (४-४९) "परश्च" (४-५०) इति "तस्मादेको द्वे जाये विन्दते"[3] इत्यत्र जायेशब्दः प्रगृह्यः। ततः "जाय एहि"[4] इत्यादावपि प्रगृह्यत्वं न कल्प्यम् ॥ ३० ॥



[1] सं. ३—२—६.
[2] सं. १—६—१.
[3] सं. ६—६—४.
[4] सं. १—७—१.

## ऋकारऌकारौ ह्रस्वौ ॥ ३१ ॥

ऋकारश्च ऌकारश्च ह्रस्वसंज्ञौ भवतः। यथा—"ऋतवो वै"[1] "अक्लृप्तस्य क्लृप्त्यै"[2] ॥ ३१ ॥

ऋकारश्च ऌकारश्च ऋकारऌकारौ तौ ह्रस्वसंज्ञौ भवतः। 'ब्रह्म देवा अवीवृधन्'[3] "क्लृप्ता ऋतवः"[4] "तेन च समानकालस्वरः" (१-३३) इति वक्ष्यमाणेनात्रापि सिद्धे पृथग्वचनं मात्रावैषम्यशङ्कानिवृत्त्यर्थम्। न तु मात्रावैषम्यमङ्गीकृत्य ह्रस्वसंज्ञा विधीयते इति युक्तं कल्पयितुम्। सर्वशास्त्रेष्वप्रसिद्धत्वात्॥ ३१ ॥

—o—

## अकारश्च ॥ ३२ ॥

अकारश्च ह्रस्वसंज्ञो भवति। चकारो ह्रस्वमन्वादिशति। यथा—"अयं पुरः"[5] इति ॥ ३२ ॥

चशब्देन 'ह्रस्वौ' (१-३१) इत्यन्वादिश्यते। ततश्चात्र ह्रस्व इति विपरिणामादकारो ह्रस्वसंज्ञो भवति इत्यर्थः। 'अवधूतꣳ रक्षः'[6] ॥ ३२ ॥

—o—

## तेन च समानकालस्वरः ॥ ३३ ॥

तेन अकारेण यः तुल्यकालस्वरः, स च ह्रस्वो भवति।

---

[1] सं. ५—२—६.  [2] सं. ५—४—८  [3] सं. १—१—१३.
[4] सं. ७—१—२०.  [5] सं. ४—३—२.  [6] सं. १—१—६.

अत्रापि चकारो ह्रस्वान्वादेशकः । समानकालस्वर इति इकार उकारश्चेत्यर्थः । सन्ध्यक्षराणां समानकालत्वाभावात् । यथा—"इषे त्वा"[1] "उप प्रयन्तः"[2] । अत्राह, अकारो ह्रस्वः, तेन च समानकालस्वर इत्यारब्धव्यम् । "ऋकारल्कारौ ह्रस्वौ" (१–३१) इति तु नारब्धव्यम्, एवमारभ्यमाणे पुनरुक्ततया गौरवं भवेदिति । उच्यते, आरब्धव्यमेवैतत् । कुतः? ऋकारलकारयोरन्तरा रेफलकारौ स्तः । नतुस्थानत्वादनयोः कालव्यभिचारः स्यात्, ह्रस्वत्वं न गम्येत, तन्मा भूदित्येवमारभ्यते, "ऋकारल्कारौ ह्रस्वौ" (१–३१) इति ॥ ३३ ॥

समानस्तुल्यः कालो यस्य स तथोक्तः । अकारेण तुल्यकालस्वरो ह्रस्वसंज्ञो भवति । कियान् पुनरकारस्य कालः? यावताऽयमुच्चार्यते । न चोच्चारणवैषम्यात्तद्व्यवस्था स्यात् । "चाषस्तु वदते मात्राम्" इति शिक्षोक्तचाषरुतकालतुल्यस्य व्यवस्थितेः । तस्मादिकार उकारश्च ह्रस्व इति सिद्धम् । "मा त्वा हिंसिषम्"[3] । "ऊर्ध्वमिव हि पुंस"[4] । नन्वत्राकार इकार उकारश्चेत्येकसूत्रेण सिद्धे किमर्थं गौरवमाश्रितम् । तदुच्यते—उत्तरसूत्रेऽकारतुल्यकालत्वं विधित्सितम् । तच्चोभयार्थम् । तदन्योक्तमिति न गौरवदोषः ॥ ३३ ॥

—:o:—

## अनुस्वारश्च ॥ ३४ ॥

भवत्यनुस्वारोपि ह्रस्वसंज्ञः । यथा—"तां हस्ते"[5] । चकारो

[1] सं. १—१—१. [2] सं. १—५—५. [3] सं. १—१—४. [4] सं. ५—१—५. [5] सं. ६—१—३.

ह्रस्वान्वाकर्षकः । "अनुस्वारस्स्वरभक्तिश्च" (२१–६) इति स्वरं प्रत्यङ्गत्वविधानादनुस्वारस्य व्यञ्जनत्वम् । तथा सति "ह्रस्वार्धकालं व्यञ्जनम्" (१–३७) इति अर्धमात्रत्वे प्राप्ते तन्मा भूदिति ह्रस्वत्वं विधीयते । ह्रस्वसंज्ञायाः प्रयोजनम्—"विभागे ह्रस्वं व्यञ्जनपरः" (३–१) इति ॥ ३४ ॥

चशब्देनात्र तेन समानकाल इत्यन्वादिश्यते । तथा चानुस्वारोऽकारेण तुल्यकालो भवतीत्यर्थः । "तम् शुचिꣳ शुचयो दीदिवाꣳसम्"[1] । "येषाꣳ सोमस्समृच्छते"[2] । "अग्निꣳ स्तोमेन बोधय"[3] । शिक्षायां तु—

माश्राद्विमात्रोऽनुस्वारो द्विमात्रान्मात्र एव तु ।

इत्युक्त्वा द्विविधस्याप्यनुस्वारस्य संयोगपरत्वे द्वित्वं मात्रिकत्वं चोक्तम्—

मात्रिकादपि संयोगे मात्रिकस्तु द्विरूपवत् ॥ इति ॥

तथा यो मात्रिकात्परस्संहिताकाल एव तु भवति तस्यानुस्वारस्य मात्रापरिमितः काल इत्युक्तम्—

अनुस्वारश्च यो मात्रस्संहिताकाल एव तु । इति ॥

'मात्राद्विमात्रः' इत्येतत्तु पदमध्यवर्त्यसंयोगपरविषयमिति चोक्तम्—

पदमध्ये द्विमात्रं स्यादेकमात्रं द्विरूपवत् । इति ॥

तस्मात्सिद्धम्—

---

[1] सं. ३–५–१२. [2] सं. ३–१–७. [3] सं. ४–१–११

स्वादिसिद्धः[1] परो ह्रस्वादसंयोगपरस्तु यः ।
अनुस्वारो द्विमात्रोऽसावन्यस्सर्वोऽपि मात्रिकः ॥ इति॥

नास्य प्रातिशाख्योक्तिर्विरोधिनी । प्रायिकत्वेनोपपत्तेः । यत्तु केैश्चित् द्वितीयश्लोकस्य अन्यथा व्याख्यानं कृतम्—दीर्घात्परोऽपि पदमध्यगतोऽसंयोगपरो द्विमात्र एवेति । तत्खलु प्रातिशाख्यविरुद्धम् । द्विमात्रभूयस्त्वापत्तेः । अनारब्धे त्वस्मिन् सूत्रे शिक्षायां द्विमात्रानुस्वारबाहुल्यमुक्तं मन्येरन् बाधकाभावादिति । तन्मा मंसत इत्येवमर्थ एवायमारम्भः ॥ ३४ ॥



## द्विस्तावान्दीर्घः ॥ ३५ ॥

तावानिति प्रकृतो ह्रस्व उच्यते । द्विरिति द्विरूपः । 'तावान्' ह्रस्वः दीर्घसंज्ञो भवतीति सूत्रयोजना । तात्पर्यं तु—ह्रस्वद्विगुणकालस्वरो दीर्घसंज्ञो भवतीति । संज्ञायाः प्रयोजनम्—" दीर्घश्समानाक्षरे सवर्णपरे " (१०—२) इत्यादि ॥ ३५ ॥

---

[1] ह्रादिसिद्ध इत्यपि क्वचित्पाठः । लघुमाध्यन्दिनशिक्षायामनुस्वार प्रकम्य—

ह्रस्वो दीर्घो गुरुश्चेति त्रिविधः परिकीर्तितः ।
ह्रस्वात्परो भवेद्दीर्घो ह्रस्व इति दर्शनम् ॥

दीर्घात्परो भवेद्ध्रस्वो माण्डव्य इति दर्शनम् ।
गुरौ परे ह्यनुस्वारो गुरुरेव हि स स्मृतः ॥

गिरयश्चीति तत्र तावत्कारे दीर्घ एव सः ।
देवानां हृदये तद्वत्तस्कराणां यथा ग्रके ॥

इति मात्रादिविधानात्पाठद्वयमपि साधीय इति भाति ॥

अत्र पूर्वतरसूत्रस्थं स्वरपदं मण्डूकगतिन्यायेन अनुवर्तते। द्विस्तावान् द्विगुणः ह्रस्वद्विगुणकालः वायसरुततुल्यकालस्वरो दीर्घसंज्ञो भवति। "यो वै देवान्"[1] ॥ ३६ ॥

—○—

## त्रिः प्लुतः ॥ ३६ ॥

अत्रापि ह्रस्वोऽनुवर्तते, सान्निध्यात्। त्रिरिति त्रिरूपो ह्रस्वः प्लुतसंज्ञो भवति। तात्पर्यं त्वत्रापि ब्रूमः, ह्रस्वत्रिगुणकालः स्वरः प्लुतसंज्ञो भवति इति। संज्ञायाः प्रयोजनम्—"न प्लुतप्रग्रहौ" (१०–२४) इति ॥ ३६ ॥

स्वर इति तावानिति चानुवर्तते। त्रिस्तावान् ह्रस्वत्रिगुणकालः मयूररुततुल्यकालस्वरः प्लुतसंज्ञो भवति 'छिनत्ती३ इति'[2]। निर्वचनं तु-शरादिवद्दूरगामित्वात्प्लुत इत्युच्यते ॥३६॥

—○—

## ह्रस्वार्धकालं व्यञ्जनम् ॥ ३७ ॥

व्यञ्जनं ह्रस्वार्धकालं भवति। न तु व्यञ्जनमिति संज्ञा। अन्यथा "व्यञ्जनकालश्च स्वरस्यात्राधिकः" (१७–९) इत्यत्र कालशब्दस्य पौनरुक्त्यापत्तेः। यथा—"वाक्"[3]। ह्रस्वस्यार्धं, ह्रस्वार्धं, ह्रस्वार्धं कालः परिमाणकालो यस्य तत् तथोक्तम् ॥ ३७ ॥

[1] सं. ३–१–९. [2] सं. १–७–२. [3] सं. १–३–९.

व्यञ्जनं ह्रस्वार्धतुल्यकालमर्धमात्राकालं भवति । यथा— 'भुवनमसि'[1] ङञणनमानां त्ववसानवर्तिनां कालाधिक्यं शिक्षायां स्मर्यते—

ह्रस्वात्परं तु नासिक्यं द्विमात्रं यत्तदुच्यते ।
दीर्घात्प्लुताच्च तन्मात्रमेकमात्रमिति श्रुतिः ॥ इति ।

तत्रातिप्रसङ्गपरिहाराय श्लोकान्तरं कृतम्—

अवसाने विशेषोऽयमन्येषां च न विद्यते ।
संहितायां तु तन्मात्रः पदकालेऽधिको भवेत् ॥ इति ।

अत्र पूर्वार्धेन अनवसानस्थेष्वतिप्रसङ्गः परिहृतः । संहितायां तन्मात्र इति ह्रस्वात्परस्यापि संहिताप्रयोगकाले मात्रिकत्वमेवेत्युच्यते । यस्तु ह्रस्वात्परस्याधिककाल उक्तः स पदाध्याय एवेत्युक्तम्, 'पदकालेऽधिको भवेत्' इति । तस्मात्सिद्धम्—

ह्रस्वात्परोऽवसानस्थः पदाध्यायेऽनुनासिकः ।
द्विमात्रो मात्रिकस्त्वन्यः संहितायां तथाऽखिलम्॥ इति।

अन्ये तु संहिताप्रयोगे पूर्वोक्तो विभागः । पदाध्याये तु ह्रस्वपूर्वस्य दीर्घप्लुतपूर्वस्य च पूर्वोक्ताभ्यामधिककालतेत्याहुः । तदयुक्तम् । स्वतोऽर्धमात्रस्य तदासन्नकालविधिसम्भवे अतिविप्रकृष्टकालकल्पनानुपपत्तेः । अत्रोदाहरणानि—"ईदृङ् । च अन्यादृङ् । च । एतादृङ् । च"[2] 'वृषण्वसू-इति वृषण्-वसू ।'[3] 'ब्रह्मन् । विराट्'[4] । इति द्विमात्राणि । 'विपूर्चीनान्व्यस्यताम्'[5]

---

[1] सं. १—१—१२. [2] सं. १—८—१३. [3] सं. ४—१—२.
[4] सं. २—३—३. [5] सं. १—१—१३.

'सुमङ्गलीः'[1] । 'सत्यराजानँ'[2] 'लाजीँन्'[3] । इति मात्रिकाणि । तथा अवसानस्थलकारस्य पादोनमात्रत्वमुक्तं शीक्षायाम्—

अवसाने लकारस्य त्रिपादत्वं सदा भवेत् । इति ॥

'अस्तु । याल् ।'[3] इति दीर्घप्लुताभ्यां परस्य व्यञ्जनस्य स्वरपरस्य पादमात्रत्वमुक्तम्—

अचः परे विशेषोऽस्ति पादमात्रं विधीयते ।
पूर्वकालो द्विमात्रश्चेदेकं व्यञ्जनमेव यत् ॥ इति ॥

अत्र द्विमात्रग्रहणं त्रिमात्रस्यापि प्रदर्शनम् । तद्यथा—'आयायो भूप'[4] । 'अगा३नग्नीदित्याह'[5] । तथा द्विप्रभृति व्यञ्जनसंयोगे मध्यमानां पादमात्रत्वमुक्तम्—

अस्वरव्यञ्जनं नित्यमणुमात्रं प्रयुज्यते । इति ॥

तद्यथा—'अत्यन्यानगाम्'[6] 'उक्थउक्थे'[7] । चतुरादिसंयोगे त्वन्त्यस्याप्यणुमात्रत्वमुक्तं बहुशः—

संयोगश्चतुरादीनां व्यञ्जनानां यदा भवेत् ।
तदाऽन्त्यव्यञ्जनस्यापि अणुमात्रत्वमिष्यते ॥ इति ।

तद्यथा—'उक्थ्यः'[8] 'तार्क्ष्यः'[9] । स्वरितग्राहिणां व्यञ्जनानां कालाधिक्यमुक्तं शीक्षायाम्—

---

[1] स. १—८—१६. [2] स. ७—४—२०.
[3] सं. ३—३—१०. [4] सं. ३—४—२
[5] सं. २—६—५. [6] सं. १—३—५.
[7] स. १—४—४६. [8] सं. १—६—९.
[9] सं. ४—४—१.

स्वाराः कम्पाश्च रङ्गाश्च ये यत्कालास्स्वभावतः।
वर्धन्ते प्रोच्यमानास्ते क्षिप्रयत्नेऽपि वक्तरि ॥ इति ॥

अत्र स्वरितानां कालवृद्धिवचनं तद्ग्राहिव्यञ्जनार्थमेव। वक्ष्यति– "आदिरस्योदात्तसमश्शेषोऽनुदात्तसम इत्याचार्याः" (१–४६) इति। तदनुदात्तसमत्वं केषु चित्स्वरितस्वरेषु न भवति। किन्तु तदङ्गभूतेषु परव्यञ्जनेष्वेव। तानि स्वरितग्राहीणीत्युच्यन्ते। तेषां कालाधिक्यं विना उच्चारणं न घटते। येषु च स्वरित[1]स्वरेष्वेव अनुदात्तसमत्वं भवति, तत्र कालाधिक्याभावेऽप्युच्चारणमुपपद्यते। तत्रानुस्वारस्तावत्स्वरितग्राही उत्तमश्च पूर्वाङ्गभूतः। तयोर्द्वित्वे तु परो मात्रिक एव। यवलास्तु-ह्रस्वपूर्वका अन्तस्थापराः। ह्रस्वदीर्घाङ्गभूतास्तु रेफपूर्वका इति। तत्रायं विवेकः—

स्वरितग्राह्यनुस्वारो द्विमात्रो मात्रिकात्परः।
दीर्घादध्यर्धमात्रस्स्यात् द्वैरूप्ये मात्रिकं परम् ॥
द्विमात्र उत्तमो ह्रस्वादध्यर्धो व्यञ्जनात्परः।
दीर्घादनन्तरस्तद्वन्मात्रिको व्यञ्जनान्तरः ॥
द्विमात्रा यलवा ह्रस्वादध्यर्धा व्यञ्जनान्तराः।
दीर्घपूर्वात्परा रेफान्मात्रिका इति निर्णयः ॥

अनुस्वारो यथा—"भरेष्विन्द्रꣳ सुहवꣳ हवामहे"[2] "योऽलꣳ श्रियै सन्"[3] "अग्नेस्त्रयो ज्यायाꣳसः"[4] "तेषाꣳ हविष्माꣳश्च"[5]। उत्तमो यथा—"त्वचं करोति"[6] "अपां वृषण्वान्"[2] "कृष्णो रूपम्"[6] "परिभूर्विभ्वान्"[7] "निर्जाल्मकेन शीर्ष्णा"[8]

[1]स्वरितेतिपद केषुचित्कोशेषुनास्ति.

[2]सं. २—१—११. [3]सं. २—२—८. [4]सं. २—६—६.
[5]सं. ७—१—४. [6]ब्रा. १—२—५. [7]सं. ३—२—३.
[8]ब्रा. ५—७—१३.

यत्वा यथा—"एभ्य एवैनं लोकेभ्यः"[1] "शरव्ये ब्रह्म सꣳशिता"[2] "गोभिर्यवं दाधार"[3] "अथर्वणः"[4] "सर्वाभिरेव"[5] "अनयोर्लोकयोः"[6]।

अथ कस्मादस्मिन् ग्रन्थे शिक्षाव्याकरणेषु च मात्रिकाद्विमात्राणां व्यञ्जनानां ह्रस्वदीर्घसंज्ञे न विधीयेते। वर्णान्यत्वाभावात्। स्वरेष्वेव हि कालभेदात् वर्णान्यत्वम्। न व्यञ्जनेषु। नैवं सति—"परीमाणाच्च पञ्चमादिति" (२१-२) इत्यनेन विरोध इति वक्ष्यामः॥ ३७॥

## उच्चैरुदात्तः॥ ३८॥

"आयामो दारुण्यं" (२२-९) इति लक्षणलक्षितः स्वर उदात्त इत्युच्यते। यथा—'सः' इति। संज्ञायाः प्रयोजनम्—"उदात्तात् परोऽनुदात्तस्स्वरितम्" (१४-२९) इति॥ ३८॥

अत्रापि स्वर इत्यनुवर्तते। तथा व्याकरणे—"अचश्च"[8] इत्यधिकृत्य उदात्तादिस्वरूपोपदेशात्। समानस्थाने मूर्ध्नि आसन्ने उपरिभागे जातेन प्रयत्नेन उच्चार्यमाणस्स्वर उदात्तगुणकत्वादुदात्तसंज्ञो भवति। यथा शुक्लगुणयोगाच्छुक्लः पटः। उदादानमुत्क्षेपः। तद्यथा—"यो वै पवमानानाम्"[9]॥ ३८॥

—◦◦—

## नीचैरनुदात्तः॥ ३९॥

"अन्ववसर्गः" (२२-१०) इति सूत्रलक्षणलक्षितः स्वरोऽ-

---

1 सं. २—६—५. 2 सं. ४—६—४. 3 सं. ४—४—८.
4 सं. १—५—११. 5 ब्रा. १—३—७. 6 सं. ५—१—२.
7 सं. १—१—१. 8 पा. १—२—२८. 9 सं. ३—२—१.

नुदात्त इत्युच्यते । यथा—"अवदताम्"[1] । संज्ञायाः प्रयोजनम्—"अनुदात्तो न नित्यम्" (४–४३) इति ॥ ३९ ॥

समाने स्थाने हृदयासन्ने अधोभागे जातेन प्रयत्नेन उच्चार्यमाणस्वरोऽनुदात्तगुणकत्वादनुदात्तसंज्ञो भवति । उदात्तविरुद्धगुणोऽनुदात्तः । "विप्रा अमृता ऋतज्ञाः"[2] । "अवभृथयजूꣳषि जुहोति"[3] ॥ ३९ ॥



## समाहारस्स्वरितः ॥ ४० ॥

तयोरुदात्तानुदात्तयोर्यः समाहारः सः स्वरित उच्यते । यथा—"तेऽब्रुवन्"[4] समाह्रियत इति समाहारः । तयोर्मेलनजन्यः स्वरः, स्वरित इत्यर्थः । स्वरितस्वरूपविधिरयं उपरिष्टात्तु तत्रतत्र स्वरितो वक्ष्यते । यथा—"उदात्तात् परोऽनुदात्तः स्वरितम्" (१४–२९) "उदात्तयोश्च परोऽनुदात्तः स्वरितम्" (१०–१६) "तस्मिन्ननुदात्ते पूर्व उदात्तः स्वरितम्" (१२–९) इत्यादि ॥४०॥

समाहार उभयोस्संभेदात्मकः यथोक्तभागद्वयजन्मना प्रयत्नेन कर्णमूलभागोच्चार्यमाणस्स्वरः स्वरितगुणकत्वात्स्वरितसंज्ञो भवति । स्वर्यते पार्श्वत उत्क्षिप्यत इति स्वरितः । "न ह्यस्यास्यं किञ्चन"[5] । अत्र शीक्षा—

अनुदात्तो हृदि ज्ञेयो मूर्धन्युदात्त उदाहृतः ।
स्वरितः कर्णमूलीयः सर्वास्ये प्रचयस्स्मृतः ॥ इति ॥

---

[1]सं. १—७—२. [2]सं. ४—७—१२. [3]सं. ६—६—३.
[4]सं. ६—२—३. [5]भूसमाजो. [6]सं. २—६—८.

तस्यादिरुच्चैस्तरामुदात्तादनन्तरे यावदर्धं ह्रस्वस्य ॥ ४१ ॥

उदात्तादनन्तरे यः स्वरः स्वर्यते तस्यादिस्तावदुच्चैस्तरामुदात्ततरो भवति, यावद्ध्रस्वस्यार्धम् । यथा—"स इधानः"[1] ॥ ४१॥

अथात्र स्वरितस्यरूपं विविधत्वान्निरूप्यते—

उदात्तगुणात्स्वरादनन्तरे अव्यवहितपरे स्वरिते तस्यादिरुच्चैस्तरामुदात्ततरमुच्चार्यते । कुष्टादिषु प्रथमाख्येन यमेन तुल्यमित्यर्थः । आदिरित्यनेन पूर्वांशोऽभिहितः । यावदर्धं ह्रस्वस्य तावन्मात्रमर्धमात्रासम्मितोऽश इत्यर्थः ॥ ४१ ॥

उदात्तसमश्शेषः ॥ ४२ ॥

ह्रस्वार्धकालाच्छेष उदात्तसमो भवति, न तूदात्त एव । समशब्दप्रयोगात् किंचित् न्यूनत्वं प्रतीयते । अन्यथा, स्वरिताभावात् । पूर्वोक्तमेवोदाहरणम् ॥ ४२ ॥

योऽर्धमात्रांशात्परोंशः स तूदात्तसम एव । ॥ पूर्ववदुदात्ततरः । "य ईजानः"[2] "प्रउगमुक्थम्"[3] ॥ ४२ ॥

[1] सं. ४—४—४. [2] सं. १—४—६. [3] सं. ४—४—२.

## सव्यञ्जनोऽपि ॥ ४३ ॥

केवलस्यायं विधिः पुरस्तादुक्तः, इदानीं व्यञ्जनसहितत्वेऽपि स्वरितस्य तथात्वमुच्यते। सव्यञ्जनोपि स्वरित उदात्तादनन्तरोऽन्यो वा उक्तविधिर्भवति। अपिशब्दः स्वारितमाकर्षति। यथा— "सखिभ्यो वरिवः"[1] "तिष्यः"[2] ॥ ४३ ॥

सव्यञ्जन इति व्यञ्जनपूर्वक उच्यते। तस्यैवालीक्षितत्वेन लक्ष्यत्वात्। तेन पूर्वोक्तव्यतिरिक्तः सर्वस्वारितः परिगृह्यते। सोऽपि पूर्वोक्तलक्षणो भवति। "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्"[3]। तदेवं वाजसनेयिनां स्वरितो लक्षितः ॥४३

---

## अनन्तरो वा नीचैस्तराम् ॥ ४४ ॥

तस्य स्वरितस्य ह्रस्वार्धकालाच्छेपः 'नीचैस्तराम्' अनुदात्ततरो वा भवति। 'अनन्तरः' शेष इत्यर्थः। तदेवोदाहरणम्॥४४॥

अथ शाखान्तरीयो लक्ष्यते—

अनन्तर इत्युदात्ततरादंशात्परोंऽश उच्यते। स नीचैस्तरामनुदात्ततरं वोच्चार्यते। स तु पार्श्वत उत्क्षेपणात्स्वरितात्मको भवति। अनुदात्ततरत्वं तु अधोभागे दृढप्रयत्नमात्रेण वेदितव्यम्। आदिः पूर्ववत्। उक्तान्येवोदाहरणानि ॥ ४४ ॥

---

[1] स. ३—३—११. [2] सं. २—२—१०. [3] स. १—१—४.

## अनुदात्तसमो वा ॥ ४५ ॥

तस्य स्वरितस्य स एव शेषः अनुदात्तसमो वा भवति । तदेवोदाहरणम् ॥ ४५ ॥

अन्यशाखास्थोऽपि लक्ष्यते—

स एव शेषोऽनुदात्तसमो वा भवति । अधोभागजातेन अदृढप्रयत्नेन पार्श्वत उत्क्षेपणात्स्वरितात्मकश्च भवति । आदिः पूर्ववत् । तान्येवोदाहरणानि । एवमुक्तास्त्रयदशाखान्तरीयाः स्वरिताः । ते यमा यद्यप्यस्माकं नेष्टाः । तथाऽप्यस्मदीयस्य स्वरितस्य तद्विलक्षणस्वरूपप्रकाशनार्थमेव उपदिष्टाः । एवमुत्तरत्राप्यनिष्टपक्षोपदेशानां प्रयोजनमनुसन्धेयम् ॥ ४५ ॥

---

## आदिरस्योदात्तसमश्शेषोऽनुदात्तसम इत्याचार्याः ॥ ४६ ॥

तस्यैव स्वरितस्यादिर्ह्रस्वार्धकालः उदात्तसमो भवति । शेषस्त्वनुदात्तसमो भवति इत्याचार्या ब्रुवते । यथा—"सलिलेभ्यो वारिवः"[1] 'तस्यादिः' (१–४१) इत्यारभ्याभिहितेऽस्मिन् विकल्पजाले सूत्रमेतदेवेष्टम् । "प्रश्लिष्टप्रातिहतयोर्मृदुतरः" (२०—११) "तैरोव्यञ्जनपादवृत्तयोः" (२०–१२) इति लक्षणानुकूल्यात् । न तूपरितनमपि सूत्रमिष्टम्, एतल्लक्षणप्रातिकूल्यात् ॥ ४६ ॥

---

[1] सं. १—१—११.

इदानीं स्वमतमुच्यते—

तस्येति प्रकृते पुनरत्र 'अस्य' इति यत्नः प्रक्रियान्तरप्रकटनार्थः । तेनात्रादिरर्धमात्रापरिमित इति नियमो न भवति । किन्त्वङ्गभूतपूर्वोत्तरव्यञ्जनसहितस्य क्वचित्स्वरार्धपर्यन्तोंऽश उदात्तसमो भवति । क्वचित्स्वरपर्यन्तः क्वचित्तूपरितनैकव्यञ्जनपर्यन्त इति त्रिविध आदिः । शेषश्च क्वचित्स्वरार्धात्मकः क्वचित्स्वरार्धव्यञ्जनात्मकः क्वचिद्व्यञ्जनात्मकः इति त्रिविधः । सोऽनुदात्तप्रयत्नेन कर्णमूलभाजा स्वरितात्मको भवति इत्याचार्या उपदिशन्ति । तत्रेयं विवेकः—

पूर्वांशस्स्वरितग्राहिव्यञ्जनादुच्चवद्भवेत् ॥
तदभावे तु दीर्घांशः शेषौ नीचसमाविह ॥

यत्र स्वरितस्वरात्परं स्वरितग्राहि व्यञ्जनमस्ति तत्र तस्माद्व्यञ्जनात्प्राक्तनोंऽश उदात्तसमो भवति । ह्रस्वे दीर्घे च समानमेतत् । यस्मात्तु दीर्घस्वरितात्परं स्वरितग्राहि व्यञ्जनं नास्ति तस्य पूर्वार्धं मात्रापरिमितमुदात्तसमं भवति । एवमुक्तविषयद्वये यौ शेषौ स्वरितग्राहिव्यञ्जनं[1] दीर्घोत्तरार्धं च[2] एतौ उभौ अनुदात्तसमौ भवत इति । तत्रैव स्वरितग्राहिव्यञ्जनसङ्ग्रहः—

स्वरितग्राह्यनुस्वारस्तथा पूर्वाङ्गमुत्तमम् ।
तयोर्द्वित्वे परस्याङ्गं[3] पूर्वाङ्गं चेत्तदेव तु ॥

तथा पूर्वाङ्गभूताश्च यलवा रेफपूर्वकाः ।
ह्रस्वादनन्तरास्त्वेते यद्यन्तस्थापरास्तथा ॥

[1] .....व्यञ्जनादिः. [2] ....रार्धादिश्च. [3] पर इत्यं.

इति । तत्र स्वरार्धपर्यन्त आदिर्यथा—"सं त्वा सिञ्चामि"[1]। "विश्वरूपो वै"[2] । "अयं यस्सोमो न्यधाय्यस्मे"[3] । "यथा व्याघ्रम्"[4] । अत्र स्वरितग्राहिव्यञ्जनाभावादेवं भवति। स्वरपर्यन्त आदिर्यथा—"श्रो३ष सौव्वम्"[5] । "प्रियमासधस्थम्"[6] । "यजान् य आज्यभागौ"[7] । "कल्पाञ्जुहोति"[8] । "तेनैवैनं युनक्ति"[9] "शरव्ये ब्रह्मसंशिता"[10] । अत्र स्वरितादनन्तरस्य व्यञ्जनस्य स्वरितग्राहित्वादेवं भवति । उपरितनैकव्यञ्जनपर्यन्त आदिर्यथा–"अश्मन्त्सं क्षुदस्तु ते शुक्"[10] । "तस्माद्वदन्प्राणन्"[11] । "अह्मार्सेन"[12] । "होतर्यविष्ठ"[13] । "यत्पूतीकैर्वा"[14] । अत्र स्वरितग्राहिणो व्यञ्जनान्तर्हितत्वादेवं भवति ॥ ४६ ॥

---

## सर्वः प्रवण इत्येके ॥ ४७ ॥

प्रवणशब्दः स्वरितपर्यायः । सव्यञ्जन एव स्वरित आदित आरभ्य सर्वः प्रवणो भवतीति 'एके' आचार्याः ऊचिरे । यथा—"सलिलम्यो परिवः"[15] ॥ ४७ ॥

प्रकर्षेण यन्यते व्युत्क्षिप्यत इति प्रवणः । स्वरितस्वरोऽयं सर्वः कृत्स्न एव स्वरितो भवति । न त्वस्य आदितः कश्चिदंश उदात्तसमोऽस्तीत्येके आचार्या उपदिशन्ति । यस्माद्धस्व-

[1]सं. १—६—१. [2]ब्रा. २—६—१. [3]ब्रा. २—२—१२.
[4]ब्रा. ५—४—११. [5]सं. ४—१—२. [6]सं. ५—१—११.
[7]सं. २—६—३. [8]सं. ६—४—८. [9]सं. ५—५—२.
[10]सं. ८—६—४,२. [11]सं. ५—२—१० [12]सं. ५—७—२०.
[13]सं. १—२—१४. [14]सं. २—५—३. [15]सं. ३—३—११.

स्वरितात्परतः स्वरितग्राहि व्यञ्जनं नास्ति तद्विषयमेतत्सूत्रम् । यथा—"धायवस्थोपायवस्थ"[1] । "स्वरुत इरिण उपदधाति"[2] । "अथतिरात्रो भवति"[3] । एवमस्य सूत्रद्वयस्य व्याख्याने—

मपूर्वं स्वर्यते ह्रस्वो दीर्घोऽन्त्यांशे तदुत्तरौ ।
नादानुस्वारकावेव स्वर्येते पूर्वं उच्चवत् ॥

इति शिक्षावचनं मूलमित्यनुसन्धेयम् ॥ ४७ ॥

---

## नानापदवदिङ्ग्यमसङ्ख्याने ॥ ४८ ॥

इङ्ग्यपदं नानापदवद्भवत्यसङ्ख्याने विषये । नानापदवदिति किम् ? "ओपतात्तिग्मंहेते"[4] "तत् सवाते"[5] इत्यादौ "आकारैकारपूर्वस्तु बहुस्वरस्य तेथे" (४–४०) इति प्रग्रहत्वं मा भूदिति । असङ्ख्यान इति किम् ? "द्वे" "परश्च" "एकव्यवेतोपि" (४–४९, ५०, ५१) इति वक्ष्यति । "द्वे सवने शुक्रवती"[6] इत्यत्र प्रग्रहत्वं भवत्विति वदाम. । नानापदमिव नानापदवत् ॥ ४८ ॥

पदमत्र समाम्नायप्रसिद्धं अभिमतम् । न व्याकरणप्रसिद्धम् । कुतः ? "अप्यकारादि" (१–६२) इत्यादिवचनसामर्थ्यात् । इङ्ग्यमिति विभागवत्पदस्य संज्ञा । इङ्ग्यते विभागेन चाल्यत इति इङ्ग्यम् । सङ्ख्यानं चात्र पदानामेव पर्युदस्यते पदसमभिव्याहारात् । तदयमर्थः—इङ्ग्यपदमस्मिन् शास्त्रे नानापद-

---

[1] स. १—१—१. [2] स. ५—२—४. [3] स ७—३—२.
[4] सं. १—२—१४. [5] सं. ६—४—७. [6] सं. ६—१—६.

वत्पृथक्पदे इव भवति पदसङ्ख्यान्संयुक्तविधिविषयं वर्जयि-त्वेति । नन्विङ्ग्यखण्डयोरपि विभागाध्ययनात्सिद्धं नानापद-त्वमविधेयम् । नैतदेवम् । न हीङ्ग्यस्य द्विविधोच्चारणात्पदभेदो भवति । "उपायव इत्युप—आयवः"[1] इति पदैक्यप्रकटन-पूर्वकमेव विभागाध्ययनात् । एतच्च "स्थोपायवः । उपा-यवस्थ"[1] इति क्रमाध्ययनादवसीयते । अत एव 'इषे त्रिच-त्वारिंशत्' इत्यादिसङ्ख्यापाठः । तस्माद्विधेय एव नानापद-वद्भावः । किं प्रयोजनमस्य विधेः? तदुच्यते—"ससादास्त्व-जातिप्रायेण" (३-१२) इति ह्रस्वत्वं वक्ष्यति । तदनिङ्ग्य एव स्यात् । 'अग्निर् होता निषसादा यजीयान्"[2] इति । इङ्ग्यखण्डे तु न स्यात् । "ऋषिर् होता निषसादा पिता नः"[3] इति । कुतो न स्यात्? "पदग्रहणेषु पदं गम्येत" (१-५०) इति नियमात् । तथा "द्वे" "परश्च" (४-४९, ५०) इति प्रग्रहं वक्ष्यति तदनिङ्ग्य एव स्यात् । "द्वे एव यजेत"[4] इति । इङ्ग्यखण्डे तु न स्यात् । 'द्वे द्वे सम्भरति'[5] इति । तथा "अन्तरनाद्यु-दात्ते" (८-१०) इति रेफं वक्ष्यति । सोऽनिङ्ग्य एव स्यात् 'अन्तर्यच्छ मघवन्"[1] इति । इङ्ग्यखण्डे तु न स्यात् । "अ-न्तर्यन्यः पादो भवति"[6] इति । नानापदवद्भावे सति तत्राभीष्ट-सिद्धिः । किञ्च—"आकार एकारपूर्वस्तु बहुस्वरस्य तेथे" (४-४०) इति प्रग्रहत्वं वक्ष्यति । स इहापि स्यात् । "तत्प्रयाते विपजाग्ति"[8] । "न्यमित्राँ ओषतात्तिग्महेते"[7] इति । नानापद-वद्भावे सति तदनिष्टं न भवति । असङ्ख्यान इति किम्?

[1] सं. १—१—१. [2] सं. १—१—१४. [3] सं. ४—६—२.
[4] सं. २—५—५. [5] सं. १—६—८. [6] सं. १—४—२.
[7] सं. १—५—११. [8] सं. ६—४—७. [9] सं. १—२—१४.

वक्ष्यत्येतत् "ताभ्यामेवोभाभ्यां" (४-६२) इत्यन्तत आपष्ठात्प्रग्रहानिमित्तम्[1]। अत्र पदसङ्ख्यानस्यापर्युदासे, "एते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यां"[2] इत्येतेशब्दस्य "ये द्वे अहोरात्रे एव ते"[3] इति येशब्दस्य चान्तः प्रग्रहो न स्यात् । अथ किमर्थं पदसङ्ख्यानस्यैव पर्युदास आश्रीयते? तदुच्यते—यदि "यङ्बुस्वरस्य तेथे" (४-४०) इति स्वरसङ्ख्यानस्याप्ययं पर्युदासस्स्यात् "तत्प्रघाते विषजन्ति"[4] इत्यादावपि प्रग्रहत्वं स्यात् । तन्निवृत्त्यर्थमिति ब्रूमः ॥ ४८ ॥

---

## तस्य पूर्वपदमवग्रहः ॥ ४९ ॥

तस्य इङ्ग्यपदस्य पूर्वपदमवग्रह इत्युच्यते । यथा—"देवायत इति देव-यते"[5] । अवग्रहसंज्ञायाः प्रयोजनं—"नावग्रहः" (४-२) इत्यादि । पदावग्रहशब्दयोर्नियतलिङ्गत्वादन्योन्यान्वयः सम्भवति ॥

तस्येङ्ग्यस्य यत् पूर्वखण्डरूपं पदं तस्यावग्रह इति संज्ञा। यथा—"उपायवः"[6] इत्यत्र उपशब्दः। "श्रेष्ठतमाय"[7] इत्यत्र श्रेष्ठशब्द इति । संज्ञायाः प्रयोजनम्—"अवग्रह आशीर्धूस्सुवः" (५-१०) इत्यादिव्यवहारः ॥ ४९ ॥

---

[1] इत्येते आपष्ठात्प्रग्रहनिमित्ते इति, इति पाठान्तरम्.
[2] सं. ७—३—७. [3] सं. ७—४—४.
[4] सं. ६—४—७. [5] सं. ३—५—५. [6] सं. १—१—१.

## पदग्रहणेषु पदं गम्येत ॥ ५० ॥

पदग्रहणेषु सूत्रेषु गृहीतं पदमेव गम्येत ज्ञातव्यं न पदैकदेशः यथा—"त्वे इत्यनिङ्ग्यान्तः" (४–१०) इति वक्ष्यति । तथा-सति 'त्वे क्रतुम्'[1] इति प्रग्रहो भवति । "क्रत्वे दक्षाय"[2] इति पदैकदेशत्वान्न भवति । गृह्णन्तीति ग्रहणानि पदानां ग्रहणानि पदग्रहणानि तेषु ॥ ५० ॥

यानीह ग्रहणानि तत्सरूपस्य पदस्य सद्भावात्पदग्रहणानि भवितुमर्हन्ति, पदैकदेशस्य च सद्भावात् तदेकदेशग्रहणानि च तद्विषयोऽयं नियम आरभ्यते । पदग्रहणेषु सम्भवत्सु पदमेव प्रतीयेत । न तु पदैकदेशोऽपि । यथा—"अवासचस्व" (१–८) इति ह्रस्वार्थेऽवाग्रहणे "अवानो देव्या कृपा"[3] इति पदमेव गृह्यते । न तु पुनः "त्रिभिर् ऋणवा जायते"[4] इति पदैकदेशश्च । तथा "ईंपूर्वो मकारः" (९–१२) इति लोप-निमित्ते ईंग्रहणे । "ईमन्द्रा सुप्रयसः"[5] इति पदमेव गृह्यते । न तु "पृथिवीं मा हिंसीः"[6] इति पदैकदेशश्च । अत्र ग्रहणे-ष्विति वचनाद्ग्रहणमात्ररूपासु संज्ञास्वयं नियमः । न तु "चौ-परप्रपरः" (४–११) "नकारदशकारं च परः" (९–२०) इत्य-कारान्तासु संज्ञास्विति वेदितव्यम् ॥ ५० ॥



[1] सं. १—५—१०.
[2] सं. १—२—५.
[3] सं. ४—१—४.
[4] सं. ६—३—१०.
[5] सं. ४—१—८.
[6] सं. ४—२—९.

## अपि विकृतम् ॥ ५१ ॥

अपिशब्दः पदमन्वादिशति । पदग्रहणेषु विकृतमपि पदमवगन्तव्यम् । यथा—णत्वापत्तौ "वा हनः" (७–६) इति ग्रहीष्यते पदमिति कृत्वा विसर्जनीये ओत्वमापन्नेऽपि णत्वं नैव निवर्तते । "प्रवाहणो वन्हिः"[1] "एष स स्यः" (९–१९) इति विसर्जनीयलोपग्रहणं पठिष्यते । "अयमुष्य प्रदेवयुः"[2] इत्यत्र सकारे षत्वमापन्नेऽपि विसर्गलोपो भवत्येव ॥ ५१ ॥

पदग्रहणेषु पदं वक्ष्यमाणकार्ययोगाद्विकृतमपि प्रतीयेत । न तु विकृतरूपस्यान्यत्वादप्रत्ययः । यथा—"अवासचस्वानुदा" (३–८) इति नुदापदस्य ह्रस्वत्वं वक्ष्यति । तत्पदं क्रमाध्याये णत्वयोगाद्विकृतमपि कार्यभाग्भवत्येव । "अग्ने जातान् । जातान्प्र। प्रणुद"[3] । तथा स्तरीमापदं षत्वटत्वाभ्यां विकृतमपि कार्यभाग्भवत्येव । "स्तीर्णं बर्हिः । बर्हिस्सुष्टरीम"[4] । "उदथापरश्च".(९–२४) इति प्रतिषेधं वक्ष्यति । उत्पदमुत्त्वमापत्त्या विकृतमपि निमित्तं भवत्येव । "अमित्रानुन्नयामि स्वा५ अहम्"[5] । अथापदं ह्रस्वापत्तया विकृतमपि क्रमाध्याये प्रतिषेधनिमित्तं भवत्येव । "अथो यक्षि । यक्षि विद्वान् । विद्वानथ"[6] ॥ ५१ ॥

---

[1] सं. १—३—३. [2] सं. ३—५—११.
[3] सं. ४—३—१२. [4] सं. ५—१—११.
[5] सं. ४—१—१०. [6] सं. ३—२—११.

## अप्यकारादि ॥ ५२ ॥

अत्रापि अपिशब्दः पदान्वादेशकः । पदग्रहणेऽप्यकारादि अपि पदं विज्ञेयम् । यथा—"श्वर्त्ता वयुना" (३–२) इति ह्रस्वादेशे वक्ष्यति । अकारादेरपि तस्य श्वाग्रहणस्य ह्रस्वत्वं भवति यथा—"अश्वावन्तꣳ सहस्रिणम्"[1] । अकार आदिर्यस्य तत्तथोक्तम् ॥५२॥

पदग्रहणेप्यकाराद्यपि तत्पदं प्रत्येतव्यम् । यथा—"श्वर्त्ता वयुना" (३–२) इति श्वापदस्य विहितं कार्यं 'अश्वावन्तꣳ सहस्रिणम्'[2] इत्यश्वापदेऽपि भवति । "गोशुप्मः" (११–१६) इति गोपदस्योक्तनिमित्तत्वं "अगोअर्घꣳ सोमं कुर्यात्"[3] इत्यगोपदेऽपि भवति ॥ ५२ ॥

---

## अनूकारादि च ॥ ५३ ॥

नकारः पदमिति बोधयति । पदग्रहणेऽनूकारादि अपि पदं विज्ञेयम् । "अꣳशु" (१६–२९) इत्यनुस्वारागमे वक्ष्यति । अनूकारादेरपि तस्यानुस्वारागमः स्यात् । यथा—"अनꣳशु कुर्वन्तः"[4] । अनूकार आदिर्यस्य तत्तथोक्तम् । नन्वत्र सूत्रे अन्नित्यस्य कारोत्तरत्वं कथं क्रियते "वर्णः कारोत्तरः" (१–१६) इति सूत्रे वर्णमात्रस्य कारोत्तरत्वविधानभङ्गप्रसङ्गात् । उच्यते ।

[1] स. ३—३—११.
[2] स. ३—३—११.
[3] स. ६—१—१०.
[4] सं. ३—२—२.

सत्त्वं, एतच्छास्त्रबलान्न क्रियते किन्तु शास्त्रान्तरबलात् क्रियते। यथा—पाणिनीयाः एवकारः, अपिकारः, इत्यादीनां साधुतां कथयन्ति। एवमत्रापि। एवं "अःकार आगम" (१—२३) इत्यत्रापि चोद्यपरिहारो विज्ञेयो ॥ ५३ ॥

व्याख्यातमेतत्पूर्वसूत्रेण। उदाहरणं तु—"अनूहनू" (३—७) इत्यनूशब्दस्योक्तं निमित्तत्वमननूशब्देऽपि भवति। 'प्रयाजवदननूयाजम्'[1] इति। अत्र विकृतादीनां पृथक्सूत्रकरणं विकृतादीनां* व्यस्तानामेव योगे पदप्रत्ययः न समुदितानामित्येवमर्थम्। ततश्च "नाधमाधारय" (३—८) इत्युक्तं ह्रस्वत्वं "प्राणा वै सजाताः"[3] इति णत्वाकारादित्वयोस्समवाये न भवति ॥ ५३ ॥

---

## एकवर्णः पदमपृक्तः ॥ ५४ ॥

एकश्चासौ वर्णश्च एकवर्णः। स चेत् पदं भवति, सोऽपृक्तसंज्ञः स्यात्। यथा—"स उवेकविंश वर्तनिः"[4]। पदमिति किम्—"यज्ञपता३विति"[5]। संज्ञायाः प्रयोजनं—"उकारोऽपृक्तः प्रकृत्या" (९—१६) इति अपृक्त इति व्यञ्जनेनासंयुत इत्यर्थः ॥

पदात्मक एकवर्णोऽपृक्तसंज्ञो भवति। न चात्रैकशब्दाभावेऽप्येकत्वाधगमात्तदानर्थक्यं शङ्कनीयम्। अपृक्तसंज्ञाया अन्वर्थत्वख्यापनार्थत्वात्। यथा—'आ ददे'[6] 'उलोकमग्ने'[7] 'ओ ते

---

[1] 'कार्य' इति पाठान्तरम्. [2] स. ६—१—५.
[3] स. २—६—९. [4] सं. ४—३—३.
[5] सं. ६—६—२. [6] सं. १—१—९.
[7] स. १—४—४६. *विकारादीनां.

यन्ति"[1] । संज्ञायाः प्रयोजनं—"उकारोऽपृक्तः प्रकृत्या' (९–१६) इत्यत्र वक्ष्यामः ॥ ९४ ॥

---

## आद्यन्तवच्च ॥ ५५ ॥

चकारान्वादिष्टं तदपृक्तसंज्ञं पदं आदिवदन्तवच्च कार्यभाक् भवति । आदिवद्यथा—" स उवेकविंश शवर्तनिः "[2] इत्यत्र " तस्यादिरुच्चैस्तरां " (१–४१) इति कार्यं भवति । अन्तवद्यथा— 'ओ ते यन्ति'[3] इत्यत्र ' अन्तः ' (४–३) इति प्रग्रहकार्यं भवति । आदिश्चान्तश्च आद्यन्तौ, ताविव आद्यन्तवत् ॥ ९९ ॥

आदिश्च अन्तश्च आद्यन्तौ तयोरिव । चशब्दः अपृक्तसंज्ञं वर्णमन्वादिशति । अपृक्तस्यादिवदन्तवच्च कार्यं भवति । वक्ष्यति ह्याचार्यः—" तृतीयः स्वरघोषवत्परः " (८–३) इति तत्र पदादिभूतेष्वेव स्वरघोषवत्सु परतः कार्यमिष्यते । ततश्च " उपभृद्देहि "[4] । " सेदु होता "[5] । इत्यादौ प्रथमस्य तृतीयादेशो न स्यात् अपृक्तस्यादित्वाभावात् । यस्मात्परं किञ्चिदस्ति पूर्वं नास्ति स आदिरित्युच्यते । तथा—' ओकारः पदान्तः प्रग्रहो भवति '[6] इति वक्ष्यति । " ओ ते यन्ति "[1] इत्यत्र तन्न स्यात् । अपृक्तस्यान्तत्वाभावात् । यस्मात्पूर्वं किञ्चिदस्ति परं नास्ति स अन्त इत्युच्यते । अस्माद्विधिवचनादपृक्तेऽपि कार्यसिद्धिः ॥ ९९ ॥

---

[1] सं. १—४—११. [2] सं. ४—३—३. [3] सं. १—४—११.
[4] सं. १—१—१२ [5] सं. १—१—१४. [6] अत्रैव ४—६ सूत्रे.

## वर्णस्य विकारलोपौ ॥ ५६ ॥

वर्णमात्रस्य विकारलोपौ स्यातां न तु सर्वस्य पदस्य । विकारस्तावत्, "धूर्षाहो"[1] इति । लोपस्तु, "स ते जानाति"[2] ॥५६॥

पदस्य यौ विकारलोपौ विधास्येते "अवग्रह आशीर्धूर्स्वुवरिति रेफम्"। "अवग्रह इत्येकम्" (९-१०, १८) इति तावेकस्यैव वर्णस्य वेदितव्यौ । न कृत्स्नस्य पदस्य । नन्वेवं सति कतमस्य वर्णस्येति नावगम्यते । तदुच्यते—पदसंहिता हि पदान्तस्य पदादेश्च भवति । तयोरन्यतरस्य भविष्यतः । कतरस्येति तु तत्रैवावगम्यते ॥ ५६ ॥

## विनाशो लोपः ॥ ५७ ॥

वर्णस्य विनाशो लोपसंज्ञो भवति । यथा—"ईमन्द्रा सुमनसः"[3] । संज्ञायाः प्रयोजनं—"अथ लोपः" (९–११) इत्यादि । वर्णस्य नित्यतां केचिदाहुः । तन्निराकरणाय व्याकरणानुसारेण सूत्रमेतदभाणि ॥ ५७ ॥

विनाशः पदावस्थायां श्रुतस्य संहितायामदर्शनं लोपसंज्ञो भवति । अदर्शनं चानुचारणम्[4] । ततश्च "ईंपूर्वो मकारः" (९–१२) "लुप्यते" (११–१) इत्यादिषु अनुच्चारणमेव विधित्सितं वेदितव्यम् । प्रध्वंसो लोप इति त्वयुक्तम् । उच्चरितप्रध्वंसिनां वर्णानां संहिताकालपर्यन्तमनवस्थानात् ॥ ५७ ॥

[1] सं. १-२-८.
[2] सं. १-२-१४.
[3] सं. ४-१-८.
[4] चानुचारणात्.

## अन्वादेशोऽन्त्यस्य ॥ ५८ ॥

निमित्तस्य निमित्तिनो वा अन्त्यस्यान्वादेशो भवति । निमित्तीति प्रधानं कार्यभागिति यावत् । निमित्तस्य यथा—" इन्यादुप्यमानं च " (७–३) इत्यन्त्यस्य निशब्दस्य । निमित्तिनो यथा—" अकारस्तु संहितायामपि " (९–८) इत्यत्र "सुश्लोकाँ४"[1] इत्यन्त्यस्य अकारस्य । अन्त्यस्येति किं " ब्रह्मा३न्त्व४राजन् "[1] " अग्ना३ इत्याइ "[2] " विचित्यस्सोमा३ न विचित्या३ इति "[3] ॥ ९८ ॥

" चापीत्यन्वादेशकौ " (२२–६) इति वक्ष्यति । ताभ्यामन्वादेशः क्रियमाणोऽन्त्यस्यैव वेदितव्यः । न तु समासनिर्देशा-[4] त्सर्वस्येति । यथा—" पुपूरुधिसुवः " (७–२) इत्यादिसूत्रादनन्तरं " इन्यादुप्यमानं च " (७–३) इत्यत्रान्वादेशो निष्पूर्व इत्यस्यैव भवति । न सर्वस्य । " अवर्णव्यवेतोऽपि " (७–५) इत्यत्र त्वनन्त्यस्याप्यन्वादेशे कारणं तत्रैव वक्ष्यामः ॥ ९८ ॥

---

## उपबन्धस्तु देशाय नित्यम् ॥५९॥

उपबन्धस्तु स्वदेशायैव नित्यं निर्देशको भवति । उपबध्यत इत्युपबन्धः । एतस्मिन्नित्यधिकरणरूपः सङ्ख्यानविषयः प्रदेशश्च उपबन्ध उच्यते । यथा—" इरावती " (४–२२) इत्यादि सूत्र-

[1] सं. १-८-१६. [2] सं. ६-५-८.
[3] सं. ६-१-९. [4] समनिर्देशा.

द्वयं, "सोमाय स्वैतस्मित्" (४—४८) "गमयतो भवतः" (४-९२) इति च । उपबन्धे यदुक्तं तदन्यत्र न भवतीति तु-शब्दार्थः । यथा—'इत्याह देवी ह्येषा देवस्सोमः"[1] । अत्र त्रिपदप्रभृतिन्यायेन "पूर्वेणे प्रभृत्यायं" (४—२३) इति प्राप्तिः अन्यत्र यो निषेधः स उपबन्धे न भवतीति नित्यशब्दार्थः । यथा— "सदोहविर्धाने" (४—११) इति प्रग्रहो ग्रहीष्यते । केवलं हविर्धाने इति सर्वथा न प्रग्रहो गृह्यते । यथा—"हविर्धाने खायन्ते"[2] इत्ययमन्यत्र निषेधो "हविर्धाने प्राची प्रवर्तयेयुः"[3] इत्यत्र न प्रसरति । "गमयतो भवतः" (४—९२) इत्यादिना प्राप्तिः । नन्वेतदनुपपन्नम् । अन्यत्र निषेधस्य क्वचिदुपबन्धेऽपि दर्श-नात् । यथा—"अथ मिथुनी भवतः"[4] इत्यत्र "गमयतो भवतः" (४—९२) इत्युपबन्धप्राप्तिः । "न आमी" (४—९३) इत्या-दिना अन्यत्र निषेधेन निषिध्यते । तथा—"वायव आरोहण-वाहौ"[5] इत्यत्र "सोमाय स्व" (४—४८) इति प्राप्तिः । "अते समानपदे" (४—९४) इत्यनेन अन्यत्र निषेधेन निषिध्यते । अत्रोच्यते—'आमी वायवे मनवे' इत्यादीनां कण्ठोक्तत्वादेव निषेधः प्रसरतु, केवलहविर्धाने प्रग्रहो न इत्यार्थिको निषेधो न प्रस-रत्येव । आर्थिककण्ठोक्तयोः कण्ठोक्तस्य प्राबल्यात् । ननु "अते

---

[1] सं. ६-१-७. [2] सं. ६-२-११. [3] सं. ३-१-३.

[1] सं. ६-५-८. [2] सं. ५-६-२१.

अवे" (४–२४) इत्यनयोः कण्ठोक्त्यैवालं, तत्र नित्यग्रहणेन किम्। उच्यते—नितरां परिहारः। कण्ठोक्तिरुपबन्धप्राप्तिमेव निवर्तयति। नित्यशब्दस्तु प्राप्त्यन्तरमपि परिहरति। यथा—"द्वे जाये विन्दते"[1] इत्यत्र "एकव्यवेतेऽपि" (४–९१) इति प्राप्तिः। "वनस्पते वीड्वङ्गः"[2] इत्यत्र "वीड्" इत्यादिप्राप्तिः। एवमाद्यूहनीयम्। माहिषेयमतानुसारेणैवं प्रपञ्चितम्॥ ९९॥

उपशब्दस्समीपवाची। उपबध्यत इत्युपबन्धः। इह त्रिविधं शब्दरूपं कार्यविधिषु तत्सम्बन्धितया ग्रहीष्यते कार्यभाक् निमित्तमुपबन्ध इति। तत्र यदभक्तकार्यांतकार्यभाजश्च पूर्वं परं वा पदात्मकं पदैकदेशात्मकं वा संहिताम्नायस्थं शब्दरूपं पूर्वत्वेन परत्वेन वा कार्यविधिषु निर्दिश्यते, कार्यभाजो वा परत्वेन पूर्वत्वेन वा निर्दिश्यमानस्यावधितया तत्सर्वं निमित्तम्। यथा—"विभागे ह्रस्वं व्यञ्जनपरः" (३–१) "असम्पूर्वोऽस्मृधारः" (९–९) इति। यत्त्वेवंलक्षणान्निमित्तादन्यच्छब्दरूपं पूर्वत्वेन परत्वेन वा कार्यहेतुतया कार्यभाजो निमित्तस्य वा समीपे निबध्यते ततः पूर्वमुत्तरं वा तदुपबन्ध इत्युच्यते। स खलु स्वयोध्याय देशाय नित्यं प्रभवति। पृथग्भूतोऽपि कार्यं साधयत्येव। देशान्तरव्यावृत्तिर्हि[3] तस्य प्रयोजनम्। न तु पृथग्भावे कार्यनिवृत्तिः। यथा—"हि ष्मात्वंतरा" (३–८) इति ह्रस्वविधाने पठितौ 'हि' 'स्यम्' इत्युपबन्धौ पदाध्याये पृथग्भूतावपि ह्रस्वकार्यं साधयतः। "आपः। हि। स्थ।"[4] "अग्ने।

[1] सं. ६-६-४.
[2] सं. ४-६-६.
[3] व्यावृत्तिरेव.
[4] सं. ५-६-१.

रवम् । तर ।"[1] इति "शुछिद्रग्ने" (५–१७) इति लोपनिमित्तस्येच्छन्दस्य उपबन्धौ 'उ' 'अग्ने' इत्येतौ क्रमाध्याये पृथग्भूतावपि कार्यं साधयतः । "सेत् । इवु । उ होता"[2] "सेत् । इदग्ने । अग्ने अस्तु"[3] इति। तुशब्दो निमित्तं विनिवर्तयति। तद्धि कार्यभाजः प्रतिसम्बन्धि । तस्य विभागविषयस्य विभागाभावे सन्धानविषयस्य च सन्धानाभावे कार्यं न भवति । यथा— "इन्द्रायद्यन्वान्परः" (३–२) । "इन्द्रावतीमपचितीम्"[4] "अकुर्वे च प्रत्ययात्परः" (५–७) । "इषुम । समिति । अकुर्वत ।"[5] अन्ये तु व्याचक्षते—"इरावतीप्रभृत्यादाधार" (४–२९) इत्यादिनिर्देशनिबन्ध एव उपबन्ध इति । तेषां इरावतीप्रभृतिदेशस्थस्य मनवेशब्दस्य "सोमाय स्वराज्ञे" इत्यनुवाकस्थयोः राज्ञेवायवेशब्दयोश्चान्तः प्रग्रहस्स्यात् । ननु "नह्रो अह्रे नित्यम्" (४–३९) "अते समानपदे नित्यमवे चावे च" (४–१४) इति नित्यप्रतिषेधात्तन्न स्यात् । यद्येवमनारम्भणीयमेवैतत्सूत्रम् । प्रयोजनाभावात् । अपि चास्मिन् व्याख्यानेऽस्मदुक्तोपबन्धानां निमित्तान्तर्भावात् तत्पृथग्भावे कार्याणि न स्युरित्यलं प्रपञ्चेन ॥

—o—

## नानापदीयं च निमित्तं प्रग्रहस्त्रादिषु ॥६०॥

चकारः तुशब्दनिगदितं नवर्थमन्वादिशति । प्रग्रहेषु स्त्रादिषु च नानापदसम्बन्धिनिमित्तमसंहितायामपि स्वकार्यं[7]मुपदिशतीति प्रग्र-

[1] सं. ४-१-९. [2] सं. १-१-१४. [3] स. १-२-१४.
[4] सं. ५-७-४. [5] सं. ६-२-३. [6] सं. ५-६-२१.
[7] अनुस्वारप्रग्रहकार्यं इति पाठान्तरम्.

हानुस्वारकार्यं न निवर्तते । यथा वक्ष्यति—"ग्रीचक्रे पपरे" (४–२८) प्रग्रहो भवत इत्यत्र प्रग्रहत्वे पकारेणोपदिष्टे पदकालेऽपि तथैव । स्वादिषु च यथा—"नावग्रहपूर्वः" (१६–११) इत्यवग्रहेणानुस्वारागमे निषिद्धे पदकालेऽपि तथैव । यथा—"अर्धमासे देवाः"[1] । पत्वणत्वादौ तु नानापदीयं निमित्तम् । संहितायामेव कार्यं करोतीत्ययमारम्भः । यथा—"शुचिषदिति शुचि—सत्"[2] । "प्रवाहणा इति प्र—वाहनः"[3] ॥ ६० ॥

अथ निमित्तानामपि केषां चिदुपबन्धवत्पृथग्भावेऽपि कार्यकरत्वमस्तीत्याह—

पृथग्भूतं पदं नानापदं तत्र भवं नानापदीयम् । निमित्तं पूर्वसूत्रे व्याख्यातम् । प्रग्रहाश्चतुर्थाध्याये वक्ष्यन्ते । "स्वरोह पाता" (१६–२) इत्यादयोऽनुस्वारभाजः शब्दाः स्वादयः । प्रग्रहेषु स्वादिषु च पृथग्भूतपदस्थमपि निमित्तं भवति । न तु पृथग्भावादनिमित्तम् । तेषु प्रतिसम्बन्धिव्यतिरिक्तनिमित्तमस्ति । न हि प्रग्रहपदानां प्रतिसम्बन्ध्यस्ति विभागसंहितासाधारणत्वात् । स्वादीनां तु समानपदस्थोप्यैव प्रतिसम्बन्धि । तद्व्यतिरिक्तस्य निमित्तस्य पृथग्भावेऽपि युक्तं कार्यम् । यथा—"ओकारोऽसाहितोऽकारव्यञ्जनपरः" (४–६) । "न सुन्वान न देवयो । असदत्र सुवीर्यम्"[4] । "बृहदर्चं विभावसो । महिषीव त्वद्रयिः"[5] ।

---

[1] सं. २-५-६.   [2] सं. १-८-१५.   [3] सं. १-३-१.
[5] सं. १-८-२२.   [6] सं. १-१-१४.

तथा स्वादिषु—"नावग्रहपूर्वः" (१६—११)। "पौर्णमासीति पौर्ण—मासी"[1]। "अर्धमास इत्यर्ध—मासे"[2]। चशब्दात्संहितायामपि निमित्तं भवति॥ ६०॥

---

## यथोक्तं पुनरुक्तं त्रिपदप्रभृति त्रिपदप्रभृति॥

त्रयाणां पदानां समाहारस्त्रिपदम्। कार्यभाजः पदस्य तृतीयत्वं विज्ञेयम्। ईदृशं त्रिपदं प्रभृति आदिर्यस्य तत्त्रिपदप्रभृति यथोक्तं पूर्वोक्तविधिं करोति अविशेषेण[3] तत्त्रिपदप्रभृति पुनरुक्तं चेत्। तथा हि—"लुप्यते त्वकार एकारौकारपूर्वः" (११—१) इत्यनेन प्रथमकाण्डे तृतीयप्रश्ने "देवस्य त्वा सवितुः प्रसवेऽश्विनोः"[4] इत्यत्र अकारे लुप्ते तदेव वाक्यं, वाजपेयेऽपि (सं. १-७-१०) अलोपं बाधित्वा तथैव भवति, त्रिपदप्रभृतित्वात्। "उभा वाम्"[5] इत्यत्र "सुपथा राये अस्मान्"[5-6] इत्येतत् "उदु त्यं जातवेदसम्"[6] इत्यत्रापि तथैव। तथा "सं ते वायुः"[7] इत्यत्र "स जातो गर्भो असि रोदस्योः"[7-8] इत्येतत् "क्रूरमिव"[8] इत्यत्रापि तथैव। ब्राह्मणवाक्येषु तु त्रिपदमात्राद्वा कार्यं भवति। ब्राह्मणवाक्येषु पूर्वस्थलस्यैवोक्तम्। यथा—"इमामगृभ्णन्"[9] इत्यत्र "मर्यश्रीस्स्पृहयद्वर्णो अग्निः"[9-10] इत्येतद्वाक्यम् "उत्क्राम"[10] इत्यत्रापि तथैव भवति। कार्यभाजः

[1] सं. १-६-७. [2] सं. २-५-६. [3] स्वविशेषणाय इति पाठान्तरम्.
[4] सं. १-३-१. [5] सं. १-१-१४. [6] सं. १-४-४३.
[7] सं. ४-१-४. [8] सं. ५-१-५. [9] सं. ४-१-२. [10] सं. ५-१-२.

पदस्य तृतीयत्वमिति किम् ? "ये अन्तरिक्षे ये दिवि तेभ्यः"[1] इत्युख्ये । "येऽन्तरिक्षे ये दिवि येषां"[2] इति रुद्रोत्तमानुवाके। प्रभृतीति किम् ? "त्वमग्ने रुद्रः"[3] इति याज्यायां "दिवस्परि प्रथमं जज्ञे अग्निः"[3] इति वाक्यं "अग्नयेऽन्नवते"[4] इत्यत्र "इतः प्रथमं जज्ञे अग्निः"[4] इति पुनरुक्तं सत्तथैव भवेदिति चेन्, मैवम् त्रिपदमात्रादेव तथाभाव इति नात्र वक्तुं युक्तम् । किन्तु "जज्ञे सङ्स्कानः" (११–१६) इति जज्ञेग्रहणसामर्थ्यात् । अन्यथा तस्य वैयर्थ्यात् । पदवीप्सा अध्यायपरिसमाप्तिं द्योतयति ॥ ६१ ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे
प्रथमोऽध्यायः.

—※—

त्रीणि पदानि प्रभृतिरादिर्यस्य तदिदं त्रिपदप्रभृतीति तद्गुणसंविज्ञानो बहुव्रीहिः । तथाभूतं चतुर्थं पदं पुनरुक्तं मन्त्रान्तरे ब्राह्मणान्तरे वा पुनः प्रयुक्तं यथोक्तं यथापूर्वमेव भवेत् पूर्वस्मिन् प्रयोगे तस्य यत्कार्यं तदभावो वा दृश्यते, तदेवोत्तरस्मिन्नपि प्रयोगे भवति । एतदुक्तं भवति—कार्यतदभावप्रयुक्तचतुर्थपदानां चतुर्णां पदानां मन्त्रैकदेशभूतानां तेनैव क्रमेण मन्त्रान्तरैकदेशतया पुनरध्युनी तत्रापि चतुर्थे पदे प्रापकान्तराभावेऽपि पूर्ववत् दृष्टं कार्यं भवति । नियर्तकान्तराभावे च कार्यं निवर्तते ।

[1] सं. ४-२-८. [2] सं. ४-५-११. [3] सं. १-३-१४.
[4] सं. २-२-४. [5] सेवक.

तत्र कार्यम्—"द्रापे अन्धसस्पते"[1] इत्यत्रानुवाके "रक्षा च नो अधि च देव ब्रूहि"[1—]इत्यलोपो* दृष्टः। सः "ये ते पन्थानः"[2] इत्यत्रापि भवति। कार्याभावस्तु पौरोडाशिके—"देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां"[3]इत्यकारलोपो दृष्टः। स त्वकारलोपाभावस्थाने वाजपेयकाण्डेऽपि(सं-१-७-१०) तथैव भवति। त्रिपदप्रभृतीनां पदानां समूहस्त्रिपदप्रभृतीति तु व्याख्यानं न युज्यते हौत्रब्राह्मणे—"देवी देवपुत्रे इत्याह देवी ह्येते'[4]इत्यत्र श्रुतस्य 'इत्याह देवी'[1—5]इति पदत्रयस्याध्वरब्राह्मणे "सा देवि देवगच्छेहीत्याह देवी ह्येषा"[5]इति पुनश्श्रुतौ तृतीये पदे प्रग्रहप्रसङ्गात् तथोख्यकाण्डे—"ये अन्तरिक्षे ये दिवि"[6]इति श्रुतस्य पदचतुष्टयस्य शतरुद्रीयऽन्वारोहे—"येऽन्तरिक्षे ये दिवि येषां"[7]इति पुनश्श्रुतौ द्वितीयपदे अलोपप्रसङ्गाच्च। यस्तु कृत्स्नस्य मन्त्रस्य पुनःप्रयोगस्तत्र मन्त्रान्यत्वाभावादचतुर्थेऽपि पदे पूर्ववत्कार्यं भवत्येव। यथा—'अग्ने अग्नील'[8]इत्यत्र 'दधिक्राव्णो अकारिषम्'[8—9]इति पुनश्श्रुतौ द्वितीयस्य पदस्य अलोपः। यच्च मन्त्रपदानां ब्राह्मणेऽनुवादस्तत्र स एव मन्त्रोऽनूद्यत इति मन्त्रान्यत्वाभावान्मन्त्रकाण्डवदचतुर्थमपि पदं भवति। "मर्यश्रीस्स्पृहयद्वर्णो अग्निरिति"[10]। न तत्र प्राक्कान्तरमपेक्षणीयम्। मन्त्रान्यत्वाभावात्। द्विरुक्तिरध्यायपरिसमाप्तेरुपलक्षणम्॥ ६१॥

इत्याचार्यगार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये प्रातिशाख्यव्याख्याने प्रथमोऽध्यायः.

[1] सं. ४-५-१०. [2] स. ७-५-२४ [3] स. १-१-४. [4] स. २-६-७.
[5] सं. ६-१-७. [6] स. ४-२-८ [7] सं. ४-५-११. [8] स. ७-४-१९.
[9] सं. १-५-११. [10] स. ५-१-३. * इत्यकारलोपो.

## द्वितीयोऽध्यायः.

### अथ शब्दोत्पत्तिः ॥ १ ॥

उक्तो वर्णसमाम्नायस्तेषां वर्णानां कीदृक् कारणं, कथं वा तदुपलब्धिः इत्याकांक्षानन्तरं तन्निरूप्यते इत्यानन्तर्यार्थे अथशब्दः । अथवा इत उत्तरं यद्वक्ष्यते तच्छब्दोत्पत्तिरित्यधिकृतं[1] वेदितव्यमित्यधिकारार्थः। शब्दो नाम ध्वनिः, वर्णानामकारादीनामुपादानकारणं, तदुत्पत्तिर्जन्म, उपलब्धिर्वा । यथा उदकस्य दर्शनात् पूर्वमेव भूमौ जलमस्त्येव तत् खननाद्दृश्यते तद्वत् सेयमु[2]च्यत इति सूत्रार्थः ॥ १ ॥

इदानीं वेदवर्णानां उच्चारणप्रसिद्ध्यर्थं, "मकारस्स्पर्शपरस्तस्य सस्थानमनुनासिकम्" (५-२७) इत्यादिषु सस्थानादिज्ञापनार्थं च शब्दोत्पत्तिप्रकार उपदिश्यते—अथेत्ययमधिकारः, शब्दस्योत्पत्तिर्जन्म, साऽधिकृता वेदितव्या । द्विविधश्शब्दो नित्यः कार्यश्चेति । तत्र नित्यः सर्वदेशव्यापक एक[3]श्शब्दो ब्रह्मेत्यभिधीयते । तस्मात्कार्यशब्द उत्पद्यते स व्यक्तः क्वाचित्कोऽनन्तभेदश्च । तस्य वर्णात्मकस्योत्पत्तिः इह व्याख्येयतया अधिक्रियते ॥ १ ॥

—○—

### वायुशरीरसमीरणात् कण्ठोरसोः सन्धाने॥

वायुं अग्निः समीरयति । वायुश्शरीरम्[4] । तथाभूतात् समीरणात् प्रेरणात् अभिघातादित्यर्थः । 'कण्ठोरसोः' 'सन्धाने' मध्यदेशे शब्दोत्पत्तिर्भवति । शिक्षा चैवमस्ति—

---

[1] सा शब्दोत्पत्तिरित्यतदधिकृतं. [2] शब्दोत्पत्तिः. [3] व्याप्यव्यक्त एक इति पाठान्तरम्, [4] समीरयति । समीरयति वायुश्शरीरम् ।

मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ।
मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम् ॥[1]

वायुश्च शरीरं च वायुशरीरे तयोः समीरणं तस्मात् । अन्ये त्वाहुः— वायोः शरीरे सतः[2] समीरणं, तस्मात् शब्दोत्पत्तिरिति । अत्रेत्थं समासः । राजदन्तादित्वाच्छरीरशब्दस्य परनिपातः । शरीरे वायुः वायुशरीरं तस्य समीरणं तस्मात् । अस्मिन्मते वायोः समीरणकर्तृत्वमेव, न तु कर्मत्वम् ॥ २ ॥

तत्र सर्ववर्णानुवर्तिनः सामान्यरूपस्य तावदुत्पत्तिरुच्यते—

समीरणादिति संपूर्वादीर्तेर्भावे ल्युट्प्रत्ययः । वक्त्रा प्रेर्यमाणस्य कोष्ठचस्य वायोश्शरीरे यत्समुत्थानं प्रयोज्यव्यापारस्तस्मादित्यर्थः । यद्वा—संपूर्वादीर्तेर्ण्यन्ताल्ल्युट्प्रत्ययः । तस्य वायोश्शरीरे यत्समुत्थापनं प्रयोजकव्यापारस्तस्मादित्यर्थः । कण्ठश्चोरश्च कण्ठोरे[3] इति प्राण्यङ्गत्वादेकवद्भावे कर्तव्ये छान्दसं द्विवचनम् । तयोस्सन्धाने मध्याकाशे शब्दस्योत्पत्तिरित्यन्वयः। अत एव संस्तुतिश्श्रूयते—'नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि'[4] 'आकाशशरीरं ब्रह्म '[5]इति च । अत्र शिक्षा—

मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ।
मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ॥' इति । तदेवं

[1]'आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया । किञ्च—आकाशवायुप्रभवः शरीरात् समुद्भरन्वक्त्रमुपैति नादः । स्थानान्तरेषु प्रविभज्यमानो वर्णत्वमायाति स एव शब्दः ॥ इति नैयायिके' इत्यधिकः पाठः.

[2]यत्.  [3]कण्ठोरसी.  [4]तै. उ. १-१.  [5]तै. उ. १-६.

सर्ववर्णानुवर्तिनः सामान्यरूपस्य कण्ठोरोमध्यं स्थानं, कोष्ठ्यो वायुः करणं, तत्समीरणं यत्न इत्युक्तं भवति ॥ २ ॥

## तस्य प्रातिश्रुत्कानि भवन्त्युरः कण्ठशिरो मुखं नासिके इति ॥ ३ ॥

'तस्य' प्रकृतस्य शब्दस्य उरःप्रभृतीनि स्थानानि 'प्रातिश्रुत्कानि' भवन्ति । 'प्रतिश्रुत्' प्रतिध्वनिः तत्सम्बन्धीनि 'प्रातिश्रुत्कानि' ॥

इदानीं विशेषरूपाणामुत्पत्तिस्थानानि सर्वाणि निर्दिशति—

तच्छब्देन प्रकृत उत्पत्त्याश्रयः शब्दः प्रत्यवमृश्यते । प्रतिनियततया श्रूयत इति प्रतिश्रुद्विशेषरूपं तदर्हन्तीति प्रातिश्रुत्कानि, प्राग्वर्तीयष्ठक् । शिर इत्यास्यस्योपरि प्रावरणमुच्यते । मुखमित्युत्तरदन्ताः तन्मूलमुत्तरोष्ठो हनूमूलं तालु च । नासिके इति नासिकाछिद्रयोः कण्ठासन्नप्रदेश उच्यते । एतानि स्थानानि तस्य वर्णात्मकस्य शब्दस्य विशेषरूपनिष्पत्त्यर्हाणीत्यर्थः ॥३॥

## संवृते कण्ठे नादः क्रियते ॥ ४ ॥

एतदादिना सूत्रत्रयेण शब्दस्य त्रैविध्यमुच्यते, नादः, श्वासः, हकारः च इति । तावन्नादलक्षणमाह—संवृते कण्ठे यः शब्दः क्रियते सः नादसंज्ञो भवति । संज्ञायाः प्रयोजनं—'नादोऽनुप्रदानम्' (२–८) इत्यादि ॥ ४ ॥

[1] उत्पत्तिमान्

अथ वर्णानां विशेषरूपोत्पत्तौ प्रथमकारणभूता[1] अनुप्रदानाख्या नादादयो बाह्यप्रयत्ना उच्यन्ते—

संवरणं कण्ठस्य सङ्कोचः । स खलु संवारो नाम बाह्यप्रयत्नः । तस्मिन् सति नादाख्यो बाह्यः प्रयत्नः क्रियते, उत्पाद्यते । नादध्वनिसंसर्गात् व्यञ्जनेषु[2] घोषो नाम बाह्यः प्रयत्नो जायते इति शिक्षायां स्मर्यते ॥ ४ ॥

—∞—

## विवृते श्वासः ॥ ५ ॥

विवृते कण्ठे यः शब्दः क्रियते सः श्वाससंज्ञो भवति । संज्ञायाः प्रयोजनं—'अघोषेषु श्वासः' (२–१०) इति ॥ ५ ॥

विवरणं कण्ठस्य विस्तरणम् । स एव विवाराख्यो बाह्यः प्रयत्नः । तस्मिन् सति श्वासो नाम बाह्यः प्रयत्नः क्रियते । तद्ध्वनिसंसर्गादघोषो नाम बाह्यः प्रयत्नो जायते इति शिक्षायां स्मर्यते ॥ ५ ॥

—∞—

## मध्ये हकारः ॥ ६ ॥

संवृतविवृतयोः मध्ये मध्यमप्रकारे यः शब्दः क्रियते स हकारसंज्ञो भवति । संज्ञायाः प्रयोजनं–'हकारो हचतुर्थेषु' (२–९) इति ॥ ६ ॥

मध्ये भवो मध्यः, "अ साम्प्रतिके"[3] । तदयमर्थः—साम्प्रतिके प्रकृतिस्थे कण्ठे सति हकारोनाम बाह्यः प्रयत्नः क्रियते । तेन च व्यञ्जनेषु घोषो जायते ॥ ६ ॥

—∞—

[1] पृथक्करणभूताः. [2] 'व्यञ्जनेषु' इति क्वाचित्कः पाठः. [3] पा. ४-३-९.

## ता वर्णप्रकृतयः ॥ ७ ॥

वर्णानां प्रकृतयः वर्णप्रकृतयः । ता वर्णप्रकृतयो भवन्ति ये नादश्वासहकारा उक्ताः । नादप्रकृतयः केचिद्वर्णाः, श्वासप्रकृतयोऽन्ये, हकारप्रकृतयोऽन्ये । यथा, मृत्प्रकृतयो घटशरावादयः । यथा वा, तन्तुप्रकृतयः पटाः । ननु सर्वनाम्नः प्रकृतपरामर्शकत्वात् नादश्वासहकारेषु पुंलिङ्गेषु परामर्शार्हेषु सत्सु ता इति स्त्रीलिङ्गप्रयोगः कथं साधुः? उच्यते । "निर्दिश्यमानप्रतिनिर्दिश्यमानयोः एकतामापादयन्ति सर्वनामानि कामचारेण तल्लिङ्गतामुपाददते" इति महाभाष्यवचनात् प्रयोगसाधुत्वमध्यवसीयते । तस्मादन्योन्यान्वयसम्भवः ॥ ७ ॥

प्रकृतय इत्यादिकर्मणि प्रशब्दः । करणे क्तिन् प्रत्ययः । कर्तुमारभ्यन्ते आभिर्वर्णा इति प्रकृतयः । प्रकृतिशब्दस्य स्त्रीविषयत्वात्ता इति विशेषणम् । नादश्वासहकारा वर्णानां विशेषरूपोत्पत्तौ प्रथमकारणानीत्यर्थः ॥ ७ ॥

---

## नादोऽनुप्रदानꣳ स्वरघोषवत्सु ॥ ८ ॥

स्वरेषु घोषवत्सु च वर्णेषु, नादः अनुप्रदानं भवति । अनुप्रदीयते अनेन वर्ण इति अनुप्रदानं मूलकारणम् । अनुप्रदीयते उपादीयते जन्यत इत्यर्थः ॥ ८ ॥

अथैषां विषयविभाग उच्यते—

स्वरेषु घोषवत्सु च व्युत्पाद्येषु नादोऽनुप्रदानं भवति ।

अनुशब्दः पश्चादर्थे । कोष्ठ्यवायुसमुद्भवात्परं मूर्ध्नि प्रतिघातान्निवृत्ते तस्मिन् कण्ठस्य संवारादयो यथोक्तास्तिस्रोऽवस्था भवन्ति, तदा प्रदीयन्ते स्थानेषु निवेश्यन्ते एभिर्वर्णा इत्यनुप्रदानानि ॥ ८ ॥

---

## हकारो हचतुर्थेषु ॥ ९ ॥

हकारश्च चतुर्थाश्च हचतुर्थाः तेषु वर्णेषु हकारः अनुप्रदानं भवति। ननु संज्ञाविधानक्रमभङ्गान्नेदं सूत्रमवतरति । मैवम् । घोषवत्स्विति सामान्यान्नादो हचतुर्थेषु च प्रसज्यते इत्यतिप्रसङ्गपरिहारार्थत्वादवतरत्येवेति वदामः ॥ ९ ॥

हश्च चतुर्थाश्च हचतुर्थास्तेषु हकाराख्यः प्रयत्नः अनुप्रदानं भवति । अयं हकारप्रयत्नः तृतीयतया प्रागुक्तोऽपि पूर्वसूत्रापवादतया तदनन्तरमेव विनियुज्यते । पूर्वत्र तु तृतीयतयाऽभिधानं तत्कारणभूतायाः मध्यावस्थायाः इतरावस्थाद्वयनिरूप्यत्वादित्यनुसन्धेयम् । हचतुर्था घोषवत्सु महाप्राणा इतरे अल्पप्राणाः ॥ ९ ॥

---

## अघोषेषु श्वासः ॥ १० ॥

अघोषेषु वर्णेषु श्वासोऽनुप्रदानं भवति ॥ १० ॥

अघोषेषु श्वासोऽनुप्रदानं भवति ॥ १० ॥

## भूयान् प्रथमेभ्योऽन्येषु ॥ ११ ॥

साान्निध्याच्छ्वास इति लभ्यते । प्रथमेभ्यः अन्येषु अघोषेषु श्वासः भूयान् अधिकः भवति ॥ ११ ॥

तत्र विशेषमाह—

प्रथमव्यतिरिक्तेषु अघोषेषु प्रकृष्टः श्वासः अनुप्रदानं भवति । ततश्च प्रथमा अल्पप्राणाः अघोषेषु । इतरे तु महाप्राणाः । तदुक्तं शिक्षायाम्—"महति वायौ महाप्राणा अल्पे वायावल्पप्राणाः" इति । तदेवं रूपविशेषहेतवो बाह्यप्रयत्ना उक्ता दर्शिताश्च । स्वरविशेषहेतवस्तु वक्ष्यन्ते, पर्वरूपानुप्रयोगात् ॥११॥

—○—

## अवर्णे नात्युपसꣳहृतमोष्ठहनु नातिव्यस्तम् ॥

'अवर्णे' उच्चार्यमाणे ओष्ठहनु 'अत्युपसंहृतं' अतिसंश्लिष्टं 'न' भवति । 'अतिव्यस्तं' अतिविवृतं च 'न' भवति । ओष्ठौ च हनू च ओष्ठहनु । "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानां"[1] इत्येकवद्भावः । तदेकस्मिन्नुभयथा न शक्यते कर्तुमिति योगविभागः कार्यः—अकारे नात्युपसंहृतम्, आकारे च प्लुते च नातिव्यस्तम्, इति ॥ १२ ॥

अथात्र स्थानकरणाभ्यन्तरप्रयत्ना उच्यन्ते—

उपसंहार उपश्लेषणं समीपनयनमिति यावत् । हनुशब्दश्चास्यपार्श्वभागयोर्वर्तते । ओष्ठौ च हनू च ओष्ठहनु । व्यस्तं विक्षिप्तम् । तदयमर्थः—अवर्णे उच्चार्ये ओष्ठयोरीषद्समासः परस्परोपश्लेष कार्यः । एवं हन्वोश्च तथा ईषद्समासः परस्पराधि-

---

[1] पाणिनि. २-४-२.

श्लेष ओष्ठयोः कार्यः । एवं हन्वोश्च । अत्रोपश्लेषभूयस्त्वस्य विश्लेषभूयस्त्वस्य च समानविषयत्वासम्भवात् विनिवेश आश्रीयते ह्रस्वे अवर्णे उपश्लेषभूयस्त्वं दीर्घप्लुतयोस्तु विश्लेषभूयस्त्वमिति । अतएव 'अकारवदोष्ठौ' (२-२) इत्यतिदेक्ष्यति । न त्ववर्णवदिति । शिक्षायां च स्मर्यते—'विवृतमूष्मणां स्वराणां च संवृतमकारस्य' इति । अत्रावर्णस्य हनू स्थानम् । ओष्ठौ करणम् । तदुत्तरत्र स्पष्टीकरिष्यते । उक्तं च शिक्षायाम्—'कुक्षिस्थानमवर्णमेके' इति ॥ १२ ॥

—:o:—

## ओकारे च ॥ १३ ॥

चकारो हनुमात्रकार्यान्वादेशकः । ओष्ठकार्यस्य परसूत्रेण विशेषविधानात् । 'ओकारे' उच्चार्यमाणे हनू अतिव्यस्ते न भवतः ॥ १३ ॥

चशब्देन नातिव्यस्तामित्येतदन्वादिश्यते । "अन्वादेशोऽन्त्यस्य" (१-५८) इति । नातिव्यस्तताऽत्र हन्वोरेव । ओष्ठयोर्विशेषवचनात् । तदयमर्थः । ओकारे उच्चार्ये हनू नातिव्यस्ते भवतः ॥

—:o:—

## ओष्ठौ तूपसंहृततरौ ॥ १४ ॥

सान्निध्यादोकार इति लभ्यते । ओकारे कार्ये 'ओष्ठौ' 'उपसंहृततरौ' स्याताम् । तुशब्द ओष्ठयोः पूर्वोक्तविधिं निवारयतीति वररुचिरुवाच । माहिषेयस्तु बभाषे—'बन्धोः'[1] इत्यादिकमोकारं सव्यञ्जनं व्यस्ततो निवारयतीति ॥ १४ ॥

[1] सं. २—५—८.

## भूयान् प्रथमेभ्योऽन्येषु ॥ ११ ॥

सान्निध्याच्छ्वास इति लभ्यते । प्रथमेभ्यः अन्येषु अघोषेषु श्वासः भूयान् अधिकः भवति ॥ ११ ॥

तत्र विशेषमाह—

प्रथमव्यतिरिक्तेषु अघोषेषु प्रकृष्टः श्वासः अनुप्रदानं भवति । ततश्च प्रथमा अल्पप्राणाः अघोषेषु । इतरे तु महाप्राणाः । तदुक्तं शिक्षायाम्—"महति वायौ महाप्राणा अल्पे वायावल्पप्राणाः" इति । तदेवं रूपविशेषहेतवो बाह्यप्रयत्ना उक्ता दर्शिताश्च । स्वरविशेषहेतवस्तु वक्ष्यन्ते, एवंरूपानुप्रयोगात् ॥११॥

—<>—

## अवर्णे नात्युपसंहृतमोष्ठहनु नातिव्यस्तम् ॥

'अवर्णे' उच्चार्यमाणे ओष्ठहनु 'अत्युपसंहृतं' अतिसंश्लिष्टं 'न' भवति । 'अतिव्यस्तं' अतिविवृतं च 'न' भवति । ओष्ठौ च हनू च ओष्ठहनु । 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानां'[1] इत्येकवद्भावः । तदेकस्मिन्नुभयथा न शक्यते कर्तुमिति योगविभागः कार्यः—अकारे नात्युपसंहृतम्, आकारे च प्लुते च नातिव्यस्तम्, इति ॥ १२ ॥

अथात्र स्थानकरणाभ्यन्तरप्रयत्ना उच्यन्ते—

उपसंहारः उपश्लेषणं समीपनयनमिति यावत् । हनुशब्दः शाखापार्श्वभागयोर्विनते । ओष्ठौ च हनू च ओष्ठहनु । व्यस्तं विश्लिष्टम् । तदयमर्थः—अवर्णं उच्चार्यं ओष्ठयोरीषद्समासः परस्परोपश्लेष कार्यः । एवं हन्वोश्च तथा ईषद्समासः परस्परावि-

[1] पाणिनि. २-४-२.

श्लेष ओष्ठयोः कार्यः । एवं हन्वोश्च । अत्रोपश्लेषभूयस्त्वस्य विश्लेषभूयस्त्वस्य च समानविषयत्वासम्भवात् विनिवेश आश्रीयते ह्रस्वे अवर्णे उपश्लेषभूयस्त्वं दीर्घप्लुतयोस्तु विश्लेषभूयस्त्वमिति । अतएव 'अकारवदोष्ठौ' (२-२) इत्यतिदेक्ष्यति । न त्ववर्णवदिति । शिक्षायां च स्मर्यते—'विवृतमूष्मणां स्वराणां च संवृतमकारस्य' इति । अत्रावर्णस्य हनू स्थानम् । ओष्ठौ करणम् । तदुत्तरत्र स्पष्टीकरिष्यते । उक्तं च शिक्षायाम्—'हनुस्थानमवर्णमेके' इति ॥ १२ ॥



## ओकारे च ॥ १३ ॥

चकारो हनुमात्रकार्यान्वादेशकः । ओष्ठकार्यस्य परसूत्रेण विशेषविधानात् । 'ओकारे' उच्चार्यमाणे हनू अतिव्यस्ते न भवतः ॥ १३ ॥

चशब्देन नातिव्यस्तामित्येतदन्वादिश्यते । "अन्वादेशोऽन्त्यस्य" (१-१८) इति । नातिव्यस्तताऽत्र हन्वोरेव । ओष्ठयोर्विशेषवचनात् । तदयमर्थः । ओकारे उच्चार्ये हनू नातिव्यस्ते भवतः ॥



## ओष्ठौ तूपसंहृततरौ ॥ १४ ॥

सान्निध्यादोकार इति लभ्यते । ओकारे कार्ये 'ओष्ठौ' 'उपसंहृततरौ' स्याताम् । तुशब्द ओष्ठयोः पूर्वोक्तविधिं निवारयतीति वररुचिरुवाच । माहिषेयस्तु बभाषे—'बन्धोः '[1] इत्यादिकमोकारं सव्यञ्जनं व्यस्ततो निवारयतीति ॥ १४ ॥

[1] सं. २–५–८.

तुशब्दो नातिव्यस्तमित्येतद्विनिवर्तयति । ओष्ठौ हन्वोः परस्परं च उपश्लेषिततरौ भवतः । ओकारस्य हनू उत्तरोष्ठश्च स्थानमधरोष्ठः करणम् ॥ १४ ॥

ईषत्प्रकृष्टावेकारे ॥ १५ ॥

प्रकृष्टावित्यत्र द्विवचनेन प्रकृतावोष्ठौ गृह्येते । 'एकारे' कार्ये ओष्ठौ 'ईषत् प्रकृष्टौ' स्याताम् । प्रकृष्टता सन्निकृष्टता ॥ १५ ॥

ओष्ठावित्यन्वादिश्यते । एकारे उच्चार्ये ओष्ठौ परस्परं ईषत् प्रकृष्टौ भवतः । एतेनास्य विवृतप्रयत्नत्वम्[1] ॥ १५ ॥

उपसंहृततरे हनू ॥ १६ ॥

सान्निध्यादेकार इति लभ्यते । एकारे कार्ये 'हनू' 'उपसंहृततरे' भवतः । अतिशयेनोपसंहृते उपसंहृततरे ॥ १६ ॥

हनू तु परस्परमुपश्लेषिततरे भवतः । प्रयत्नान्तरं चास्य वक्ष्यति—'तालौ जिह्वामध्यमिवर्णे'। 'एकारे च' (२-२२,२३) इति । तेनास्य हनू तालु च स्थानम् । ओष्ठौ जिह्वामध्यं च करणम् ॥ १६ ॥

जिह्वामध्यान्ताभ्यां चोत्तराञ्जम्भ्यान्स्पर्शयति ॥ १७ ॥

एकारे कार्ये 'जिह्वामध्यान्ताभ्याम्' 'उत्तरान् जम्भ्यान्' 'स्पर्श-

[1] विवृतप्रयत्नत्वमिति इति क्वचित्कः पाठः.

यति' स्पृशेदित्यर्थः। पाल्यतीत्यादिवत् स्वार्थे णिच्। 'जम्भयान्' इति हनुमूलप्रान्तप्रदेशान् इत्यर्थः। मण्डूकप्लुतिन्यायेन चकार एकारमाकर्षति। जिह्वाया मध्यं तस्य अन्तौ ताभ्यां जिह्वामध्यान्ताभ्याम्॥ १७॥

जिह्वाया मध्यं जिह्वामध्यं तस्यान्तौ पार्श्वभागौ। चकार एकारमन्वादिशति। प्रकृतत्वात्। तेन स्पर्शयति च, न चेति योज्यः। हनूमूलयोरुपरिप्रदेशा उत्तरजम्भ्याः। स्पर्शयतीति स्वार्थिको णिच्। यद्वा—जिह्वामध्यस्यान्तौ प्रयोज्यकर्तारौ स्पृशतः। ताभ्यां वक्ता प्रयोजकः स्पर्शयति। एवमुत्तरत्रापि द्रष्टव्यम्। अत्र अव्यञ्जनपूर्वक एकारे स्पर्शनम्। व्यञ्जनपूर्वके तु न स्पर्शनमिति विभागः। तथैव दर्शनात्॥ १७॥

---

## उपसꣳहृततरे च जिह्वाग्रमृकारर्कारल्कारेषु वर्स्वेषूपसꣳहरति॥ १८॥

चशब्देन हन्वोरन्वादेशः[1]। ऋकारे ॠकारे लृकारे च कार्ये हनू 'उपसंहृततरे' भवतः। जिह्वाग्रं च 'वर्स्वेषु' 'उपसंहरति' निक्षिपेत्। 'वर्स्वेषु' इति दन्तपङ्क्तेरुपरिष्टादुच्चप्रदेशेषु इत्यर्थः। ननु "अरमृकारपरे" (१०–८) इति लक्षणासम्भवादृकारर्कारल्कारेष्विति कथं सन्धिः साधुः? सत्यम्। नैतल्लक्षणात् किन्तु शास्त्रान्तरबलात् साधुः। एवं "ऋकारल्कारौ ह्रस्वौ" (१–२१) इत्यत्रापि[2] विज्ञेयम्॥ १८॥

उपसꣳहृततरे इति हन्वोर्विशेषणम्। सामर्थ्यात्। वर्स्वा नाम रेफटवर्गस्थानयोर्मध्यप्रदेशाः। ऋकारादिषु त्रिषूच्चार्येषु

---

[1] चशब्दो हन्वोरन्वादेशकः.  [2] इति;

हन्वोः परस्परोपश्लेषः । जिह्वाग्रस्य वर्स्वैपूपसंहारश्च कार्यः । एतेषां वर्स्वास्स्थानम् । जिह्वा हनू च करणम् ॥ १८ ॥

## एकेषामनुस्वारस्वरभक्तयोश्च ॥ १९ ॥

चकारः पूर्वोक्तविधिमन्वादिशति । यथासङ्ख्येन 'अनुस्वारस्वरभक्त्योः' पूर्वोक्तविधिर्भवति । अनुस्वारे हन्वोरुपसंहारः, स्वरभक्तौ जिह्वाग्रस्य वर्स्वैपूपसंहारः । एतत् 'एकेषां' मतम् । अन्येषां तु मतं अनुस्वारस्यानुनासिकमात्रत्वं, स्वरभक्तेः ऋकारतुल्यत्वं इति[1] । तच्चिन्त्यम् ॥ १९ ॥

एकेषामन्येषां मतेन अनुस्वारे हनूपसंहारः कार्यः । स्वरभक्तौ जिह्वाग्रस्य, वर्स्वैपूपसंहार इति यथाक्रमं विनिवेशः । तेषामनुस्वारस्तावन्नासिक्यः । स्वरभक्तिरप्यऋकारार्धरूपेति । स्वमते तु अनुस्वारस्य वक्ष्यति आनुनासिक्यम् । "अनुस्वारोत्तमा अनुनासिकाः" । 'नासिकाविवरणादानुनासिक्यम्' (२–३०, ६२) इति । स्वरभक्तेस्तु रेफस्थानादिकं[2] भवति । 'रेफस्स्वरभक्तिः' (२१–१६) इति हि वक्ष्यति ॥ १९ ॥

## अनादेशे प्रण्यस्ता जिह्वा ॥ २० ॥

यत्र 'जिह्वाग्रेण,' 'जिह्वामध्येन' (२–३१, ३७) इत्यादिः[3] 'अनादेशः' अनुपदेशः तत्र विषये 'प्रण्यस्ता' 'जिह्वा' तूष्णीम्भूता भवति ।

[1] इति परर्रचिविरचितम्. [2] रेफवत् स्थानादिकं. [3] इत्यादेः.

प्रकर्षेण न्यस्ताप्रण्यस्ता । यथा—' उप मा '[1] । नन्वनादेशे सर्वकरणानां तूष्णीम्भावसिद्धेः किमर्थोऽयमारम्भः? उच्यते—एकारस्य जिह्वामध्यान्तनिष्पाद्यत्वमस्तीति तदवयवस्याप्यकारस्य तथात्वमस्तीति अकारत्वसाम्यात् अन्यत्रापि 'अय'[2] इत्यादौ तथात्वं प्रसज्येत । तच्चानिष्टम् । तन्मा भूदिति परिहारः । न आदेशः अनादेशः तस्मिन् उपदेशाभावे इत्यर्थः ॥ २० ॥

यत्र जिह्वाया व्यापारो नादिश्यते अवर्णादौ तत्र सा प्रण्यस्ता प्रसारितैव भवेत् ॥ २० ॥



## अकारवदोष्ठौ ॥ २१ ॥

सान्निध्यादनादेश इति लभ्यते । ओष्ठयोर्यत्रानादेशस्तत्र 'अकारवत्' अकारे यथा तथा 'ओष्ठौ' भवतः नात्युपसंहृततरावित्यर्थः । यथा—" इन्द्रः "[2] इति ॥ २१ ॥

ओष्ठावपि व्यापारानादेशे अकारवद्भवतः । अकारे यथा नात्युपसंहृतौ तथा स्यातामृकारादिषु । तदनेन सूत्रद्वयेन जिह्वाया अनादेशविषये अकरणत्वम् । ओष्ठयोस्तु तस्मिन् विषये अकारवत्त्वं चोक्तं भवति ॥ २१ ॥



## तालौ जिह्वामध्यमिवर्णे ॥ २२ ॥

'इवर्णे' कार्ये 'जिह्वामध्यं' 'तालौ' उपसंहर्तव्यम् । यथा— " इषे त्वा "[3] । जिह्वायाः मध्यं जिह्वामध्यम् ॥ २२ ॥

---

[1]सं. १-१-४. [2]सं. १-१-१३. [3]सं. १-१-१.

उपसंहर्तव्यमित्यन्वयः । तालुशब्देन जिह्वाया अधस्तनप्रदेश उच्यते । स इवर्णस्य स्थानम् । जिह्वामध्यं करणम् ॥ २२ ॥



## एकारे च ॥ २३ ॥

चकारः पूर्वविधिमन्वादिशति । 'एकारे' कार्ये जिह्वामध्यं तालावुपसंहर्तव्यम् । ननु विधौ समाने पृथक् सूत्रारम्भः किमर्थः ? उच्यते—इवर्णे यथा जिह्वामध्योपसंहारः, न खल्वेवमेकारे । किन्तु ततो न्यून इत्यर्थः । कुतः ? अकारमिश्रितत्वादेकारस्य अकारस्य[1] च तदेकदेशत्वात् जिह्वामध्यनिष्पाद्यत्वं[2] न तु स्वतः । अत एव[3] सोपाधिकत्वान्न्यूनत्वोपपत्तिः । "ईषत् प्रकृष्टौ" (२–१९) इत्यादिसूत्रत्रयेण एकारस्य स्थानकरणे निर्दिष्टे । इह तु ततोऽन्ये तस्यैव[4] निर्दिश्येते । तदेकस्मिन् उभयथा कर्तुं न शक्यते विरोधात् । तस्मादत्र योगविभागः कर्तव्यः अव्यञ्जने तल्लक्षणं सव्यञ्जने त्वेतत् इति । कुतोऽयं नियमः ? उच्यते—'एकारे' इति सामान्योक्तौ सत्यां प्रथममव्यञ्जनस्यैव ग्रहणं मुख्यम् । तथा सति प्रथमप्रतीते तस्मिन् प्रथमं लक्षणं युज्यते । सव्यञ्जने तु पारिशेष्यादेतदिति विज्ञेयम् ॥ २३ ॥

एकारेऽप्युपसंहर्तव्यं तालौ जिह्वामध्यमित्यन्वादिशति ॥ २३ ॥



[1] इकारस्य इति क्वाचित्कः पाठः.

[2] जिह्वामध्यान्तनिष्पाद्यत्वम्. [3] अतस्तस्य. [4] ततोऽन्यस्यैव.

## ओष्ठोपसंहार उवर्णे ॥ २४ ॥

'उवर्णे' कार्ये 'ओष्ठोपसंहारः' भवति। अत्रोपसंहारः पूर्ववन्न सन्निकृष्टतामात्रं, किन्तु 'सन्निकृष्टावोष्ठौ दीर्घौ च स्याताम्' इति विवक्ष्यते। एवं "ओष्ठौ तूपसंहृततरौ" (२–१४) इत्यत्रापि विज्ञेयम्। यथा—"उलूखलबुध्नो यूपः"[1]। ओष्ठयोरुपसंहारः ओष्ठोपसंहारः ॥ २४ ॥

उवर्णे उच्चार्ये ओष्ठोपसंहारः कार्यः। तत्रोत्तरोष्ठस्स्थानमधरोष्ठः करणम् ॥ २४ ॥

---

## एकान्तरस्तु सर्वत्र प्रकृतात् ॥ २५ ॥

सान्निध्यादोष्ठोपसंहार इति लभ्यते। सर्वत्र ओष्ठ्यस्वरेषु 'प्रकृतात्' ओष्ठोपसंहारात् पृथगोष्ठोपसंहारः कर्तव्यः। स चेत् 'एकान्तरः' एकान्तर इति मात्राकालव्यवेत[2] इत्यर्थः। एकमात्रा अन्तरं व्यवधानं यस्य असौ। एकान्तर इति पृथगोष्ठोपसंहारस्य विशेषणम्। तुशब्द ओकारपरत्वे एकान्तरत्वनियमं निवर्तयति[3]। उदाहरणानि—"उत्पूतशुष्मम्"[4]। "सून्नीयमिति सु—उन्नीयं"[5]। "अथो ओषधीषु"[6] "बाहुवोर्बलम्"[7]। "तनुवो घोराऽन्या"[8]। "चतुर्होता"[9]। ननु, "योऽ~शुम्"[10] इत्यत्रानुस्वारस्य मात्रा-

---

[1] स. ७-२-१. [2] मात्राकालव्यवाय.

[3] तुशब्द ओकारपरत्वे एकान्तरत्वानियम निवर्त्य ओष्ठोपसंहारमात्रनिर्वर्त्यसर्वप्रकरणानुप्रवेशमस्य विधरादधाति. [4] सं. १-६-१. [5] सं. ६-१-४.

[6] सं. ३-५-५. [7] सं. ५-६-१. [8] सं. ५-७-३.

[9] संहितायां नास्ति. ब्रा. २-२-३. [10] सं. ३-३-४.

कालः, शकारस्यार्धमात्राकालः, एवमध्यर्धमात्रत्वे सत्येकान्तरत्वाभावात् कथं पृथगोष्ठोपसंहारसिद्धिः ? उच्यते—शते पञ्चाशन्न्यायेन सिध्यति । अध्यर्धमात्रत्वे एकमात्रत्वं सुतरामस्ति तेन कार्यं भवति । अधिकं तु न निषिध्यते । स्वायोगव्यवच्छेदकत्वादेकशब्दस्य । अत एव "बाहुवोर्बलमूरुवोरोजः"[1] इत्यादेर्न द्विरोष्ठचत्वं मुख्यं किन्तु स्फुरितत्वम् । उदाहरणं त्वाभासतया दर्शितम् । तर्हि "कुसुरुबिन्दः"[2] इत्यत्र ककाररेफाभ्यामुत्तरयोरुकारयोः कथं पृथगोष्ठोपसंहारो न भवति ? अध्यर्धमात्रव्यवायसम्भवात् । मैवम् । अत्र ककारसकारोत्तरयोरुकारयोस्तावन्न पृथगोष्ठता । एतल्लक्षणासम्भवात् । रेफादुत्तरस्य तु प्रकृतात् पृथक्त्वाभावान्नायं विधिः । किन्तु मध्यस्थसकारोत्तरादुकारात् पृथक्त्वम् । तथा सत्येकान्तरत्वाभावस्तदवस्थ एवेति लक्षणमिदमव्यभिचारितम् ॥ २९ ॥

ओष्ठोपसंहारोऽनन्तरोक्त इह विशेष्यतयाऽन्वेति । एकमात्रा अन्तरं यस्य ओष्ठोपसंहारस्य स तथोक्तः । तुशब्दोऽर्धमात्रान्तरं विनिवर्तयति । प्रशब्द आदिकर्मणि । प्रकृतः प्रथमकृतः । तदयमर्थः—एकमात्रान्तरस्त्वोष्ठोपसंहारः सर्वत्र प्रथमकृतादोष्ठोपसंहारात्पृथक्कर्तव्य इति । अयमाशयः—प्रतिवर्णं तत्तत्प्रयत्नः कर्तव्य इति सार्वत्रिकी क्लृप्तिः । तथाऽर्धमात्रान्तरत्वेऽपि पृथगोष्ठोपसंहारः प्राप्तस्तावदनेन निवार्यते एकान्तरस्त्विति । तेन 'हुतस्स्तोको हुतो द्रप्सः'[3] इत्यादिषु सकृदेव सर्वार्थ ओष्ठोपसंहारः क्रियते । एकान्तरोदाहरणं तु, 'अथो उभावेव'[4] 'एवं

[1] सं. ५-५-१. [2] सं. ७-३-२. सं. १-१-३. [4] सं. ५-६-२.

तुञ्जाना[1] 'उच्छुष्मा ओषधीनाम्[2]। औकारे त्वेकव्यञ्जनान्तरितेऽपि ओष्ठोपसंहारस्य तच्छेषमात्रगोचरत्वात् एकान्तरताऽस्तीति भवत्येव पृथगुपसंहारः। यथा—"देवश्रुतौ देवेष्वाघोषेथाम्[3] 'यदग्नीषोमौ'[4]। अधिककालान्तरत्वे तु कैमुतिकन्यायसिद्धः पृथगुपसंहारः। यथा—'उपाꣳशुꣳहुत्वोपाꣳशु पात्रेऽꣳशुमवास्य[5] 'पुनरूत्स्यूतं वासः'[6]। 'दिक्षु। उपेति। अदधत'[7]। शिक्षायां तु—

ओष्ठयोस्स्वरयोर्मध्ये दृश्येते तु तपौ यदि।
पृथग्भावस्तयोर्न स्यात्तुटिमात्रस्तयोर्भवेत्॥

ओष्ठ्यस्वरेषु कार्येषु प्रथमेनाक्षरद्वये।

इति श्लोकाभ्यां क्वचिदेकान्तरत्वसम्भवेऽपि पृथगोष्ठोपसंहारः प्रतिषिध्यते। 'देवो वस्सवितोत्पुनातु'[8]। 'मध्यतोऽनुष्टुभा'[9] इति॥ तन्निरासार्थमिह सर्वत्रेति यत्नः क्रियते। एकान्तरत्वसम्भवे सर्वत्र भवत्येव पृथगोष्ठोपसंहार इति। तदयमत्र सङ्ग्रहः—

पृथगोष्ठोपसंहारो नार्धमात्रान्तरे भवेत्।
एकमात्रान्तरत्वे स्यात्तु सर्वत्र सम्भवे॥ २५॥

---

## अकारार्धमैकारौकारयोरादिः ॥ २६ ॥

ऐकारस्यौकारस्य च 'आदिः' 'अकारार्धं' भवति। अकारस्यार्धकालसम इत्यर्थः। अकारस्यार्धं अकारार्धम्॥ २६॥

---

[1] सं. ३-१-११. [2] सं. ४-२-६. [3] सं. १-२-१३.
[4] सं २-६-२. [5] सं. ३-२-२. [6] सं. १-५-२. [7] सं. ५-५-५.
[8] स. १-१-५. [9] सं. ५-१-३.

अकारस्यार्धमकारार्धम् । तदैकारस्य च औकारस्य च आद्यवयवो भवति । तेन तदीयास्स्थानकरणप्रयत्नास्तस्मिन्नंशे भवन्ति ॥ २६ ॥

## संवृतकरणतरमेकेषाम् ॥ २७ ॥

सान्निध्यादकारार्धमिति लभ्यते । 'एकेषां' मते तदकारार्धं 'संवृतकरणतरं' भवति । संवृतानि संनिकृष्टानि करणानि यस्य तत् संवृतकरणम् । अतिशयेन संवृतकरणं संवृतकरणतरम् ॥ २७ ॥

तदकारार्धं एकेषामाचार्याणां मते संवृतकरणतरं[1] भवति यदनयोरादिः । स्वमते तु संवृतकरणमेव ॥ २७ ॥

## इकारोऽध्यर्धः पूर्वस्य शेषः ॥ २८ ॥

पूर्वस्य ऐकारस्येत्यर्थः । अधस्तादैकारौकारयोः सहोच्चरितत्वात् । 'अध्यर्धः' 'इकारः' ऐकारस्य 'शेषः' भवति । अधिकमर्धं यस्यासावध्यर्धः ॥ २८ ॥

अधिकमर्धं यस्मिन् सोऽध्यर्धः । अध्यर्धमात्र इकारः पूर्वस्य ऐकारस्य शेषो भवति । तेन तदीयास्स्थानकरणप्रयत्नास्तस्मिन्नंशे भवन्ति ॥ २८ ॥

## उकारस्तूत्तरस्य ॥ २९ ॥

'उत्तरस्य' औकारस्येत्यर्थः । अध्यर्धः 'उकारः' औकारस्य शेषः

[1] संवृततरकरण.

भवति । यथाऽनयोरुभयोरप्यादिरकार एव तद्वदिकार एव शेषः प्रसक्तः । तन्निषेधति तुशब्दः ॥ २९ ॥

तुशब्दः इकारं विनिवर्तयन् 'अध्यर्धश्शेषः' इत्युभयस्यानुवृत्तिं दर्शयति । उकारोऽध्यर्धमात्रः औकारस्य शेषः । तेन तदीयाः स्थानकरणप्रयत्नास्तस्मिन्नंशे भवन्ति । यद्यप्येकारादीनां चतुर्णामपि सन्ध्यक्षराणां एवं द्विस्वरात्मकत्वं समानम् । तथाऽपि एदोतोः प्रश्लिष्टावयवत्वात्प्रकारान्तरमेवोक्तम् ॥ २९ ॥



## अनुस्वारोत्तमा अनुनासिकाः ॥ ३० ॥

'अनुस्वारः' च 'उत्तमाः' च 'अनुनासिकाः' भवन्ति । नासिकामनुवर्तन्त इत्यनुनासिकाः । यथा अनुस्वारः—"ग्रोश्शुम्"[1] । उत्तमाश्च—"प्रत्यङ् होतारम्"[2] "प्राञ्चमुप"[3] "मणिना रूपाणि"[4] "तन्ते दुश्चक्षाः"[5] "तम्मतथा"[6] ॥ ३० ॥

अनुस्वारश्च उत्तमाश्च आनुनासिक्यगुणयुक्ता भवन्ति । अनुस्वारो व्यञ्जनं वा स्वरो वेति परमतम् । तन्निरासार्थमिदमुच्यते । अनुस्वारोऽप्युत्तमवद्व्यञ्जनमेव अस्मच्छाखायाम् । अर्धगकाररूपत्वात् ॥ ३० ॥

---

## स्वराणां यत्रोपसꣳहारस्तत् स्थानम् ॥ ३१ ॥

---

[1] सं. ३-३-४. [2] सं. ६-३-१. [3] सं. ५-२-७. [4] सं. ७-३-१४. [5] सं. ३-२-१०. [6] सं. १-४-९.

'स्वराणां' 'तत् स्थानं' भवति 'यत्रोपसंहारः' स्यात् । उप-संहारः नाम संश्लेषविशेषः ॥ ३१ ॥

उक्ताः स्वराणां प्रयत्नाः । व्यञ्जनानां च वक्ष्यन्ते । अत्रावसरे स्थानकरणविवेक उच्यते—

स्वराणां तत्स्थानं, यस्मिन्नवयवे अवयवान्तरस्य उपश्लेषः क्रियते । यथा—हनू अवर्णस्य । तत्र हि विचाल्यतरौ ओष्ठौ उपसंह्रियेते । तालिवर्णस्य । उत्तरोष्ठ उवर्णस्य । तत्र हि विचाल्यतरोऽधरोष्ठः उपसंह्रियते । वर्त्स्वौ ऋकारादीनाम् । एकारैकारयोः हनू तालु च । ओकारौकारयोः हनू उत्तरोष्ठश्चेति ॥ ३१

## यदुपसꣳहरति तत् करणम् ॥ ३२ ॥

सान्निध्यात् स्वराणामिति लभ्यते । स्वराणां 'तत् करणं' भवति 'यत्' स्वरान् 'उपसंहरति' प्रापयति स्वस्थानम्[1] । यथा—"जिह्वाग्रमृकारर्कारल्कारेषु" (२–१८) इत्यादि ॥ ३२ ॥

यदङ्गमङ्गान्तरे वक्रा उपसंह्रियते[2] तत्स्वराणां करणम् । यथा—ओष्ठाववर्णस्य । तालु[3] च जिह्वा च इवर्णस्य । अधरोष्ठ उवर्णस्य । ओष्ठौ हनू च जिह्वा च ऋकारादीनाम् । ओष्ठौ जिह्वाऽप्येदैतोः । ओष्ठौ ओदौतोरिति ॥ ३२ ॥

## अन्येषां तु यत्र स्पर्शनं तत् स्थानम् ॥ ३३ ॥

स्वरेभ्यः 'अन्येषां' वर्णानां 'तत् स्थानं' 'यत्र स्पर्शनं' भवेत् ।

[1]स्वस्थानमिति क्वचित्कः पाठः. [2]वक्रा उपसंहरति. [3]ती.

अत्र व्यञ्जनानां संश्लेषमात्रं कथ्यते । स्वराणां तु पुरस्तात् संश्लेषविशेषः कथितः । उपसंहारस्पर्शनयोः शब्दशक्त्या विशेषः विदुषैव विज्ञेयः । तुशब्दः स्वरनिवृत्त्यर्थः । अथवा अनुस्वारस्वरभक्त्योर्व्यञ्जनवत् स्पर्शमात्रनिवर्तकः इति माहिषेयभाषितम् ॥ ३३ ॥

स्वरेभ्योऽन्येषां व्यञ्जनानां तत्स्थानं यत्र स्पर्शनं क्रियते । यथा—हनूमूलं कवर्गस्य । तालु चवर्गस्य । मूर्धा टवर्गस्य । दन्तमूलानि तवर्गस्य । उत्तरोष्ठः पवर्गस्य । तालु दन्तमूलानि दन्ता इत्यन्तस्थानाम् । ऊष्मादिषु तु स्पर्शनाभावादतिदेशादिना स्थानावगतिः ॥ ३३ ॥



## येन स्पर्शयति तत् करणम् ॥ ३४ ॥

सान्निध्यादन्येषामिति लभ्यते । स्वरेभ्योऽन्येषां वर्णानां 'तत् करणं भवति अध्येता 'येन' व्यञ्जनानि 'स्पर्शयति' प्रापयति स्थानम् ॥

व्यञ्जनानां तत् करणं येनाङ्गेन स्थानं स्पर्शयति । यथा-जिह्वा कवर्गादीनां चतुर्णां वर्गाणां यरलवानां च । अधरोष्ठः पवर्गवकारयोः । ऊष्मादीनां तु—करणावगतिर्वक्ष्यते ॥ ३४ ॥



## हनूमूले जिह्वामूलेन कवर्गं स्पर्शयति ॥

'कवर्गं' उच्चार्यमाणे 'जिह्वामूलेन' वर्णान्[1] 'हनू मूले' 'स्पर्शयति' प्रापयेदित्यर्थः । हन्वोर्मूलं हनूमूलं तस्मिन् । मूल इति जात्यपेक्षया[2]मेकवचनम् ॥ ३५ ॥

[1] वर्ण. [2] जात्यपेक्ष.

कवर्गे उच्चार्ये हनूमूले इति कर्मत्वाविवक्षया अधिकरणत्वमाश्रितम् । एवमुत्तरत्रापि द्रष्टव्यम् ॥ ३९ ॥

## तालौ जिह्वामध्येन चवर्गे ॥ ३६ ॥

'चवर्गे' कार्ये 'जिह्वामध्येन' वर्णान् 'तालौ' स्पर्शयेत् ॥

स्पर्शयतीत्यन्वयः ॥ ३६ ॥

## जिह्वाग्रेण प्रतिवेष्टय मूर्धनि टवर्गे ॥३७॥

'टवर्गे' कार्ये 'जिह्वाग्रेण' वर्णान् 'मूर्धनि' स्पर्शयेत् । किं कृत्वा ? योग्यत्वात् जिह्वाग्रं[1] 'प्रतिवेष्टय' आवेष्टय । मूर्धशब्देन वक्त्रविवरोपरिभागो विवक्ष्यते ॥ ३७ ॥

मूर्धा शिरः । तत्र प्रतिवेष्टितेन जिह्वाग्रेण स्पर्शयति ॥

## जिह्वाग्रेण तवर्गे दन्तमूलेषु ॥ ३८ ॥

'तवर्गे' कार्ये 'जिह्वाग्रेण' वर्णान् 'दन्तमूलेषु' स्पर्शयेत् ॥३८

जिह्वाग्रेण यथावस्थितेन उत्तरदन्तमूलेष्वधोभागे स्पर्शयति। शिक्षायां तु—तवर्गं दन्त्यं नकारं तु दन्तमूलीयं चोक्त्वा नकारस्यापि क्वचिद्दन्त्यत्वमुच्यते । तदस्माभिर्नाद्रियितव्यम् । प्रातिशाख्यविप्रतिषिद्धत्वात् । तस्मान्नकारोऽपि सर्वत्र दन्तमूलीयः ॥



[1] तद्गतजिह्वाग्रम्,

## ओष्ठाभ्यां पवर्गे ॥ ३९ ॥

'पवर्गे' कार्ये 'ओष्ठाभ्यां' अन्योन्यं स्पर्शयेत् । अत्रोत्तरोष्ठस्थानं उत्तरत्वसाम्यादेषां स्थानानाम् । अधरोष्ठः करणम् ॥ ३९ ॥

पवर्गे ओष्ठाभ्यां स्पर्शनं कार्यम् । तत्राधरेण तु विवाल्यतरेण उत्तरं स्पर्शयति ॥ ३९ ॥

## तालौ जिह्वामध्यान्ताभ्यां यकारे ॥ ४० ॥

'यकारे' कार्ये 'जिह्वामध्यान्ताभ्यां' 'तालौ' स्पर्शयेत् । जिह्वायाः मध्यं तस्य अन्तौ ताभ्यां जिह्वामध्यान्ताभ्याम् ॥ ४० ॥

जिह्वामध्यान्ताभ्यामित्यस्य पूर्ववद्व्याख्या ॥ ४० ॥

## रेफे जिह्वाग्रमध्येन प्रत्यग्दन्तमूलेभ्यः॥४१

'रेफे' कार्ये 'जिह्वाग्रमध्येन' 'दन्तमूलेभ्यः' 'प्रत्यक्' स्पर्शयेत् । 'प्रत्यक्' इति अभ्यन्तरमुपरिभाग इत्यर्थः । यथा प्रत्यगात्मेत्यन्तरात्मा प्रतीयते ॥ ४१ ॥

दन्तमूलानामुपरि स्पर्शयति । जिह्वाग्रस्य मध्यं तन्निष्ठः प्रदेशः ॥ ४१ ॥

## दन्तमूलेषु च लकारे ॥ ४२ ॥

लकारो जिह्वाग्रमध्यं प्रत्यक्त्वं चाकर्षति । 'लकारे' कार्ये जिह्वाग्र-

मध्येन 'दन्तमूलेषु' प्रत्यक् स्पर्शयेत् । अयमर्थः—लकारस्य दन्तमूलप्रत्यासन्नप्रत्यक्प्रदेशस्स्थानमिति विज्ञेयम् ॥ ४२ ॥

चशब्दः 'जिह्वाग्रमध्येन' इत्यन्वादिशति । तेन दन्तमूलेषु उपरिभागे स्पर्शयति ॥ ४२ ॥

---

## ओष्ठान्ताभ्यां दन्तैर्वकारे ॥ ४३ ॥

'वकारे' कार्ये अधरोष्ठान्ताभ्याम् 'उत्तरदन्ताग्रैः' सह स्पर्शयेत्। 'दन्तैः' इति स्थाननिर्देशः । 'ओष्ठान्ताभ्याम्' इति करणनिर्देशः ॥

ओष्ठशब्देनात्र अधरोष्ठ उच्यते तदन्ताभ्याम् । ओष्ठस्य बाह्याभ्यन्तरभागाभिन्नतया[1] द्विवचनं प्रयुज्यते । दन्तैरिति सप्तम्यर्थे तृतीया । उत्तरदन्तेष्वित्यर्थः । वकारोत्पत्तौ स्वभावतोऽधरोष्ठस्याभ्यन्तरोऽन्तः करणं भवति । यत्र त्वसौ ओष्ठोपसंहारयोरोष्ठस्वरयोर्मध्यवर्ती भवति, तत्र सामर्थ्याद्बाह्योऽन्तः करणम् । यथा—'ध्रुवोसि'[2] 'तया देवास्सुतमावभूवुः'[3] इति । एवं यकारादीनां चतुर्णां करणान्तव्यापारनिष्पाद्यत्वादन्तस्था इत्याख्या॥

---

## स्पर्शस्थानेषूष्माण आनुपूर्व्येण ॥ ४४ ॥

'ऊष्माणः' 'आनुपूर्व्येण' यथाक्रमेण 'स्पर्शस्थानेषु' उच्चारणीया भवन्ति । यथा जिह्वामूलीयः कवर्गस्थाने—"यः कामयेत"[4] । शकारः चवर्गस्थाने—"मधुश्च माधवश्च"[5] । षकारः टवर्गस्थाने—"अप्स्वभ्यः स्वाहा"[6] । सकारः तवर्गस्थाने—"स्तना उपरवाः"[7] । उपध्मा-

---

[1] उच्यते तदन्तस्य । बाह्याभ्यन्तरभागाभिन्नतया. इति पाठान्तरम्.
[2] सं. १-६-२. [3] सं. ४-१-२. [4] सं. २-३-२. [5] सं. १-४-१४.
[6] सं. ७-२-१५. [7] सं. ६-२-११.

हकारस्य वृत्तमान्तस्थापरस्योरस्यत्वं वेदितव्यम् । 'यजुपेयजुपे गृह्णामि'[1] 'एण्यह्ने'[2] 'ब्रह्म देवा अवीवृधन्'[3] 'सं नह्ये'[4] 'अह्नुतम्'[4] 'जुह्रेह्यग्निः'[5] तदर्थमेव "उरःकण्ठ" (२-२) इत्युक्तोपि स्थानतयोक्तम् । शिक्षा चैवमाह—

हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम् ॥
उरस्यं तं विजानीयात्कण्ठ्यमाहुरसंयुतम् ॥

इति । करणानुक्तौ स्थानमेव करणं च वेदितव्यम् । 'शेषास्स्थानकरणाः' इत्यापिशलिशिक्षावचनात् ॥ ४६ ॥

—o—

## उदयस्वरादिसस्थानो हकार एकेषाम्॥४७॥

'एकेषां' मते 'हकारः' 'उदयस्वरादिसस्थानः' आत्मन उपरिस्वरादिसस्थानः भवति इति वाररुचोक्तम् । स्यादेतत् । आदिना सस्थान इत्युक्ते शेषस्य स्थानान्तरं वक्तव्यम् । तदप्यकारेकारोकारेषु नास्ति । तथा सति स्वरस्य एकमेव स्थानमिति आदिशब्दवैयर्थ्यं स्यात् । स्वरसस्थान इत्येतावतैव सिद्धेरिति । मैवम् । सन्ध्यक्षरेषु शेषस्य स्थानान्तरोपपत्तेः "इकारोऽध्यर्धः" (२-२८) इति सूत्रद्वयेन शेषभूतवर्णव्यक्तौ[6] तयोः स्थानान्तरमपि प्रसिद्धमेव । एवमैकारौकारयोरपि व्याकरणे शेषस्य स्थानान्तरं विहितं विद्धिमम् । सन्ध्यक्षरत्वाविशेषादनयोः।

[1] ग. १-१-१०. [2] ग. ५-५-१५. [3] ग. १-१-१३.
[4] ग. १-१-४. [5] सं. १-१-१२.
[6] पर्णोपुक्तौ वर्णौ स्वर्णौ.

नन्वेवमपि "अकुहविसर्जनीयानां कण्ठः" इति सन्ध्यक्षरादावकारस्यापि कण्ठस्थानत्वात्तेन सस्थानत्वे कथ्यमाने पूर्वसूत्रेण पौनरुक्त्यमस्य सूत्रस्य स्यात् । मैवं मंस्थाः । ऐकारौकारयोरादिवर्तिनः अकारस्य केवलस्य च विशेषोऽस्ति । केवलस्य करणं ओष्ठहनु नातिव्यस्तं नात्युपसंहृतं च । सन्ध्यक्षरादौ वर्तमानस्य तु संवृतकरणतरं तस्मात् स्थानकरणयोः सहचरितत्वादादिसस्थान इत्युक्ते आदिना समानस्थानकरण इति विज्ञेयम् । किञ्च–पूर्वसूत्रे करणाभाव उक्तः । अत्र तु करणवत्त्वमपि विद्यत इति मतान्तरमुपपद्यते न पौनरुक्त्यं च । यथा—" तिग्मेहेते "[1] । " यावतीर्वाऽऽसामहे "[2] । " अग्निहोत्रं जुहोति "[3] । " सम्प्रयतीरहो "[4] । उदयशब्दः उत्तरपर्यायः । उदयश्चासौ स्वरश्च तस्य आदिः तेन सस्थानः उदयस्वरादिसस्थानः ॥ ४७ ॥

एकेषां मते हकार उदयस्वरस्य आदिना समानस्थानो भवति । उदेति उपरि आगच्छतीत्युदयः परः । यथा—' हिरण्यपाणिमूतये "[5] इति तालव्यः । ' हुवे वातस्वनम् '[6] इत्योष्ठ्यः । नन्वत्र आदिशब्दः किमर्थः? तदुच्यते—ऐकारौकारयोरंशद्वयं भिन्नस्थानमिष्यते । ताभ्यां पूर्वे हकारे स्थानसंशयो मा भूदित्यादिशब्दः प्रयुज्यते । ' ऋध्यामा त ओहैः '[7] । ' आरोहणवाहावनड्वाहौ '[8] ॥ ४७ ॥

——o——

[1] सं. १-२-१४. [2] सं. ७-५-२. [3] सं. १-६-९.
[4] सं. ५-६-१. [5] सं. १-४-२५. [6] सं. ३-१-११.
[7] सं. ४-४-४. [8] सं. ५-६-२१.

## पूर्वान्तसस्थानो विसर्जनीयः ॥ ४८ ॥

'विसर्जनीयः' आत्मनः पूर्वस्वरान्तेन 'सस्थानः' समानस्थानकरणः भवति। अत्रापि पूर्वस्वर इति सन्ध्यक्षरमुच्यते। स्वरान्तरस्य हि स्थानान्तरत्वाभावात्*। यथा—"अग्नेः"[1]। "ब्राह्मणैरायुष्मत्"[2]। "बाहुवोर्बलम्"[3]। "आऽयं गौः"[4]। पूर्वस्य अन्तः तेन सस्थानः पूर्वान्तसस्थानः ॥ ४८ ॥

एकेषामित्यन्वयः। विसर्जनीयः पूर्वस्वरस्यान्तेन समानस्थानो भवतीत्येकेषां मतम्। यथा—'परियाधो अदेवीः'[5] इति तालव्यः। 'दीर्घमायुः'[6] इत्योष्ठ्यः। अन्तग्रहणमप्येतदैकारौकारयोरसन्देहार्थम्। 'ऋध्यामा त ओहैः'[7] 'स्तनयन्निव द्यौः'[8]। नेदं सूत्रद्वयमिष्टम् ॥ ४८ ॥

—o—

## नासिक्या नासिकास्थानाः ॥ ४९ ॥

'नासिक्याः' यमाः 'नासिकास्थानाः' भवन्ति। यथा—'रुक्मम्'[9] "याच्ना"[10]। "आद्गणारः"[11]। "रत्नमभजन्त"[12]। "पाप्मानम्"[13] ॥ ४९ ॥

नासिक्यसंज्ञानां नासिका स्थानम् ॥ ४९ ॥

—o—

*भिन्नस्थानत्वाभावात्. [1] सं. १-१-१०. [2] सं. २-३-१०. [3] सं. ५-५-९. [4] सं. १-५-३. [5] सं. १-२-१४. [6] सं. २-४-१४. [7] सं. ४-४-४. [8] सं. १-३-१४. [9] सं. ५-१-१०. [10] सं. १-५-७. [11] सं. ५-६-५. [12] सं. २-६-१२. [13] सं. १-४-४१.

## मुखनासिक्या वा ॥ ५० ॥

त एव नासिक्याः मुखनासिकाभ्यां वा[1] उच्चारणीया भवन्ति । उक्तान्येवोदाहरणानि । मुखं च नासिकं च मुखनासिकम् । तत्सम्बन्धिनः 'मुखनासिक्याः' ॥ ५० ॥

मुखं च नासिका च मुखनासिकम् । तत्र भवाः मुखनासिक्याः । एवमुक्तस्य पक्षद्वयस्य योग्यतया व्यवस्थाऽऽश्रयितव्या । स्पर्शेभ्यः परे प्रथमादिव्यपदेशभाजो मुखनासिक्याः । हकारात्परस्तु नासिकामात्रस्थान इति ॥ ५० ॥

---

## वर्गवच्चैषु ॥ ५१ ॥

सिंहावलोकनेन[2] वर्गस्योक्तं करणं चकारोऽनुकर्षति 'एषु' नासिक्येषु 'वर्गवत्' करणं भवति । वर्गस्येव वर्गवत् ॥ ५१ ॥

अत्र ये मुखनासिक्याः अनन्तरोक्ताश्चशब्दान्वादिष्टाः तेषु वर्गवत्स्थानयोगो भवति । एतदुक्तं भवति—मुखशब्देनात्र पञ्चापि वर्गस्थानानि सङ्गृहीतानि । तत्र कवर्गीयात्परस्य नासिक्यस्य हनूमूलं तावद्वितीयं स्थानं भवति । चवर्गीयात्परस्य तालु । एवं तत्तद्वर्गीयात्परस्य तत्तद्वर्गस्थानं द्वितीयस्थानमित्यवगन्तव्यम् । इति ॥ ५१ ॥

---

[1] मुखेन नासिकाभ्यां च.

[2] सिंहावलोकनन्यायेन.

नासिकाविवरणादानुनासिक्यं नासिकावि-
वरणादानुनासिक्यम् ॥ ५२ ॥

'नासिकाविवरणात्' घ्राणविलात् 'आनुनासिक्यं' रङ्गादि कर्तव्यम् । यथा—"सुश्लोकां ४ सुमङ्गलां ४"[1] इत्यादि ॥ ५२ ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे द्वितीयोऽध्यायः.

अनुनासिका ये वर्णा अनुस्वारोत्तमादयस्तेषामानुनासिक्यं नासारन्ध्रस्य विस्तरणाद्भवति । नासिक्येषु नासिका संवृतैव भवति । ळकारस्य तु स्थानादिकमत्र नोच्यते । कुतः? संहितायामभावात् ॥ ५२ ॥

इत्याचार्यगार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये
प्रातिशाख्यव्याख्याने द्वितीयोऽध्यायः.

हरिः ओम्.

---

[1] सं. १-८-१६.

# अथ तृतीयोऽध्यायः.

## अथादावुत्तरे विभागे ह्रस्वं व्यञ्जनपरः ॥१॥

अथ इत्ययमधिकारः । 'आदौ' पदादौ 'उत्तरे' पदान्ते च वर्तमानः संहितायां यो दीर्घः असौ 'विभागे' पदविभागसमये 'व्यञ्जनपरः' 'ह्रस्वं' आपद्यते । व्यञ्जनपरत्वमत्र[1] यथासंहितास्थं विज्ञेयम् । ननु दीर्घः कथं लभ्यते? ह्रस्वानन्तरभावित्वात् देवाशीका (३-२) दिग्रहणेषु प्लुतादर्शनाच्चेति ब्रूमः। संहितायामित्यस्यायमर्थः—कार्यभाजः पदस्य उत्तरपदेन सह सम्बन्धः न तु पूर्वपदेन सह सम्बन्धनियमः । विभागः अत्र प्रकृतिपदैरुच्यते । प्रकृतिर्नाम यथापाठः । प्रकृतिपदैरिति किं? "स्या मयोभुवः"[2] इत्यत्र जटायां स्यशब्दस्य द्वितीयोच्चारणेऽपि दीर्घः प्रसज्येत । उत्तरपदेन विभागाभावात् स मा भूदिति परिहारः । विभागशब्दस्य अयमर्थः—पदादौ दीर्घस्य पूर्वपदेन विभागः पदान्ते दीर्घस्य उत्तरपदेन विभागः । विभागे व्यञ्जनपर इति किं? "ऋतधामाऽसि"[3] इत्यत्र मा भूदिति । "ना धामा धारया" (३-८) इति प्राप्तिः । संहितायां यो दीर्घ इति किं? "एष वो भरता राजा"[4] इत्यत्र प्राप्तिस्म्पादनार्थम् । तथा सति "भरता याज्यासु" (३-११) इति याज्यापदं सार्थकम् । नान्यथा । व्यञ्जनमस्मात् परमिति व्यञ्जनपरः ॥ १ ॥

इदानीं ह्रस्वत्वादीनि कार्याणि विधीयन्ते—

अथेत्ययमधिकारः । आदौ उत्तरे इति पदस्य आदावन्ते चेत्यर्थः । पदस्येति कुतो लभ्यते । "देवा शीका" (३-२) इति

---

[1] व्यञ्जनमत्र. [2] सं. ५-६-१. [3] सं. १-३-३. [4] सं. १-८-१०.

पदानामेवोत्तरत्र ग्रहणात् । विभागः पदविभागः स खलु पदाध्याये क्रमाध्याये च भवति । संहिताप्रयोगेऽपि यत्रापाननार्थं[1] विरम्यते[2] तत्रानवग्रहस्य विभागो भवति । विभाग इत्यस्य ह्रस्वं व्यञ्जनपर इत्युभयत्र सम्बन्धः । तत्र पदादेः पूर्वेण विभागः, पदान्तस्य तूत्तरेण । इह विभागे विकारस्य[3] विधेयत्वादविभागावस्थावर्ती वर्णः प्रकृतिरित्यवगम्यते । स च दीर्घः । तस्यैव ग्रहीष्यमाणत्वात् । तदयमर्थ —अविभागावस्थायां पदस्य आदावन्ते च वर्तमानो दीर्घः विभागावस्थायां व्यञ्जनपरस्तस्यामेव ह्रस्वमापद्यते इत्येतदधिक्रियत इति । आदावुत्तर इति किमर्थम्? 'शीका दीर्घा वीर्या '(३–२,९) इत्यादीनां मध्ये मा भूदित्येवमर्थम् । नन्वेवमपि 'आहुती ईरयथा आरिथा' (३–१,१०) इत्येषामादौ कस्मान्न भवति । अत्राहुः । 'देवा शीका' (३-२) इत्यादि 'मक्षू' (३-१४) पर्यन्तं उत्तर इत्येतत्पदमनुवर्तिष्यते । यद्येवं उत्तरे 'देवा शीका' इति तत्रैवोत्तरेग्रहणं कर्तव्यं तदेव मक्षूपर्यन्तं सम्भन्त्स्यते । तस्मादस्मिन् सूत्रे आदौ उत्तरे इति द्वयं न वक्तव्यम् । प्रयोजनाभावादिति । अत्राभिधीयते—शाखान्तराद्व्यावृत्तिरस्मच्छाखाया इह क्रियते । शाखान्तरे हि दशनय्यां पदमध्येऽपि ह्रस्वत्वं भवति । अस्मच्छाखायां च आद्यन्तयोरेवेति । विभागे व्यञ्जनपर इति किम्? 'विश्वाऽहा वय॰ सुमनस्यमानाः'[4] 'ऋतधामाऽसि सुवर्ज्योतिः'[5] । ननु यथा विभक्तरूपं प्रकृतिमाश्रित्य "प्रपुमिशुपूर्वदशाधाराः" (९–४) इत्यादिभिस्संहितानुरूपाणि कार्याणि विधास्यन्ते । एवं देवाशीकादिशब्दानां ह्रस्वान्तविभागरूपं प्रकृतिमाश्रित्य संहिताधिकार एव दीर्घो विधातव्यः । तथा व्याकरणे बहूचानां

[1] यत्राप्यापनार्थं. [2] विरमति. [3] विभाग एव कार्यस्य.
[4] सं. ४-६-९-. [5] सं. १-१-३.

प्रातिशाख्ये च स्मर्यते । तथा सत्यैकरूप्यं लभ्यते । अत्रो-च्यते—सत्यमेवमैकरूप्यं सिद्ध्यति । मन्दमतीनां तु कश्चिद्भ्रमः प्रादुःष्याद्विभक्तपदात्मको वेद इति । तन्निवारणार्थं त्विहाविभक्तरूपं प्रकृतिमाश्रित्य विभागे ह्रस्वत्वं विधीयते । तेन संहिताम्नाय एव वेद इति ख्यापनात्स भ्रमो निवर्तते । नन्वेवमुभयस्य प्रकृतित्वाश्रयणादेकतररूपो वेद इति संशय एव स्यात् । नैवम् अस्ति ह्यत्र प्रसिद्धं प्रमाणान्तरम् । विदुरनेन धर्मानिति हि वेदसमाख्या । तदाह भगवानापस्तम्बः—"मन्त्रब्राह्मणे यज्ञस्य प्रमाणम्"[1] "मन्त्रब्राह्मणयोर्वेदनामधेयम्"[2] इति, शास्त्रसमाख्या च वेदस्य धर्मशासनाद्भवति । ततश्च वाक्यानामेव बोधकतया वेदत्वं विधायकतया शास्त्रत्वं चेति सत्सम्प्रदायप्रसिद्ध एवायमर्थः संहिताम्नाय एव वेद इति । स इह प्राथमिकेन* ह्रस्वविधिना ख्याप्यते । न तु प्रकृतित्वाश्रयणमेव वेदत्वे प्रमाणमिति भ्रमः विभक्तरूपस्य तु प्रकृतित्वं व्युत्पादनसौकर्यार्थमाश्रियते । तस्य पदत्वेनाक्षरत्वेन अङ्गाङ्गित्वेन च बहुविधत्वान्न तस्य वेदत्वं प्राज्ञाः प्रवदन्तीत्यलं प्रपञ्चेन ॥ १ ॥

—o—

देवा शीका सुम्ना श्वर्ता वयुना हृदयाऽधो-
कथा शुद्धा ॥ २ ॥

"ऊर्जे त्वा वायवः"[3] इत्यादावेतल्लक्षणसम्भवादतिव्याप्तिमुत्तरसूत्रैः परिहरति—

[1] आप. प. सू. १-३२ [2] आप. प. सू. १ ३३. [3] स १-१-१.
* प्राथमकल्पिकेन.

देवा शीका सुम्रा श्वा ऋता वयुना हृदया अघा उक्था शुद्धा इत्येतेषु ग्रहणेष्ववग्रहेष्वन्त्यस्वरः विभागे व्यञ्जनपरो ह्रस्वमापद्यते। यथा—"देवायते यजमानाय"[1]। 'शीकायते स्वाहा'[2]। 'सुम्नायन्तो हवामहे'[3]। 'द्यावापृथिव्या श्वावित्'[4]। 'अप्यकारादि' (१-५२) इति वचनादिदमप्युदाहर्तव्यम्—"अश्वावतीꣳ सोमवतीम्"[5]। 'ऋतायवः पुराऽन्नमक्षन्'[6] 'वयुनाविदेकः'[7] 'हृदयाविधश्चित्'[8] 'अघायवो मा गन्धर्वो विश्वावसुरा दघत्'[9]। 'उक्थामदानां धेनुः'[10]। 'आपो देवीश्शुद्धायुवः'[11] ॥ २ ॥

उत्तर इत्यनुवर्तते। संहितायां देवाशीकेत्यादीनां पदानामन्ते वर्तमानो दीर्घो विभागे व्यञ्जनपरो ह्रस्वमापद्यते। ननु 'आदावुत्तरे' (३-१) इति प्रथमसूत्रेऽधिकृतम्। तेन पदादेरेव ह्रस्वत्वमग्रे विधातव्यम्। तत्क्रमानुरोधात्। सत्यम्। उत्तर इति ग्रहणस्यानुवृत्तिलाभाय तु तदनन्तरं पदान्तह्रस्वत्वमेव अग्रे विधीयते। तदलाभे 'आहुती ईरयथा आरिथा' (३-७,१०) इत्येतेषां आदावपि ह्रस्वत्वं स्यात्। अधिकृतक्रमभङ्गे तु न काचित्क्षतिः। उदाहरणं तु- देवा "देवायते यजमानाय"[1]। शीका—"शीकायते स्वाहा"[2] सुम्ना -"सुम्नायन्तो हवामहे"[3]। श्वा—"द्यावापृथिव्या श्वावित्"[4]। 'अप्यकारादि' (१—५२) इति वचनात् 'अश्वावतीꣳ सोमवतीम्' इत्यप्युदाहरणम्। ऋता—"ऋतावरीरूर्मिणीः"[12]। इह

[1] सं. ३-५-५. [2] सं ७-६-११, [3] सं १-५-११. [4] सं ५-५-२०. [5] सं. ४-२-६. [6] सं. २-३-५. [7] सं. १-२-१३. [8] सं १-४-४६. [9] सं. १-२-६, [10] सं. २-४-११. [11] सं. १-३-८. [12] सं. १-१-३.

कस्मान्न भवति—"ऋतायुभ्यां त्वा"[1]। 'पदग्रहणेषु पदं गम्येत' (१-९०) इति नियमात्। एवं 'मनोसि प्राजापत्यम्'[2] इत्यादावपि द्रष्टव्यम्। वयुना—"वयुनाविदेक इत्"[3]। हृदया—"हृदयाविध-श्चित्"[4]। अघा—"मा त्वा वृका अघायवः"[5]। उक्था—'उक्था-युवे'[6]। शुन्ध्रा—'आपो देवीश्शुन्ध्रायुवः'[7] ॥ २ ॥

——o——

## इन्द्रा वद्वन्वान्परः ॥ ३ ॥

'इन्द्रा' इत्येतस्मिन् अवग्रहे अन्त्यस्वरः वत्, वन्, वान् इत्ये वम्परे विभागे ह्रस्वमापद्यते। यथा—"इन्द्रावतीमपचितीम्"[8]। "इन्द्रा-वन्तो मरुतः"[9]। "इन्द्रावान् स्वाहा"[10]। इन्द्रेति किं? "ऊर्णा-वन्तं प्रथमः"[11]। "असुर प्रजावान्"[12]। "प्रजावतीरनमीवा अ-यक्ष्माः"[13]। एवं पर इति किं? "इन्द्रावरुणयोरहम्"[14] ॥ ३ ॥

इन्द्रापदस्यान्ते दीर्घः, वत्। वन्। वान्। इत्येतेषु परतो विभागे ह्रस्वमापद्यते। 'इन्द्रावतीमपचितीम्'[8] "इन्द्रावन्तो मरुत"[9] 'इन्द्रावान्थ्स्वाहा'[10]। इन्द्रेति किम्? 'ऊर्णावन्तम्'[11]। 'प्रजावान् पशुमान्'[15]। 'प्रजावतीरनमीवाः'[13]। एवं पर इति किम्? 'इन्द्रावरुणयोरहम्'[14]। 'इन्द्रासोमीयमेकादशकपालम्'[16] ॥ ३ ॥

——o——

[1]स. १-४-५. [2]स. १-६ २. [3]स. १-२-१३. [4]सं. १-४-४५.
[5]स. १-२-९. [6]स १-४ ६२. [7]स. १-३-८. [8]स ५-७ ४.
[9]स. ४-७-१४. [10]सं. १-१-१२. [11]स. ३-५-११ [12]स. ३-१-११
[13]स. १-१-१. [14]स. २-६-१२. [15]स ७-१-७. [16]स. १-८-८.

## चित्रा वपरः ॥ ४ ॥

'चित्रा' इत्येतस्मिन्नवग्रहे अन्त्यस्वरो वकारपरः विभागे ह्रस्वमापद्यते। यथा—"चित्रावसोस्स्वस्ति ते पारमशीय"[1]। चित्रेति किं? "मित्रावरुणावेव"[2]। वपर इति किं? "चित्रापूर्णमासे दीक्षेरन्"[3]॥

चित्रा इत्येतस्मिन्नवग्रहेऽन्त्यस्वरो वकारपरो विभागे ह्रस्वमापद्यते। 'चित्रावसोस्स्वस्ति'[1] वपर इति किम्? "चित्रापूर्णमासे"[3] ॥ ४ ॥

---

## प्रथेन्द्रिया द्रविणा विश्वदेव्या दीर्घा वीर्या विश्वा वाता त्वा भङ्गुरा कर्णका वृष्णिया सुगोपर्क्सामाऽद्या सत्रा वर्षा पुष्पा मेघा प्रा त्वा ॥ ५ ॥

प्रथा इन्द्रिया द्रविणा विश्वदेव्या दीर्घा वीर्या विश्वा वाता त्वा भङ्गुरा कर्णका वृष्णिया सुगोपा ऋक्सामा अद्या सत्रा वर्षा पुष्पा मेघा प्रा त्वा इत्येतेष्ववग्रहेषु अन्त्यस्वरो विभागे व्यञ्जनपरो ह्रस्वमापद्यते। यथा—"प्रथावद्गवाहनम्"[1]। "इन्द्रियावन्तं पुरोडाशम्"[2]। "द्रविणावन्तः कुर्वते"[3]। "विश्वदेव्यावते श्वात्राः"[4]। "दीर्घाधियो रक्ष-

---

[1] सं. १-५-२. [2] अ. २-१-७. [3] अ. ७-४-८.
[4] नत्रापदस्त्रान्ते दोष [5] ,, ४-२-५. [6] ,, २-२-७.
[7] सं. ५-१-११. [8] ,, ६-४-१

वर्षा—"वर्षाह्वां जुहोति"[1] । पुष्पा—"पुष्पावतीस्सुपिप्पलाः"[2] । मेधा—"मेधायते स्वाहा"[3] । प्रा—"द्युम्नस्य प्रासहा रयिम्"[4] । स्वा—"अरते स्वाधीः"[5] ॥ ५ ॥

—०—

## लोक एवेष्टा ॥ ६ ॥

'लोके' 'एव' इत्येवम्पूर्वे 'इष्टा' इत्येतस्मिन् अवग्रहे अन्त्यस्वरो विभागे व्यञ्जनपरो ह्रस्वमापद्यते । यथा—"समगुर्विमल्लोक इष्टापूर्तेन"[6] "स त्वेवेष्टापूर्ती"[7] । एवम्पूर्व इति किं ? "एनमिष्टापूर्ते सꣳसृजेथाम्"[8] । इष्टेति किं ? "साक्षादेव प्रजापतये"[9] ॥ ६ ॥

लोके । एव । इत्येताभ्यामुपबन्धाभ्यां पूर्वाभ्यामुपलक्षिते देशे इष्टापदस्यान्ते दीर्घो विभागे व्यञ्जनपरो ह्रस्वमापद्यते । यथा—'लोक इष्टपूर्तेन गच्छते'[6] । 'स त्वेवेष्टापूर्ती'[7] । एताभ्यामुपबन्धाभ्यां किम् ? 'इष्टापूर्तं कृणुतात्'[10] ॥ ६ ॥

—०—

## शक्री रथी त्विषी वाशी रात्र्योपध्याहुती व्याहृती स्वाहाकृती ह्रादुनी शची चिती श्रोणी पृष्टी पूत्यभी चर्षणी पर्यधी पारी शत्रू विपू वसू अनू हनू सू विभू इत्यवग्रहः ॥ ७ ॥

---

[1] सं. २-८-१०. [2] सं. ४-१-८ [3] सं. ७-५-११. [4] ब्रा. १-३-१४. [5] ,, ४-२-२. [6] ,, ३-३-८. [7] ,, १-७-३. [8] ,, ४-७-१३. [9] ,, ५-१-२. [10] ,, ५-३-३.

शक्ती रथी त्विपी याशी रात्री ओषधी आहुती व्याहृती स्वाहा कृती ह्रादुनी शची चिती श्रोणी पृष्टी पूती अभी चर्षणी परी अधी पारी शत्रू विपू वमू अनू हनू सू विभू इत्येतेष्ववग्रहेषु अन्त्यस्वरो विभागे व्यञ्जनपरो ह्रस्वमापद्यते । यथा—"शक्तीवन्तो गभीराः"[1] । "रथीतमौ रथीनाम्"[2] । "त्विपीमते पथीनाम्"[3] । "वाशीमन्त इष्मिणः"[4] "रात्रीभिरसुश्रन्"[5] । "ओषधीभ्यो वेहतम्"[6] । "आहुतीभिरनूयाजेषु"[7] "एताभिर्व्याहृतीभिः प्रजापतिः"[8] । "स्वाहाकृतीभ्यः प्रेष्य"[9] । "ह्रादुनीभ्यः स्वाहा"[10] । "चष्टे शचीभिः"[11] । "चितीभ्यामुपायन्"[12] । "श्रोणीभ्या॰ स्वाहा"[13] । "पृष्टीभ्यः स्वाहा"[14] । "पूतीगन्धस्यापहत्यै"[15] । "अभीवृतो घृणीवान्"[16] । "मित्रस्य चर्षणीधृतः"[17] । "वीरवन्तं परीणसम्"[18] । "अधीवासं या हिरण्यानि"[19] । "पारीणह्यस्येशे"[20] "शत्रूयतो हन्ता"[21] "विपूवान्विपूवन्तः"[22] । "अरमतिर्वसूयुः"[23] । "अनूराधा नक्षत्रम्"[24] । "अन्कारादि च" (१—९३) इति वचनात् "अननूयाजं प्रायणीयं"[25] इत्येतदप्युदाहरणं भवति । 'हनूभ्या॰ स्वाहा'[26] "सूयवासिनी मनवे"[27] । 'विभूदावन्ने'[28] । 'इत्यवग्रहः' 'इति' अनेन प्रकारेण उक्तः पदसमुदायः अवग्रहः विज्ञेयः ॥ ७ ॥

---

1 सं. ४-६-६. 2 सं. ८-७-१६. 3 सं. ८-६-२. 4 सं. २-१-११.
5 ,, २-४-१. 6 ,, २-१-६ 7 ,, २-६-९. 8 ,, १-६-१०.
9 ,, ६-३-९ 10 ,, ७-४-१३. 11 ,, ४-२-५. 12 ,, ५-७-२.
13 ,, ७-३-१६. 14 ,, ७-३-१६. 15 ,, २-२-२. 16 ,, ३-५-११.
17 ,, ३-४-११. 18 ,, २-२-१२. 19 ,, ४-६-११. 20 ,, ६-२-१.
21 ,, १-६-६. 22 ,, ७-४-३. 23 ,, ४-३-१३. 24 ,, ४-४-१०.
25 ,, ६-१-६. 26 ,, ७-३-१६. 27 ,, १-२-१३. 28 ,, ३-५-८.

शक्री रथीत्यादिपदानामन्ते वर्तमानो दीर्घः विभज्यमानव्यञ्जनपरो ह्रस्वमापद्यते । शक्री—"शक्रीवन्तो गभीराः"[1] । रथी —"रथीतमꣳ रथीनाम्"[2] । त्विषी—"त्विषीमते पथीनाम्"[3] । वाशी—"वाशीमन्त इष्मिणः"[4] । रात्री—"रात्रीभिरसुभ्रन्"[5] । ओषधी—"ओषधीभ्यस्स्वपस्थाः"[6] । आहुती—"तं देवा आहुतीभिः"[7] । व्याहृती—"व्याहृतीभिर् हवीꣳषि"[8] । स्वाहाकृती—"स्वाहाकृतीभ्यः प्रेष्येति"[9] । ह्रादुनी—"ह्रादुनीभ्यस्स्वाहा"[10] । शची—"अभि चष्टे शचीभिः"[11] । चिती—"चितीभ्यामुपायन्"[12] । श्रोणी—"श्रोणीभ्याꣳ स्वाहा"[13] । पृष्टी "पृष्टीभिर्दिवम्"[14] । पूती—"पूतीगन्धस्यापहत्यै"[15] । अभी—"रथो न योरभीवृतः"[16] । चर्षणी—"मित्रस्य चर्षणीधृतः"[17] । परी—"वीरवन्तं परीणसम्"[18] अधी—"अधीवासं या हिरण्यान्यस्मै"[19] । पारी—"पारीणह्यस्येशे"[20] । शश्रू—"शश्रूयतो हन्ता"[21] । विपू—"अथो एष वै विपूवान्"[22] । वसू—"उप स्वैनमरप्रतिवसूयुः"[23] । अनू—"अनूयाजेष्वन्यविन्दन्"[24] । "अन्कारादि च" (१-६३) इति वचनात् "प्रयाजवदननूयाजम्"[25] । हनू—"हनूभ्याꣳ स्तेनान्भगवः"[26] । सू—"एतद्वै सूयवसम्"[27] विभू—"विभूदाव्ने ज्योतिष्मते"[28] । इत्यपग्रह इतिशब्देन पूर्वोक्तः पदगणो निर्दिश्यते । अत्र द्विविधो

---

[1] सं. ४-६-६. [2] सं. ४-६-३. [3] सं. ४-५-२. [4] सं. २-१-११.
[5] ,, २-४-१. [6] ,, १-२-२ [7] ,, २-६-९ [8] ,, १-६-१०.
[9] ,, ६-३-९. [10] ,, २-४-१३ [11] ,, ४-२-५. [12] ,, ५-७-५.
[13] ,, ७-३-१६. [14] ,, ५-७-१७. [15] ,, २-२-२. [16] ,, ३-५-११.
[17] ,, ३-४-१३. [18] ,, २-२-१२. [19] ,, ४-६-११. [20] ,, ६-२-१.
[21] ,, १-५-६. [22] ,, ७-४-३. [23] ,, ४-३-१३. [24] ,, ७-६-९.
[25] ,, ६-१-५. [26] ,, ४-१-१०. [27] ,, १-७-५. [28] ,, ३-६-८.

नियम इष्यते–'देवाशीका' (३–२) इत्यादिशब्दगणोऽवग्रहात्मक एव ह्रस्वभाग्भवतीत्येकः। तेन 'श्वर्ता' (३–२) इत्यनयोः "कृष्णश्वा चतुरक्षः"[1] । "शुचा हृता लोमतः"[2]। इत्यत्र ह्रस्वत्वं न भवति। कथं तर्हि? "अद्या देवान् जुष्टतमः"[3] "मोषूण इन्द्र"[4]। उत्तरत्रापि ग्रहणात्। तथा देवाशीकादिरेव अवग्रहत्वेन ह्रस्वभाग्भवति। न तु 'अवासचस्वा' (३–८) इत्यादिरित्यपरः। तेन 'अनागतं वा एतस्य पयः'[5] इत्यादौ नाशब्दस्य 'अप्यकारादि' (२–१२) इति ह्रस्वो न भवति। कथं तर्हि? "अद्याश्वात्"[6]। "सूयवसम्"[7] इति। पूर्वत्रापि ग्रहणात्॥ ७॥



## अवा सचस्वा नुदा मृडा वर्धा शिक्षा रक्षाऽद्या भवा भजा यत्रा चरा पिबा ना धामा धारया धर्षा घा वर्धया बोधाऽत्रा तत्रा मुञ्चाऽश्वस्या पृणस्वा हिष्ठा त्वंतरा जनिष्वा युक्ष्वाऽच्छा ॥ ८ ॥

अवा सचस्वा नुदा मृडा वर्द्धा शिक्षा रक्षा अद्या भवा भजा यत्रा चरा पिबा ना धामा धारया धर्षा घा वर्द्धया बोधा अत्रा तत्रा मुञ्चा अश्वस्या प्रणस्वा हिष्ठा त्वन्तरा जनिष्वा युक्ष्वा अच्छा इत्येतेष्वनवग्रहेषु अन्त्यस्वरो विभागे व्यञ्जनपरो ह्रस्वमापद्यते। यथा–"अवा नो देव्या

[1] स. ५-५-१९. [2] स. ५-१-४. [3] स. ४-६-७.
[4] ,, १-८-३. [5] ,, २-५-५. [6] ,, ३-१-५.
[7] ,, १-५-५.

कृपा "[1] । "सचस्वा नस्स्वस्तये"[2] । "प्रणुदा नस्सपत्नान्"[3] । "मृडा जरित्रे रुद्र"[4] । "वर्द्धा नो अमवच्छ्वः"[5] । "शिक्षा नो अस्मिन्"[6] । "रक्षा च नो अधि"[7] । "अद्या देवान् जुष्टतमः"[8] । "भवा पायुर्विशो अस्याः"[9] । "व्रजे भजा त्वं नः"[10] । "यत्रा नरो मरुतः"[11] । "प्र चरा सोम दुर्यान्"[12] । "पिबा सोममिन्द्र मन्दतु त्वा"[13] । "रिपवो ना ह देभुः"[9] । "अपि विकृतम्", "अप्यकारादि" (१–९२,९१) इति वचनाभ्यां "प्राणा वा अश्शवः"[14] इत्यत्र ह्रस्वादेशः किं न स्यात् ? मैवं । "अपि विकृतं" (१–९१) इति वचनं कण्ठोक्तपदविषयम्, न लकारादिपदविषयम् । प्राणा इत्यस्यापि अकारादित्वान्नायं विधिः । तर्हि वैकृतत्वाभावादना इत्यस्येङ्ग्यांशस्य किं न स्यादयं विधिः? एवंरूपस्य संहितायां दीर्घाभावात् । "धामा ह यत्ते अजर"[11] । "बृहस्पते धारया वसूनि"[15] । "धर्ष्या मानुषानृचः"[16] । "उत वा घा स्यालात्"[17] । "तमग्ने वर्द्धया त्वम्"[18] । "बोधा नो अस्य वचसो यविष्ठ"[19] । "अत्रा ते रूपम्"[8] । "तत्रा रथमुप"[20] । "प्र मुश्चा स्वस्तये"[21] । "एकस्त्वष्टुरश्वस्या विशस्ता"[22] । "सप्त योनीरा पृणस्वा घृतेन"[23] । "आपो हिष्ठा मयोभुवः"[24] । हि इति किं।

---

[1] सं. ४-१-४. [2] सं. १-५-६. [3] सं. ४-३-१२. [4] सं. ४-६-१०.
[5] ,, २-६-११. [6] ,, ७-५-२१. [7] ,, ४-५-१०. [8] ,, ४-६-७.
[9] ,, १-२-१४. [10] ,, ३-६-१२. [11] ,, ३-१-११. [12] ,, ३-२-१०.
[13] ,, २-४-१४. [14] ,, ६-४-४. [15] ,, १-३-७. [16] ,, ३-३-८.
[17] ,, १-३-१४. [18] ,, ४-६-३. [19] ,, ४-२-३. [20] ,, ४-६-६.
[21] ,, ३-३-८. [22] ,, ४-६-९. [23] ,, ३-५-३. [24] ,, ४-१-५.

"प्रतिष्ठा वा एकविꣳशः "[1] । "अग्ने त्वं तरा मृधः "[2] । त्वमिति किं ? "अन्तरतरा तस्मात्तो भवति "[3] । "जनिष्वा हि जेन्यः "[4] । "युक्ष्वा हि देवहूतमान् "[5] । "अच्छा नक्षि द्युमत्तमः "[6] ॥ ८ ॥

अचासचस्वेत्यादिपदानां अनवग्रहाणामन्ते दीर्घो विभज्यमानव्यञ्जनपरो ह्रस्वमापद्यते । अचा—"अचा नो देव्या कृपा"[7] । सचस्वा—"सचस्वा नस्स्वस्तये "[8] । नुदा—"प्रणुदा नस्सपत्नान् "[9] । मृडा—"मृडा नो रुद्र "[10] । वर्धा—"वर्धा नो अमवच्छवः "[11] । शिक्षा—"शिक्षा नो अस्मिन् "[12] । रक्षा—"रक्षा राजन्नघायतः "[13] । अद्या—"अद्या वृणीमहे "[14] । भवा—"भवा तोकाय "[15] । भजा—"व्रजे भजा त्वं नः "[16] । यत्रा—यत्रा नरो मरुतः "[17] । चरा—"प्र चरा सोम दुर्यान् "[18] । पिबा—"पिबा सोममिन्द्र"[19] । ना—"ना ह देभुः"[20] । धामा—"धामा ह यत्ते"[17] । धारया—"धारया वसूनि "[21] । "अग्ने पिन्वस्व धारया "[22] इत्यत्र ह्रस्वत्वं न भवति । विभागाभावात् । धर्षा—"धर्षा मानुषान्"[23] । घा—"उत वा घा स्यालात् "[24] । वर्धया—"तमग्ने वर्धया त्वम् "[25] । बोधा—"बोधा स बोधीत्युप तिष्ठते "[26] । अत्रा—"अत्रा ते भद्राः "[27] । तत्रा—"तत्रा रथमुप "[28] । मुञ्चा—"मुञ्चा व्यꣳहः "[29] ।

---

[1] सं. ५-२-३. [2] सं. ४-१-९. [3] सं. ६-२-२. [4] सं. ४-१-३.
[5] ,, २-६-११. [6] ,, १-५-६. [7] ,, ४-१-४ [8] ,, १-५-६.
[9] ,, ४-३-१२. [10] ,, ४-५-१०. [11] ,, २-६-११. [12] ,, ७-५-७.
[13] ,, ६-३-१४. [14] ,, ३-४-११. [15] ,, १-१-१४. [16] ,, १-६-१२.
[17] ,, ३-१-११. [18] ,, १-२-१०. [19] ,, २-४-१४. [20] ,, १-२-१४.
[21] ,, १-६-७. [22] ,, १-५-३. [23] ,, १-३-८. [24] ,, १-१-१४.
[25] ,, ४-६-३. [26] ,, ५-२-२. [27] ,, ४-६-७. [28] ,, ४-६-६.
[29] ,, ४-७-१५.

अश्वस्या—"अश्वस्या विशस्ता"[1] । पृणस्वा—"आ पृणस्वा घृतेन"[2] । द्विपदेन पूर्वेणोपलक्षिते देशे स्थाशब्दो ह्रस्वभाक् । "आपो हिष्ठा मयोभुवः"[3] । हीत्युपबन्धेन किम् ? "अजाऽसि रयिष्ठा"[4] । त्वं तरा—त्वंपदेन पूर्वेणोपलक्षिते देशे तराशब्दो ह्रस्वभाङ् । "अग्ने त्वं तरा मृधः"[5] । त्वमित्युपबन्धेन किम् । "प्रजा या उत्तरा देवयज्या पशवः"[6] । ननु त्वन्तरेति तुशब्दपूर्वकोऽन्तराशब्दः किं न स्यात् । "सुप्रायणा भवन्तु । अन्तरा मित्रावरुणा"[7] इति 'पदग्रहणेषु पदं गम्येत' (१–९०) इति नियमात् । जनिष्वा—"जनिष्वा हि जेन्यः"[8] । युक्ष्वा—"युक्ष्वा हि देवहूतमान्"[9] । अच्छा—"अग्ने अच्छा वदेह नः"[10] ॥ ८ ॥

---

## अथाऽग्नियाज्ये ॥ ९ ॥

अग्निश्च याज्याश्च 'अग्नियाज्यं' तस्मिन् । 'चार्थे द्वन्द्वः' इति समासः । 'अग्निः' इत्यग्निप्रकाशकमन्त्रा लक्ष्यन्ते चतुर्थकाण्ड इत्यर्थः । उभा वामिन्द्राग्नी[11]प्रभृत्यग्निर्वृत्राणि[12]पर्यन्ताः प्रश्नोत्तमानुवाका याज्यासंज्ञका भवन्ति, 'युक्ष्वा हि'[13] इत्यनुवाकश्च । अत्र विषये 'अथा' इत्येतस्मिन् ग्रहणे अन्त्यस्वरो विभागे व्यञ्जनपरो ह्रस्वमापद्यते । यथा—"अथा ह्यग्ने क्रतोः"[13] । "अथा न श्शर्म यच्छ"[14] । "अथा ते सुम्नमीमहे"[15] । "अथा यथा नः"[15] । अग्नियाज्ये इति किं ? "अथा मेति नद्धिणानेऽर्ति"[16] ॥ ९ ॥

---

1 सं. ४-६-९. 2 सं. १-५-३. 3 सं. ४-१-५. 4 सं. १-४-२.
5 ,, ४-१-२. 6 ,, २-६-७. 7 ,, ५-१-११. 8 ,, ४-१-३.
9 ,, २-६-११. 10 ,, १-७-१०. 11 ,, १-१-१४. 12 ,, ४-१-११.
13 ,, ४-४-८. 14 ,, ६-५-१०. 15 ,, २-६-१२. 16 ,, २-४-१२.

अग्निश्च याज्याश्च अग्नियाज्यम् । अग्निशब्देन चित्याग्निमन्त्ररूपाः 'युञ्जानः प्रथमं मनः'[1] इत्यादिसप्तप्रपाठका उच्यन्ते । याज्याशब्देन 'उभा वामिन्द्राग्नी'[2] इत्यादयः 'अग्निर्वृत्राणि'[3] पर्यन्ताः प्रश्नोत्तमानुवाकाः, 'युक्ष्वा हि देवहूतमान्'[4] इत्येष चेति त्रयोविंशतिरुच्यन्ते । तथाधाशब्दस्यान्ते दीर्घो विभागे व्यञ्जनपरो ह्रस्वमापद्यते । यथा—अग्नौ—"अधा ह्यग्ने"[5] । "अधा च नदरामें"[6] । याज्यासु खल्वपि—"अधा ते सुम्नमीमहे"[4] । "अधा यथा नः"[7] । अग्नियाज्य इति किम् ? "अधा मेति तद्विष्णवे"[8] । ननु अधा मेत्यत्र पदान्तस्य कः प्रसङ्गः । तदुच्यते—संहितायां यः पदान्तो दीर्घः स इह कार्यभागुच्यते । तत्र विसर्जनीयलोपाद्भवत्येवायं दीर्घः पदान्त इत्यस्ति प्रसङ्गः । एवं 'भरता याज्यासु' (३-११) इत्यत्रापि द्रष्टव्यम् ॥ ९ ॥

—o—

कुत्रा दक्षिणेना स्वेना हन्तना जगामा रुहेमा विद्मधर्यामा चक्रमा क्षामा स्तरीमा भरेमा वर्पयथेरयथाऽऽरिथा पाथाऽथा सिश्नथा जनयथा जयतोक्षताऽवता याता शृणुता कृणुता बिभृता ॥ १० ॥

कुत्रा दक्षिणेना स्वेना हन्तना जगामा रुहेमा विद्मा ऋध्यामा चक्रमा क्षामा स्तरीमा भरेमा वर्पयथा ईरयथा आरिथा पाथा अथा सिश्नथा

[1] स. ४-१-१. [2] स. १-१-१४. [3] स. ४-३-१३.
[4] ,, २-६-११. [5] ,, ४-४-४. [6] ,, ४-६-१०.
[7] ,, २-६-१२. [8] ,, २-४-१२.

जनयथा जयता उक्षता अवता याता शृणुता कृणुता बिभृता एतेष्वनवग्रहेषु अन्त्यस्वरौ विभागे व्यञ्जनपरो ह्रस्वमापद्यते । यथा—"कुत्रा चिद्यस्य समृतौ"[1] । "दक्षिणेना वसूनि"[2] । "स्वेना हि वृत्रꣳ शवसा"[3] । "तपसा हन्तना तम्"[4] । "आ जगामा परस्याः"[5] । "अस्त्रवन्तीमा रुहेमा स्वस्तये"[6] । "विद्मा ते अग्ने"[7] । "ऋध्यामा त ओहैः[8] । "चक्रमा कच्चनागः"[9] । "क्षामा रेरिहद्वीरुधस्समञ्जन्"[10] । "सुष्टरीमा जुषाणा"[11] । "अꣳहोमुचे प्र भरेमा मनीषाम्"[5] । "वृष्टिं वर्षयथा पुरीषिणः"[12] । "उदीरयथा मरुतः"[12] । "उदारिथा यजे तम्"[13] । "क्षये पाथा दिवो विमहसः"[14] । "अथा सोमस्य"[15] । "यत्रा नरो मरुतस्सिञ्चथा मधु"[16] । "आपो जनयथा च नः"[17] । "उप प्रेत जयता नरस्स्थिराः"[18] । "घृतमुक्षता मधुवर्णम्"[4] । "अस्मान्नु देवा अवता हवेषु"[18] । "देवा रथैर्याता हिरण्ययैः"[19] । "मरुतश्शृणुता हवम्"[14] । "संवत्सराय कृणुता बृहन्नमः"[20] । "पुत्रं बिभृता स्वेनम्"[21] ॥ १० ॥

कुत्रादक्षिणेनेत्यादिपदानामनवग्रहाणामन्ते दीर्घो विभज्यमानव्यञ्जनपरो ह्रस्वमापद्यते । यथा–कुत्रा—"कुत्रा चिद्यस्य"[1] ।

---

[1] सं. २-१-११. [2] सं. ३-८-११. [3] सं. ७-४-१५. [4] सं. ४-३-११. [5] ,, १-६-१२. [6] ,, १-५-११. [7] ,, ८-२-२. [8] ,, ४-४-४. [9] ,, ४-७-१५. [10] ,, १-३-१४. [11] ,, ५-१-११. [12] ,, २-४-८. [13] ,, ४-६-५. [14] ,, ४-२-११. [15] ,, १-१-१४. [16] ,, ३-१-११. [17] ,, ४-१-५. [18] ,, ४-६-४. [19] ,, ४-७-१२. [20] ,, ५-७-२. [21] ,, ४-२-३.

दक्षिणेना—"दक्षिणेना वसूनि"[1]। स्वेना—"स्वेना हि वृत्रम्"[2]। हन्तना—"तपसा हन्तना तम्"[3]। जगामा—"आ जगामा परस्याः"[4]। रुहेमा—"आ रुहेमा स्वस्तये"[5]। विद्मा—"विद्मा ते अग्ने"[6]। ऋध्यामा—"ऋध्यामा त ओहैः"[7]। चकृमा—"अविद्वांस्सश्चकृमा कच्चनागः"[8]। क्षामा—"द्यावा क्षामा रुक्मः"[9]। स्तवीमा—"सुष्टवीमा जुषाणा"[10]। भरेमा—"अश्होमुचे प्र भरेमा मनीषाम्"[11]। वर्पयथा—"शंष्टि वर्पयथा पुरीषिणः"[11]। ईरयथा—"उदीरयथा मरुतः"[11]। आरिथा—"उदारिथा यजे"[12]। पाथा—"क्षये पाथा दिवो विमहसः"[13]। अथा—"अथा सपत्नान् इन्द्रो मे"[14]। सिञ्चथा—"सिञ्चथा मधु"[15]। जनयथा—"आपो जनयथा च नः"[16]। जयता—"उप प्रेत जयता नरः"[17]। उक्षता—"घृतमुक्षता मधुवर्णम्"[3]। अवता—"प्रावता वचः"[18]। याता—"याता हिरण्ययैः"[19]। शृणुता—"मरुतश्शृणुता हवम्"[13]। कृणुता—"कृणुता बृहन्नमः"[20]। विभृता—"विभृता स्येनम्"[21] ॥ १० ॥

---

## भरता याज्यासु ॥ ११ ॥

'भरता' इत्येतस्मिन् ग्रहणे अन्त्यस्वरो याज्यासु विषये विभागे व्यञ्जनपरो ह्रस्वमापद्यते। यथा—"धिया भरता जातवेदसम्"[22]। "भर-

[1] सं. ३-४-११ [2] सं. ७-४-१९. [3] सं. ४-३-१३. [4] सं. १-६-१२. [5] सं. १-५-११. [6] सं. ४-२-२. [7] सं. ४-४-४. [8] सं. ४-७-१५. [9] सं. ४-१-६. [10] सं. ६-१-११. [11] सं. २-४-८. [12] सं. ४-६-५. [13] सं. ४-२-११. [14] सं. १-१-१२. [15] सं. ३-१-११. [16] सं. ४-१-५. [17] सं. ४-६-४. [18] सं. ४-२-६. [19] सं. ४-७-१२. [20] सं. ५-७-२. [21] सं. ४-२-३. [22] सं. ३-५-११.

ता वसुवित्तमम् "[1] । "वचोग्नये भरता बृहत् "[2] । याज्यास्विति किं ? "एष वो भरता राजा "[3] ॥ ११ ॥

भरतापदस्यान्ते दीर्घो विभागे व्यञ्जनपरो ह्रस्वमापद्यते। "अग्नये भरता बृहत्"[2] । याज्यास्विति किम् ? 'एष वो भरता राजा'[3] ॥ ११ ॥

---

**अत्ता भवताऽनदता तरता तपता जुहुता वोचताऽमुञ्चता चृता घुष्या जनया वर्तया सादया पारया दीया हरा भराऽपा ससादा सृजा तिष्ठा येना ॥ १२ ॥**

अत्ता भवता अनदता तरता तपता जुहुता वोचता अमुञ्चता चृता घुष्या जनया वर्तया सादया पारया दीया हरा भरा अपा ससादा सृजा तिष्ठा येना एतेषु अनवग्रहेष्वन्त्यस्वरो विभागे व्यञ्जनपरो ह्रस्वमापद्यते । यथा—"अत्ता हवींऽषि "[4] । "आदित्यासो भवता मृडयन्तः "[5] । "अहावनदता हते"[6] । "सुवो रुहाणास्तरता रजाꣳसि"[7] । "तपता सुकृतिभिः "[8] । "पित्रे जुहुता विश्वकर्मणे "[9] । "विश्वे देवासो अधि वोचता मे"[10] । "यदि पितामभुञ्चता यजत्राः"[11]। "अय-

---

[1] सं. ३-५-११. [2] सं. ३-२-११. [3] सं. १-८-१०.
[4] सं. २-६-१२ [5] सं. १-४-२२. [6] सं. ५-६-१.
[7] सं. १-५-४. [8] सं. १-६-१२. [9] सं. ४-६-२,
[10] सं. ४-७-१४. [11] सं. ४-७-१५.

स्मयं वि चृता बन्धमेतम्"[1] । "परुष्परुरनुघुष्या वि शस्त"[2] । "मनुर्भव जनया दैव्यम्"[3] ।"ताभिरा वर्तया पुनः"[4] । "सादया यज्ञम्"[5] । "अग्ने त्वं पारया नव्यः"[6] । "बृहस्पते परि दीया रथेन"[7] । "निहारमिन्नि मे हरा निहारम्"[8] । "मा नो मर्धीरा भरा दद्धि"[9] । "वाजं श्रुत्या अपा वृधि"[10] । "अग्निर्होता निषसादा यजीयान्"[11] । "सृजा वृष्टिं दिवः"[12] । "तिष्ठा देवो न सविता"[13] । "येना सहस्रं वहसि"[14] ॥ १२ ॥

अच्छा भवतेत्यादिपदानामन्ते दीर्घो विभागे व्यञ्जनपरो ह्रस्वमापद्यते । अच्छा—"अच्छा हवींऽषि"[15] । भवता—"भवता मृडयन्तः"[16] । अनद्दता—"अहावनद्दता हते"[17] । तरता—"रुहाणास्तरता रजाऽसि"[18] । तपता—"तपता शुचाकिभिः"[19] । जुहुता—"जुहुता विश्वकर्मणे"[20] । वोचता—"अधि वोचता मे"[21] । अमुञ्चता—"अमुञ्चता यजत्राः"[22] । चृता—"वि चृता बन्धमेतम्"[1] । घुष्या—"अनुघुष्या वि शस्त"[2] । जनया—"जनया दैव्यं जनम्"[3] । वर्तया—"ताभिरा वर्तया पुनः"[4] । सादया—"सादया यज्ञऽ सुकृतस्य"[5] । पारया—"अग्ने त्वं पारया नव्यः"[6] । दीया—"परि दीया रथेन"[7] । हरा—"इन्नि मे हरा निहारम्"[8] ।

[1] स. ४-२-५. [2] सं. ४-६-९. [3] सं. ३-४-२.
[4] ,, ३-३-१०. [5] ,, ३-५-११. [6] ,, १-१-१४.
[7] ,, ४-६-४. [8] ,, १-८-४. [9] ,, १-७-१३.
[10] ,, २-२-१२. [11] ,, १-३-१४. [12] ,, २-४-८.
[13] ,, ४-१-४. [14] ,, ४-७-१३. [15] ,, २-६-१२.
[16] ,, १-४-२२. [17] ,, ५-६-१. [18] ,, ३-५-४.
[19] ,, १-६-१२. [20] ,, ४-६-२. [21] ,, ४-७-१४.
[22] ,, ४-७-१५.

भरा—"भरा दद्धि तद्वः प्र"[1] । अपा—"श्रुत्या अपा वृधि"[2] । ससादा—"निषसादा यजीयान्"[3] । सृजा—"सृजा वृष्टिम्"[4] । तिष्ठा—"तिष्ठा देवो न सविता"[5] । येना—"येना सहस्रं वहसि"[6] ॥ १२ ॥

---

## उद्गमसी ऋयी कृधी श्रुधी यदी सू तू नू मिथू मक्षू ऊ ॥ १३ ॥

● उद्गमसी ऋयी कृधी श्रुधी यदी सू तू नू मिथू मक्षू ऊ इत्येतेष्वनवग्रहेषु अन्त्यस्वरो विभागे व्यञ्जनपरो ह्रस्वमापद्यते । यथा—"उद्गमसी गमध्ये"[7] । "रुद्र यत्ते ऋयी परम्"[8] । "कृधी स्वस्मा२ अदितेः"[9] "इमं मे वरुण श्रुधी हवम्"[10] । "यदी भूमिं जनयन् विश्वकर्मा"[11] । 'मोषूण इन्द्र'[12] । 'आ तू न उप गन्तन'[13] 'एतशस्य नू रण आ'[14] । 'गात्राण्यसिना मिथू कः'[15] । 'मक्षू देववतो रथः'[16] । "अस्माभिरू नु मतिचक्ष्याऽभूत्"[17] ॥ १३ ॥

उद्गमसी ऋयीत्यादीनां पदानामन्ते दीर्घो विभागे व्यञ्जनपरो ह्रस्वमापद्यते । उद्गमसी—"उद्गमसी गमध्ये"[7] । ऋयी—"ऋयी परं नाम"[8] । कृधी—"कृधी स्वस्मान्"[9] । श्रुधी—"श्रुधी हवमद्या च"[10] । यदी—"यदी भूमिं जनयन्"[11] । सु—"मोषूण इन्द्र"[12] ।

---

1 सं. १-७-११. 2 ब्रा. २-२-१२. 3 सं. १-१-१४. 4 ब्रा. २-४-८.
5 ,, ४-१-४. 6 ,, ४-७-११. 7 ,, १-१-६. 8 ,, १-८-१४.
9 ,, ४-७-१५. 10 ,, २-२-११. 11 ,, ४-६-२. 12 ,, १-८-१.
13 ,, १-५-११. 14 ,, ४-६-१. 15 ,, ४-६-५. 16 ,, १-८-२२.
17 ,, १-८-११.

तू—"आ तू न उप"[1] । नू—"नू रणे"[2] । मिथू—"असिना मिथू कः"[3] । मक्षू—"मक्षू देववतो रथः"[4] । ऊ—"ऊर्ध्व ऊषुणः"[5] ॥ १३ ॥



## व्युत्पूर्व आननुदात्तोऽनूष्मवत्यनूष्मवति ॥

वि इत्येवम्पूर्व उत्पूर्वो वा आन् इत्येष स्वरः अनुदात्तः अनूष्मवति ऊष्मरहिते पदे वर्तमानो व्यञ्जनपरः पदादौ वर्तमानत्वात् पूर्वपदेन विभागे सति ह्रस्वमापद्यते । यथा—"व्यानयेति वि—अनाय"[6] "उदानयेत्युत्—अनाय"[6] । एवम्पूर्व इति किं ? "यदानृचुस्तेन"[7] । "पर्याणीयाहवनीयस्य"[8] । नकारः किमर्थः ? "यद्रुक्मं व्याघारयति"[9] "उदादाय पृथिवीं जीरदानुः"[10] । अनुदात्त इति किं ? "विश्वकर्मा व्यानट्"[11] । "नेष्टः पत्नीमुदानय"[12] । अनूष्मवतीति किं ? "मघोर्धारा व्यानशुः"[13] । "उदानिषुर्महीरिति"[14] ॥ १४ ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे तृतीयोऽध्यायः.

उत्तर इत्यत्र नानुवर्तते । असम्भवात् । ततः पारिशेष्यादनेन सूत्रेण पदादेर्ह्रस्वत्वं विधीयते । तस्य तु सामर्थ्यात् पूर्वपदविभागो निमित्तमिति । व्यञ्जनपर इत्येतदप्यत्र न संबध्यते । तदयमर्थः । वि । उत् । इत्यनयोः पूर्वयोराकारो नकारपरोऽनुदात्त ऊष्मरहिते पदे वर्तमानो विभागे ह्रस्वमापद्यते । विपूर्वः—

[1] सं. १-५-११.. [2] सं. ४-६-१. [3] सं. ४-६-९. [4] सं. १-८-२२.
[5] ,, ४-१-४. [6] ,, ४-२-९. [7] ,, ७-३-१. [8] ,, ५-१-६.
[9] ,, ५-२-७. [10] ,, २-२-९. [11] ,, ४-२-१०. [12] ,, ६-५-८.
[13] ,, ५-५-७. [14] ,, ५-६-१.

“ब्यानाय”[1]। “ब्यानेन मनुष्यान्”[2] । उत्पूर्वः खल्वपि—“उदानाय प्रतिष्ठायै”[1] । “तदुदानं दधति”[3] एवंपूर्व इति किम्? “यदानृचुः”[4]। “आनुपूको भवति”[5] । नकारपर इति किम्? ‘पृथिवीमनु व्याछैत्’[6] । ‘रिप्रमुदाभ्यश्शुचिः’[7] । अनुदात्त इति किम्? ‘विश्वकर्मा व्यानट्समग्ने’[8] । ‘पत्नीमुदानयेत्याह’[9] । अनूपमयतीति किम्? ‘धारा व्यानशुः’[10] । ‘उद्दानिपुर्महीरिति’[11] ॥१४॥

इत्याचार्यगार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये प्रातिशाख्यव्याख्याने तृतीयोऽध्यायः.



---

[1] सं. ४-२-९. [2] सं. १-७-२. [3] सं. ७-५-६.
[4] सं. ७-३-१. [5] सं. २-३-४. [6] सं. ३-५-३.
[7] सं. १-२-१. [8] सं. ४-२-१०. [9] सं. ६-५-८.
[10] सं. ५-७-७. [11] सं. ५-६-२.

# अथ चतुर्थोऽध्यायः.

## अथ प्रग्रहाः ॥ १ ॥

'अथ' इत्ययमधिकारः । 'प्रग्रह्याः' उच्यन्ते इत्येतदधिकृतं विज्ञेयम् । इत उत्तरं यद्वक्ष्यामः ॥ १ ॥

उक्तं विभागविषयं ह्रस्वत्वम् । संहिताविषयाणि च शकारागमादीनि कार्याणि वक्ष्यन्ते । अत्रान्तरे उभयविषयं प्रगृह्यत्वं चतुर्थेनाध्यायेन विधीयते—

इह प्रग्रहाख्या वर्णा व्याख्येयतया अधिक्रियन्ते ॥ १ ॥



## नावग्रहः ॥ २ ॥

'अवग्रहः' प्रग्रहो न भवति । 'ऊकारः' 'ओकारोऽसाऽऽहितोऽकारव्यञ्जनपरः' 'मी' 'नहिपरः' 'द्वे' (४–५, ६, ३६, ३७, ४९) इति वक्ष्यति । तन् उद्दिश्य पुरस्तादपवादोऽनेन विधीयते । यथा—"तनूनपादसुरः"[1] । 'अग्नेऽर्ध यजमानम्"[2] । "अग्नीषोमौ मा"[3] । "द्वेद्वे पुरोऽनुवाक्ये कुर्यात्"[4] । अवग्रह इति जात्यपेक्षमेकवचनम् ॥ २ ॥

अवग्रहः प्रग्रहभाक् न भवति । 'तनूनप्त्रे त्वा शाक्वराय'[5] 'देवानां धाय्योयान्यसि'[6] । 'द्वेद्वे सम्भरति'[7] । 'कृष्णोऽ-

[1] स. ४-१-८. [2] स. ६-१-१०. [3] स. २-६-२. [4] स. २-२-९.
[5] ,, १-२-१०. [6] ,, ४-४-६. [7] ,, १-६-८.

स्यावरेभ्योऽग्नये त्वा स्वाहा'[1] ननु "न रूध्ये नित्यम्" (४-१४) इत्यादिविद्धिधेरूर्ध्वं अवग्रहप्रतिषेधोऽपि किं न क्रियते? तदुच्यते-इह त्रिविधः[2] प्रग्रहविधिर्भविष्यति। ऊकारस्य ओकारस्य एकारैकारयोरिति। तत्रान्यतमस्य विधेरनन्तरं[3] क्रियमाणोऽयं प्रतिषेधस्तन्मात्रविषयस्स्यात्। सर्वविषयश्चेष्यते। तदर्थं सर्वतः प्रागेव क्रियते। नन्वेवमपि "इतिपरोऽपि" (४-४) इत्यस्मादनन्तरं कर्तव्यः। तथा सति 'अन्तः' "इतिपरोऽपि" (४-३,४) इति सूत्रयोः प्रतिषेधान्वयश्च[4] स्पष्टो भवति। तत्किमर्थं सर्वादौ क्रियते? तदुच्यते—"अन्तः" (४-३) इति पदान्तः सर्वविध्यन्वयी कार्यभागधिकरिष्यते। ततः पूर्वमवग्रहप्रतिषेधादवग्रहव्यतिरिक्तस्यैव पदस्यान्तः सर्वविधिषु कार्यभाक्त्वेन गृह्यत इति सिद्धम्। तेन "द्वे" "परश्च" "एकव्यवेतोऽपि" (४-४७,४८,४९) इत्यत्रावग्रहस्यैकव्यवेतत्वे तमतिक्रम्योत्तरखण्डान्त एकव्यवेतः प्रग्रह इति लभ्यते—'द्वे द्रधसी सतती वस्त एकः'[5] 'द्वे याव देवसत्रे'[6]। इत्येतदर्थमयं प्रतिषेधः सर्वादौ क्रियते। यद्येवं यत्नो न क्रियेत, तदा "द्वे होते देवते"[7] इत्याद्येकव्यवेतविषयसद्भावादवग्रहे एकव्यवेते सति तदुत्तरखण्डे प्रग्रहो न स्यात्॥ २

---

अन्तः ॥ ३ ॥

पदस्य 'अन्तः' प्रग्रहसंज्ञो भवति। यथा—"देवते सम्रूद्ये"[7]। अत्राह—किं अपदान्तोऽपि प्रग्रहः स्यात्? अत्रोच्यते—'ऊकारः' (४-६) इत्यविशेषेण वक्ष्यति, 'ओकारोऽसां-

[1] सं. १-१-११. [2] त्रिधा. [3] विधेः परतः. [4] प्रतिषेधानन्वयश्च.
[5] सं. ३-२-२. [6] सं. ७-४-५. [7] सं. २-१-९.

हितोऽकारव्यञ्जनपरः' (४—६) इति च "चीयतृप्रपरः" (४—३३) इति च । अपदान्तस्य ऊकारस्य ओकारस्य चीशब्दस्य वा[1] ग्रहणं मा भूदिति । ननु सिद्धमेवैतत् । एतत्सूत्रशेषे[2] उत्तर सूत्रेऽपिशब्देन "अन्वादेशोऽन्त्यस्य" (१—९९) इत्यन्त्यस्यैव कार्यनिर्वाहात् । नेति ब्रूमः, अनेकवर्णसमुदाये ह्यन्त्यत्वमुपपन्नम् । अयं पुनरेकवर्णनिर्देशः ऊकार इत्यादिवर्णस्य यो विकारलोपो तयोरेव "अन्वादेशोऽन्त्यस्य" (१—९९) इत्यनेन अन्त्यमत्यय इत्युक्तम् । प्रग्रह इति तु संज्ञामात्रं न तु निमित्तं निमित्ति वा । तस्मादत्रान्वादेशो न प्रसरति ॥ ३ ॥

अन्त इति पदस्यान्तः सर्वविध्यन्वयी कार्यभागधिक्रियते। स चावग्रहव्यतिरिक्तस्य पदस्य विज्ञायते "नावग्रहः" (४—२) इति प्रतिषेधात् । वक्ष्यति च—"ऊकारः" (४—६) इत्यूकारः पदान्तः प्रग्रहो भवतीत्येवं तत्रतत्र सम्बन्धोऽनुसन्धेयः ॥ ३ ॥



## इतिपरोऽपि ॥ ४ ॥

'अपि' शब्दः सिंहावलोकनेन[3] "अथादावुत्तरे विभागे" (३—१) इत्यत्र विभागपदमन्वादिशति । सोऽयं प्रग्रहो विभागे 'इतिपरोऽपि' भवति । यथा—"देवते इति"[4] । "उभे इति"[5] । इतिशब्दः परः यस्मात् असौ इतिपरः ॥ ४ ॥

[1] च. [2] शेषभूते. [3] लोकनन्यायेन.
[4] स. २-१-९. [5] स. १-४-२२.

अपिशब्देन पूर्वाध्यायस्थं विभागपदमन्वादिश्यते । तेन संहितायां प्रग्रहस्येतिकरणो निवार्यत इति केचित् । तन्न[1] । न ह्यनादौ नित्यशुद्धे संहिताम्नाये वर्णमात्रस्याप्युपजननं शक्यशङ्कम्[2]। का कथा वर्णसमुदायात्मकस्येतिकरणस्य? न चाध्यायान्तरस्थस्यातिदविष्ठस्यान्वादेश उचितः । तदन्वादेशे चेङ्ग्योत्तरपदस्य प्रग्रहान्तस्य विभागे पुनरितिकरणः प्रसजन् केन वार्यः ? "इन्द्रवायू इतीन्द्र—वायू इति"[3] तस्मात्समुच्चयार्थ एवायमपिशब्दः । तदयमर्थः प्रग्रहः पदाध्याये इतिपरश्च भवति, केवलोऽपीति । व्यवस्थितं चैतदुभयं विज्ञेयम् । यस्मिन् पदेऽन्यतः प्रग्रहाभिव्यक्तिः । यथेङ्ग्यान्ते तत्र केवलो भवति । अनिङ्ग्ये त्वितिपर इति । इङ्ग्यान्ते तु[4] विभज्यानुवादार्थेनैवेतिकरणेन प्रग्रहोऽभिव्यज्यते । "इन्द्रवायू इतीन्द्र—वायू"[3] ततो विभक्तस्यैवोत्तरपदस्य नेतिकरणः प्रयोक्तव्यः । अर्थाभावात् । अनिङ्ग्ये त्वितिकरणः प्रग्रहाभिव्यक्त्यर्थं प्रयुज्यते । 'धिष्णो इति । हव्यम्'[5] । नन्वितिकरणः प्रग्रहाभिव्यक्त्यर्थ[6] इति न युज्यते । इङ्ग्येपूपसर्गेषु च तद्दर्शनात् । नैवम् । वर्णलोपासंयुक्तविवृत्तिपूर्वकस्येतिकरणस्य प्रग्रहासाधारणतया तदभिव्यञ्जकत्वोपपत्तेः । यद्येवं 'उरो अन्तरिक्ष'[7] इत्यादिषु प्रग्रहेषु वर्णलोपासंयुक्तविवृत्तया प्रग्रहाभिव्यक्तेरितिकरणो न स्यात् । नैतदस्ति । 'आरे अस्मे च शृण्वते'[8] इत्यादिष्वपि दर्शनात् । वर्णलोपासंयुक्तविवृत्तेः प्रग्रहव्यभिचारित्वात् ॥ ४ ॥

---

[1] तन्मन्दम्. [2] उपजननशक्यशङ्कः. [3] स. १-१-७. [4] इङ्ग्यान्ते हि. [5] सं. १-१-३. [6] अभिव्यञ्जक. [7] स. १-३-८. [8] स. १-५-५.

## ऊकारः ॥ ५ ॥

'ऊकारः' पदान्तः सर्वत्र प्रग्रहो भवति पदसमये वर्तमानः। यथा—"हनू वा एते"[1]। "वासंन्तिकावृतू"[2]। "बाहू उपस्तुतं"[3] पदसमये वर्तमान इति किं? "सूनूनूमिथूमक्षुऊ" (३–१४) इत्यादावपि स्यात् ॥ ५ ॥

ऊकारः पदान्तः प्रग्रहो भवति। 'इन्द्रवायू वि मुञ्चताम्'[4] 'अन्तनामानावृतू भवतः'[5]। 'द्वे सक्थ्यौ द्वौ बाहू'[illegible]। पदान्त इति किम्? 'ऊर्जे त्वा'[7]। इतिकरणः पदाध्यायेऽस्य स्यात्' किञ्च—अपदान्तस्य प्रग्रहत्वे "अप्रग्रहाः समानाक्षराणि" (१६–६) इति प्रग्रहसदृशानामपदान्तानामपि समानाक्षराणामानुनासिक्यं स्यात् ॥ ५ ॥

—o—

## ओकारोऽसाꣳहितोऽकारव्यञ्जनपरः ॥ ६ ॥

'असाꣳहितः' 'ओकारः' अकारपरः व्यञ्जनपरो वा प्रग्रहः स्यात्। यथा—"वक्षा हि सूनो असि"[8]। "विष्णो हव्यꣳरक्षस्व"[illegible] असाꣳहित इति किं? "सोऽब्रवीत्"[10]। एवम्पर इति किं? "विष्णवेहीदम्"[11]। सꣳहितानिमित्तः साꣳहितः न साꣳहितः असाꣳहितः। अकारश्च व्यञ्जनं च अकारव्यञ्जने एते परे यस्मात् सः तथोक्तः ॥ ६ ॥

---

[1] सं. ६-२-११. [2] सं. ४-५-११. [3] सं. ४-२-८. [4] सं. १-१-७.
[5] „ ७-४-८. [illegible] „ ७-४-११. [7] „ १-१-१. [8] „ १-३-१४.
[illegible] „ १-१-३. [10] „ २-१-२. [11] „ २-४-१२.

संहितायां जातः सांहितः । यः पदाध्याये न विद्यते विद्यते तु संहितायां स सांहितः । ततोऽन्यः असांहितः । तथाभूत ओकारः पदान्तः प्रग्रहो भवति अकारे व्यञ्जनेषु च परतः । अकारपरस्तावत्–'अग्नेऽ दंभ्यायोऽ शीततनो पाहि'[1] । 'उरो अन्तरिक्ष सजूर्देवेन'[2] । व्यञ्जनपरः खल्वपि—'विष्णो हव्यꣳ रक्षस्व'[3] । 'एहि वसो पुरोवसो प्रियो मे'[4] । असांहित इति किम् । 'मातरिश्वनो घर्मोऽसि'[3] । अकारलोपो न स्यात् । वक्ष्यति—"आयोध्वयों ऋतो पूर्वः" (१२–८) इति तत्रान्यतःसिद्धस्य लोपस्य विधानं प्रग्रहान्तरपूर्वकस्यालोपार्थम् । नन्वेवं सति "लुप्यते त्वकारः" (११–१) इति ओकारपूर्वस्याकारस्य लोपे 'विधिरुत्सर्गो नावकल्पते' इति तदुपपत्त्यर्थं "आयोध्वयों ऋतो पूर्वः" (१२–८) इत्येष पुनर्विधिः अतोऽन्यस्मादसांहितादोकारात्परस्याकारस्यालोपार्थमाश्रयिष्यते । ततः सांहितस्य ओकारस्य प्रग्रहत्वेऽपि नानिष्टं किञ्चिदस्तीति व्यर्थमसांहितविशेषणम् । अत्रोच्यते—न ह्यनिष्टं नास्तीति संज्ञाः क्रियन्ते । अपि तु कार्यमस्तीत्येव । कार्यार्थं हि संज्ञापरिभाषम् । तस्मात्सांहित ओकारे प्रग्रहकार्यरहिते संज्ञा मा भूदित्यसांहितविशेषणं प्रयुज्यते । अकारव्यञ्जनपर इति किम् ? 'विष्णवेहीदम्'[5] । 'वायविष्ट्ये'[6] ॥



## समहदथपित्पूर्वश्च ॥ ७ ॥

पूर्वोक्तनिमित्ताभावेऽपि[7] कार्यविधानार्थमोकारं विशिनष्टि—चकार ओकारमन्वादिशति । 'स, म, ह, द, थ, पित्' एवं पूर्वः

[1] सं. १-१-१३. [2] सं. १-३-८. [3] सं. १-१-३. [4] सं. ३-२-५.
[5] „ २-४-१२. [6] „ २-२-१२. [7] पूर्वोक्तपरनिमित्ता.

असांहित ओकारः अकारव्यञ्जनाभ्यामन्यपरोऽपि प्रग्रहो भवति यथा—"सो एवैषेतस्य"[1] । "मा भेर्मोऽरो मो एषाम्"[2] । "उपहूतां४ हो इत्याह"[3] । "इन्दो इत्याह"[4] । "तथो एवोत्तरे"[5] "पितो आ विशस्व"[6] । एवम्पूर्व इति किं? "शतक्रतवृद्धं शमिव"[7] असांहित इति किं? "प्र सो अग्ने"[8] ॥ ७ ॥

आकारादिस्वरपरार्थोऽयमारम्भः । तेन ओकारोऽसांहित इत्येतावत्पूर्वसूत्रादनुवर्तते । समहदथपित्पूर्व इति कार्यभाजो विशेषणमात्रम् । पदकार्यविधिषु कार्यभाक्पदैकदेशस्य निमित्तत्वो[9]-पयन्धत्वायोगात् । एवमुत्तरत्रापि द्रष्टव्यम् । तदयमर्थः--स । म । ह । द । थ । इत्येतव्यञ्जनपूर्वकः पिच्छब्दपूर्वकश्च असांहित ओकारः पदान्तः प्रग्रहो भवतीति । स—'वशाऽनूवन्धया सो एवैषेतस्य"[1] । म-'मा भेर्मोऽरो मो एषाम्[2] । ह-' उपहूतां ४ हो इत्याह"[3] । द—'इन्दो इन्द्रियावतः'[10] । थ—'अथो आहुः'[11] । पित्—'पितो आ विशस्व'[6] । एवंपूर्व इति किम् । 'शविष्ठ धृष्णया गहि'[12] ॥

---

## अथैकारेकारौ ॥ ८ ॥

अथ इत्ययमधिकारः । 'एकारेकारौ' प्रग्रहत्वेन विधीयेते इति एतदधिकृतं वेदितव्यम् ॥ ८ ॥

---

[1] सं. २-२-९. [2] सं. ४-५-१०. [3] सं. २-६-७. [4] सं. ६-५-८.
[5] सं. ३-४-९. [6] सं. ५-७-२. [7] सं. १-६-१२. [8] सं. ३-२-११.
[9] निमित्तो. [10] सं. १-४-२७. [11] सं. ७-१-१. [12] सं. १-४-२९.

एकारश्च ईकारश्च एकारेकारौ । कुत एवमिति चेत्, "देवते उभे" "अमी चक्षुषी" (४-११, १२) इति तयोरेवोत्तरत्रोपादानात्। शास्त्रान्तरेऽप्यैकारादेः प्रगृह्यत्वानुपदेशाच्च । एकारेकाराविह उत्तरेषां विधीनां संज्ञित्वेन अधिक्रियेते। "द्यावापृथिवी" "पूर्वेश्च" (४-१२, १३) इत्यादिषु वर्णान्तरस्य प्रग्रहसंज्ञा न भवति ॥ ८ ॥

## अस्मे ॥ ९ ॥

अस्मे इत्येतस्मिन् ग्रहणे, अन्त्यस्वरः प्रग्रहो भवति । यथा— "अस्मे ते बन्धुः"[1] ॥ ९ ॥

अस्मे इत्यत्र विद्यमानोऽधिकृतो वर्णः पदान्तः प्रग्रहो भवति । 'अस्मे ज्योतिः'[1] । 'अस्मे इन्द्राबृहस्पती'[2] ॥ ९ ॥

## त्वे इत्यनिङ्ग्यान्तः ॥ १० ॥

इतिशब्दः केवलपदग्रहणत्वं द्योतयति। 'अनिङ्ग्यान्तः' त्वे इत्येष शब्दः प्रग्रहो भवति । यथा—"त्वे क्रतुमपि"[3] । अनिङ्ग्यान्त इति किं? "अनागास्त्वे अदितित्वे तुरासः"[4] । इङ्ग्यस्यान्तः इङ्ग्यान्तः न इङ्ग्यान्तः अनिङ्ग्यान्तः ॥ १० ॥

इङ्ग्यस्य अन्तः इङ्ग्यान्तः । ततो नञ्समासः । त्वे इत्यत्राधिकृतो वर्णः पदान्तोऽनिङ्ग्यान्तः प्रग्रहो भवति। 'त्वे रायस्तोत रायः'[5]। अनिङ्ग्यान्त इति किम्? 'अनागास्त्वे अदितित्वे'[4]।

[1] सं. १-२-७. [2] सं. ३-३-११. [3] सं. ३-५-१०. [4] सं. २-१-११.
[5] सं. १-२-५.

अनिङ्गयस्यान्त इति विग्रहे विधिबलात्पदग्रहणपरिभाषा न स्यात्। ततश्च । 'क्रत्वे दक्षाय जीवसे'[1] इत्यादौ प्रग्रहत्वं स्यात् । इष्टं च न सिध्येत् । तन्निवारणार्थं इतिकरणः । तेन हि पदरूपताऽभिव्यक्तेस्तद्विरुद्धोविग्रहो निवार्यते ॥ १० ॥

---

देवते उभे भागधे ऊर्ध्वे विशाखे शृङ्गे एने मेध्ये तृण्णे तृद्ये कनीनिके पार्श्वे शिवे चोत्तमे एवोत्तरे शिप्रे रथन्तरे वत्सरस्यरूपे विरूपे विपुरूपे सदोहविर्धाने अधिषवणे अहोरात्रे धृतव्रते स्तुतशस्त्रे ऋक्सामे अक्ते अर्पिते रैवते पूर्ते प्रत्ते विधृते अनृते अच्छिद्रे बहुले पूर्वजे कृणुध्वꣳसदने ॥ ११ ॥

देवते उभे भागधे ऊर्ध्वे विशाखे शृङ्गे एने मेध्ये तृण्णे तृद्ये कनीनिके पार्श्वे शिवे चोत्तमे एवोत्तरे शिप्रे रथन्तरे वत्सरस्यरूपे विरूपे विपुरूपे सदोहविर्धाने अधिषवणे अहोरात्रे धृतव्रते स्तुतशस्त्रे ऋक्सामे अक्ते अर्पिते रैवते पूर्ते प्रत्ते विधृते अनृते अच्छिद्रे बहुले पूर्वजे कृणुध्वꣳसदने एतानि पदानि प्रग्रहसंज्ञानि स्युः । यथा—"देवते समृद्ध्यै"[2] । "उभे सुश्चन्द्र"[3]।

---

[1] स. १-८-५. [2] स. २-१-९. [3] सं. ४-४-८.

"भागधे भागधा अस्मै"[1] । भाग इति किं? "अग्न उदधे"[2] "ऊर्ध्वे समिधावा दधाति"[3] । "विशाखे नक्षत्रं"[4] । वीति किं? "तस्मिन् सहस्रशाखे"[5] इति शाखान्तरे । "अन्तरा शृङ्गे"[6] "मेध्ये एवैने करोति"[7] । "प्रणेनेक्ति मेध्ये"[7] । "असंतृण्णे हि हनू"[8] । "संतृद्ये धृत्यै"[8] । "कनीनिके अग्निष्टोमौ यत्"।[9] "पार्श्वे परस्सामानः"[10] । "शिवे नो द्यावापृथिवी"[11] । "विकर्णी चोत्तमे उप दधाति"[12] । चेति किं? "सम्पाद्योत्तमे मासि"[13] । "तथो एवोत्तरे निर्वपेत्"[14] । एवेति किं? "नैति षोडश्युत्तरे"[15] । "शिप्रे अवेपयः"[16] । "यद्बृहद्रथन्तरे अन्वर्जेयुः"[13] । "संवत्सरस्य रूपे आप्नुवन्ति"[17] । "विरूपे धापयेते"[18] । "विपुरूपे अहनी"[19] । वत्सरस्य वि विपु इति किं? "अरूक्षितं दश आ रूपे अन्नम्"[20] । रूपशब्दस्य प्रतिविशेषणमुच्चारणं विस्पष्टार्थं द्रष्टव्यम् । "सदोहविर्धाने एव सं मिनोति"[21] । सद इति किं? "उपरवा हविर्धाने खायन्ते"[22] । ननु "पदग्रहणेषु पदं गम्येत" (१–५०) इति सामर्थ्यात् हविर्धाने इत्येकपदस्यैव कार्यसिद्धिः सदःपदं व्यर्थम्। नैवम् । पदग्रहणस्य स्थलान्तरे भिन्नरूपत्वसम्भावनायां[23] विशेषणं

[1] सं. २-५-६. [2] सं. ५-५-९. [3] सं. २-६-६. [4] सं. ४-४-10. [5] तै. उ. १-५. [6] ,, ६-२-८. [7] ,, ६-२-९. [8] ,, ६-२-११. [9] सं ७-२-९. [10] ,, ७-३-१०. [11] ,, ४-६ ६. [12] ,, ५-३-७. [13] ,, ७ ५-३. [14] ,, ३-४-९. [15] ,, ७-१-४. [16] ,, १-४-३०. [17] ,, ५-५-१. [18] ,, ४-१-१०. [19] ,, ४-१-११. [20] ,, ४-३-१३. [21] ,, २-५-५. [22] ,, ६-२-११. [23] सम्भवात.

सार्थकम् । भिन्नरूपत्वाभावे तु चोद्यमेवैतद्भवेत् । ननु तर्हि देवेत इति पदग्रहणस्य स्थलान्तरे "सोम देव ते मतिविदः"[1] इत्यत्र भिन्नरूपत्वात् विशेषणेन भवितव्यम् । तच्च नास्ति उच्यते, देवेत इत्यखण्डपदस्यैव कार्यविधानादत्र विशेषणं न युज्यते । अखण्डस्य विधानमिति कथं प्रतीयते? ते इत्यंशस्य "ते मा पातं" (४–४२) इत्यादिना पृथक्करणादिति ब्रूमः । नैवं हविर्धाने इत्यस्याखण्डत्वद्योतकं किञ्चिदप्यस्ति येन सदःपदं वैयर्थ्यमालम्बेत । "अधिषवणे जिह्वा चर्म"[2] अधीति किं? "सवनेसवनेऽभि गृह्णाति"[3] । "अहोरात्रे प्राविशन्"[4] । अहरिति किं? "अतिरात्रे पशुकामस्य"[4] । "द्यावापृथिवी घृतव्रते आविन्ना"[5] । घृतेति किं? "यस्य व्रते पुष्टिपतिः"[6] । "स्तुतशस्त्रे एवैतेन दुहे"[7] । स्तुतेति किं? "ऊर्ध्वशस्त्रे प्रतिष्ठिते" इति शाखान्तरे । "ऋक्सामे वै"[8] । ऋगिति किम्? "ब्रह्मसामे" इति शाखान्तरे । "घृतेनाक्ते वृषणं दधाथाम्"[9] । "भुवनेष्वर्पिते"[10] । "शाकररैवते"[11] । "जागृह्येनमिष्टापूर्ते"[10] । "प्रत्ते कामं"[12] । "विभृते समानी"[13] । वीति किम्? "अग्निधृते" इति शाखान्तरे । "सत्यानृते अवपश्यन्"[14] । "अच्छिद्रे बहुले उभे"[15] । "पूर्वजे पितरा"[16] । पूर्वेति किं! 'प्रथमजे' इति

---

[1]स. ३-२-५. [2]स. ६-४-११. [3]स. १-५-९. [4]सं. ६-६-११.
[5]सं. १-८-१२. [6]सं ३-१-११. [7]स. ५-६-८. [8]सं. ६-१-३.
[9]स. १-३-७. [10]स. ४-७-१३. [11]सं. १-८-१३. [12]स. ५-४-९.
[13] ,, २-३-८. [14] ,, ५-६-१. [15] ,, ४-१-३. [16] ,, ४-१-११.

शाखान्तरे । "गीर्भिः कृणुध्व॑सदने ऋतस्य"[1] । कृणुध्वमिति किं ! "अपां त्वा सदने सादयामि"[2] ॥॥ ११ ॥

देवते इत्यादिष्वधिकृतवर्णः पदान्तः प्रग्रहो भवति। यथा— देवते–'द्वे होते देवते'[3] । "अते समानपदे नित्यम्" (४–६२) इति प्रतिषेधः अतेशब्दान्तसामान्यविषयः सदेवतेग्रहणेनानेन विशेषविषयेण बाध्यते । इह कस्मान्न भवति—'सोम देव ते मतिविदः'[4]। "अनुदात्तो न नित्यम्" (४–४३) इति प्रतिषेधात्। देवतेग्रहणं पदद्वयैकपदसाधारणम् । "अनुदात्तो न नित्यम्" (४–४३) इति प्रतिषेधस्तु तेपदात्मकविशेषविषयत्वादितरस्य बाधकः । न त्वेकपदानेकपदयोर्मुख्यामुख्यत्वमस्ति । तुल्यरूपत्वात् । अत एव 'सदोहविर्धाने'[5] 'ऋक्सामे'[6] इति सविशेषणं, वक्ष्यति–"अते समानपदे" (४–६२) इति च । तस्मान्नान्यथा परिहारः । उभे–'उभे निपासि'[7] । भागधे–भागेत्युपबन्धात्परः । 'भागधे असाव'[8]। भागेति किम् 'अन्न उद्धे'[9] । ऊर्ध्वे–'ऊर्ध्वे समिधौ'[10]। विशाखे–'विशाखे नक्षत्रम्'[11]। चीत्युपबन्धस्य व्यावर्त्यं शाखान्तरे। नन्वेवमनेकशाखाविषयत्वे प्रातिशाख्यमिति ग्रन्थस्य आख्या विरुध्यते । नैतदस्ति । द्वित्रिशाखाविषयत्वेऽपि तदसाधारणतया उपपत्तेः। तथा बहृचानां शाकलकबाष्कलकात्मकशाखाद्वयविषयं प्रातिशाख्यं प्रसिद्धम् । एवमुत्तरत्रापि द्रष्टव्यम्। शृङ्गे–'शिशीते शृङ्गे'[12]। मेध्ये–'मेध्ये पर्वेन'[13]। पने इति चात्रेव। तृपणे—'असं-

[1] स. ४-१-११. [2] स. ४-३-१. [3] स. २-१-९. [4] स. ३-२-५.
[5] ,, २-१-५. [6] ,, ६-१-३. [7] ,, १-६-२२. [8] ,, २-५-६.
[9] ,, ५-५-९. [10] ,, २-६-६ [11] ,, ४-४-१०. [12] ,, १-२-१४.
[13] ,, ६-२-९.

न्तृणे हि'[1] । तृधे—'संतृंधे धृत्यै'[1] । कनीनिके—'कनीनिके दध्युः'[2] । पार्श्वे—'पार्श्वे परस्सामानः'[3] । शिवे–'शिवे नो द्यावा-पृथिवी'[4] । चोत्तमे–च । उत् । इति पदद्वयात्समुदितादुपबन्धात्परः "चिकर्णी चोत्तमे"[5] । चेति[6] किम्? 'उत्तमे नाके'[7] । एवोत्तरे–एव । उत् । इति पदद्वयमुपबन्धः । 'तथो एवोत्तरे निर्वपेत्'[8] । एवेति[9] किम्? 'त्रैष्टुभमुत्तर ओजो वै'[10] । शिप्रे–'शिप्रे अवेपयः'[11] रथन्तरे–'बृहद्रथन्तरे पूर्वेषु'[12] । वत्सरस्य । वि । विषु । इति त्रिभ्य उपबन्धेभ्यः पर रूपेशब्दे । 'उभे एव संवत्सरस्य रूपे आप्नुवन्ति'[13] । 'विरूपेधारयेते'[14] । 'विषुरूपे अहनी'[15] । अत्र प्रत्युपबन्धं रूपेशब्दस्य पृथक्पाठो विस्पष्टार्थः । विचित्रा हि सूत्रकृतिः । उपबन्धैः किम्? 'दश आ रूपे अक्रम'[16] । सदोहविर्धाने–'सदोहविर्धाने एव सं मिनोति'[17] सद इति किम् 'हविर्धाने खायन्ते'[1] । अधिषवणे—'हनू अधिषवणे'[1] । अधीति किम्? 'माध्यन्दिने सवने'[18] । अहोरात्रे–'अहोरात्रे गच्छ स्वाहा'[19] । अहरिति किम्? 'अतिरात्रे पशुकामस्य'[20] । धृतव्रते–'आविश्ने द्यावापृथिवी धृतव्रते'[21] । धृतेति किम्? 'वयमादित्य व्रते तव'[22] । स्तुतशस्त्रे–'स्तुतशस्त्रे माऽऽ विशतां समीची'[23] । स्तुतेत्युपबन्धस्य व्यावर्त्यं शाखान्तरे[24] । ऋक्सामे–'ऋक्सामे वै वेवेभ्यः'[25] । ऋगिति किम्? "सा मे सत्याऽऽशीः"[26] । अक्के–'अक्के तृपणं

---

[1] सं. ६-२-११. [2] सं. ७-२-९. [3] सं. ७-३-१०. [4] सं. ४-६-६.
[5] „ ५-३-७. [6] चोदिति. [7] „ ३-५-१. [8] „ ३-४-९.
[9] एवोदिति. [10] „ ७-१-४. [11] „ १-४-३०. [12] „ ७ २-२.
[13] „ ७-५-१. [14] „ ४-१-१०. [15] „ ४-१ ११. [16] „ ६-३-१३.
[17] „ २-५-५. [18] „ ३-२-८. [19] „ १-३-११. [20] „ ६-६-११.
[21] „ १-८-१२. [22] „ १-५-११. [23] „ ७-३-१३. [24] ऊर्ध्वं शस्त्रे प्रतिष्ठितम्. इति शाखान्तरे. [25] „ ६-१-३. [26] „ १-६-३.

दध्याथाम[1]। अर्पिते—'भुवनेष्वर्पिते'[2]। रैवते—'शाकररैवते'[3]। पूर्ते—'इष्टापूर्ते'[2]। प्रत्ते—'प्रत्ते काममन्नाद्यं दुहाते'[4]। विधृते—'विधृते सर्वतः'[5]। वीत्युपबन्धव्यावर्त्यं शाखान्तरे। अनृते—'मध्ये सत्यानृते'[6]। अच्छिद्रे—'अच्छिद्रे बहुले उभे'[7]। अत्रैव बहुले च। पूर्वजे—'पूर्वजे पितरा'[8]। पूर्व इत्युपबन्धव्यावर्त्यं शाखान्तरे। कृणुध्वꣳ सदने—'गीर्भिः कृणुध्वꣳ सदने ऋतस्य'[8] कृणुध्वमिति किम्? 'अर्णवे सदने सीद'[9] ॥ ११ ॥



## अमी चक्षुषी कार्ष्णी देवताफल्गुनी मुष्टी धी नाभी वपाश्रपणी अहनी जन्मनी सुम्निनी सामनी वैष्णवी ऐक्षवी दर्वी द्यावापृथिवी ॥ १२ ॥

'अमी चक्षुषी कार्ष्णी देवताफल्गुनी मुष्टी धी नाभी वपाश्रपणी अहनी जन्मनी सुम्निनी सामनी वैष्णवी ऐक्षवी दर्वी द्यावापृथिवी एतानि पदानि प्रग्रहसंज्ञानि भवन्ति। यथा—"अमी त्वा जहति"[10]। "चक्षुषी वा एते"[11]। "कार्ष्णी उपानहौ"[12]। "पितरो देवता फल्गुनी नक्षत्रम्"[13]। देवतेति किं?

1 सं. १-३-७. 2 सं. ४-७-१३. 3 स. १-८-१३. 4 सं. ५-४-२.
5 ,, ६-८-१०. 6 ,, ५-६-१. 7 ,, ४-१-३. 8 ,, ४-१-११.
9 ,, ४-३-१. 10 ,, १-२-११. 11 ,, २-६-२. 12 ,, ५-४-४.
13 ,, ४-४-१०.

"यद्द्वितीयꣳसा फल्गुनी"[1] । "मुष्टी करोति वाचं"[2] । "प्रधी तावुकृथ्याः"[3] । "रजतनाभी वैश्वदेवौ"[4] । "वपाश्रपणी प्र हरति"[5] । वपेति किं? "पशुश्रपणी" इति शाखान्तरे । "अह्नी द्यौरिवासि"[6] । "उभे निपासि जन्मनी"[7] । "सुम्नाय सुम्निनी"[8] "सामनी प्रतिष्ठित्यै"[9] । "वलगहनौ वैष्णवी"[10] । "ऐक्षवी तिरश्ची"[11] । "दर्वी श्रीणीष आसनि"[12] । "द्यावापृथिवी एव स्वेन"[13] । द्यावेति किं? "मही द्यौः पृथिवी च नः"[14] ॥ १२ ॥

अमी चक्षुषी इत्यादिष्वधिकृतवर्णः पदान्तः प्रग्रह्यो भवति । अमी—'अमी वा इदमभूवन्'[15] । चक्षुषी—'तस्मादभितो नासिकां चक्षुषी'[16] । कार्ष्णी—'कार्ष्णी उपानहौ'[17] । देवता फल्गुनी—'अर्यमा देवता फल्गुनी नक्षत्रम्'[18] । देवतेति किम्? 'यद्द्वितीयꣳसा फल्गुनी'[1] । मुष्टी—'मुष्टी करोति वाचम्'[2] । धी—'प्रधी तावुकृथ्या मध्ये नभ्यम्'[3] । नाभी—'रजतनाभी वैश्वदेवौ'[4] । वपाश्रपणी—'वपाश्रपणी पुनरन्वारभते'[5] । वपेत्यस्य व्यावर्त्यं शाखान्तरे । अह्नी—'अह्नी द्यौरिवासि'[6] । जन्मनी—'उभे निपासि जन्मनी'[7] । सुम्निनी—'सुम्नाय सुम्निनी'[8] । सामनी—'सामनी प्रतिष्ठित्यै'[9] । वैष्णवी—'उप दधामि वैष्णवी'[10] । ऐक्षवी—'ऐक्षवी तिरश्ची'[11] । दर्वी—

[1] सं. २-१-२. [2] सं. ५-२-१. [3] सं. ७-८-११. [4] सं. ५-५-२४.
[5] „ ६-३-९. [6] „ ४-१-११. [7] „ १-४-१२ [8] „ १-१-१३.
[9] „ ४-४-२. [10] „ १-३-२. [11] „ ६-२-१. [12] „ ४-४-४.
[13] „ २-१-४. [14] „ ३-३-१०. [15] „ ३-३-७. [16] „ २-३-८,
[17] „ ५-४-४. [18] „ ४-४-१०.

'दर्वी श्रीणीष आसनि'[1]। द्यावापृथिवी—'इन्द्राग्नी द्यावापृथिवी'[2] द्यावेत्युपयन्धेन किम्? 'प्रथोसि पृथिव्यसि'[3] ॥ १२ ॥



## पूर्वश्च ॥ १३ ॥

चकारेणान्वादिष्टात् द्यावापृथिवी इत्येतस्मात् पूर्वोपि ईकार एकारो वा पदान्तः प्रग्रहो भवति । यथा—"यावती द्यावापृथिवी"[4], "आविन्ने द्यावापृथिवी"[5] ॥ १३ ॥

चशब्देनान्त्यः पृथिवीशब्दो द्यावाशब्दोपलक्षितः अन्वादिश्यते । तस्मात्पूर्वोऽधिकृतवर्णः पदान्तः प्रग्रहो भवति । तत्र अवग्रहस्य कार्यभाक्त्वप्रतिषेधात्तमतिक्रम्य पूर्वपदान्तः पूर्वत्वेन गृह्यते । 'यावती द्यावापृथिवी'[4]। 'आविन्ने द्यावापृथिवी'[5] ॥ १३ ॥



## न रुन्धे नित्यम् ॥ १४ ॥

'रुन्धे' इत्यन्त्यः स्वरो द्यावापृथिवी इत्येतस्मात् पूर्वोपि न प्रग्रहो भवति । "रुन्धे द्यावापृथिवी गच्छ"[6] । नित्यशब्दः प्राप्त्यन्तरनिषेधार्थः । "अव रुन्धे यदा सहस्रं"[7] । "धीङ्" (४–३८) इत्यादिप्राप्तिः ॥ १४ ॥

रुन्धेशब्देऽधिकृतवर्णः पदान्तो द्यावाशब्दोपलक्षितात्पृथिवीशब्दात्पूर्वः प्रग्रहो न भवति । 'पशूनेवाव रुन्धे द्यावापृथिवी

[1] सं. २-२-१२. [2] सं. १-२-१. [3] सं. ४-२-९. [4] सं. ३-२-६. [5] ,, १-८-१३. [6] ,, ६-४-१. [7] ,, २-१-५ .

गच्छ[1] । नित्यग्रहणात्प्राप्तयन्तरमस्य बाध्यते । 'लक्ष्मैयेव पशूनव रुन्धे यदा[2] । 'वौड्द्धारौ" (४-२८) इति प्राप्तिः ॥ १४ ॥

---

## हरी सहुरी सहूती कल्पयन्ती आपृपती आहुती ॥ १५ ॥

हरी सहुरी सहूती कल्पयन्ती आपृपती आहुती एतेषु पदेष्वन्त्यस्वरः प्रग्रहो भवति । यथा—"हरी ते युञ्जा पृषती"[3] "सहुरी सपर्यात्"[4] । सेति किं? "तमाहुरी ह्यति" इति शाखान्तरे । "सहूती वनतं गिरः"[5] । सेति किं? "हूती पुनर्जुहोति" इति शाखान्तरे । "अध्वरं कल्पयन्ती ऊर्ध्वं"[6] । "युञ्जा पृपती अभूताम्"[3] । आकारेण किं? "पृपती स्थूलपृपती"[7] । "पुरोडाशमेते आहुती"[8] । आ इति किं? "हुती तस्माद्विधाः" इति शाखान्तरे ॥ १५ ॥

हरी इत्यादिष्वधिकृतवर्णः पदान्तः प्रग्रहो भवति । हरी—'योजा न्विन्द्र ते हरी'[9] । सहुरी—'सहुरी सपर्यात्'[4] । सहूति—'सहूती वनतं गिरः'[5] । उभयत्र सेत्युपबन्धव्यावर्त्यं शाखान्तरे । कल्पयन्ती—'अध्वरं कल्पयन्ती ऊर्ध्वम्'[6] । आपृपती—

---

[1] स. ६-४-१. [2] स. २-१-५. [3] स. ४-६-९
[4] ,, ४-२-११. [5] ,, २-३-१४. [6] ,, १-२-१३.
[7] ,, ६-६-१२. [8] ,, १-६-२. [9] ,, १-८-५.

'हरी ते युञ्जा पृषती अभूताम्'[1] । आकारोपबन्धेन किम्? 'पृषती स्थूलपृषती'[2] । आहुती—'यदभितः पुरोडाशमेते आहुती जुहोति'[3] । आकारोपबन्धव्यावर्त्यं शाखान्तरे ॥ १५ ॥



## पूर्वश्च ॥ १६ ॥

चकारान्वादिष्टादाहुती इत्येतस्मात् पूर्वोपि ईकार एकारे वा पदान्तः प्रग्रहो भवति । यथा—"पुरोडाशमेते आहुती"[3] ॥

पूर्ववद्व्याख्या । अत्राप्यवग्रहात्पूर्वः पदान्तः हुतीशब्दात्पूर्वत्वेन गृह्यते । 'पशव एते आहुती'[3] ॥ १६ ॥



## वाससी तपसी रोदसी ॥ १७ ॥

वाससी तपसी रोदसी इत्येतेषु पदेष्वन्त्यस्वरः प्रग्रहो भवति[4] । यथा—"वाससी इव विवसानौ"[5] । "दीक्षातपसी अव रुन्धे"[6] । "इमे वै रोदसी तयोः"[7] ॥ १७ ॥

वाससीत्यादिष्वधिकृतवर्णः पदान्तः प्रग्रहो भवति । वाससी-'वाससी इव विवसानौ'[5] । तपसी—'अप्सु दीक्षातपसी'[6] । रोदसी—'आ रोदसी अपृणा जायमानः'[8] ॥ १७ ॥



---

[1] सं. ४-६-९.  [2] सं. ५-६-१२.  [3] स. १-५-२.
[4] इत्येतानि प्रग्रहसंज्ञानि भवन्ति.  [5] ,, १-५-१०.
[6] सं. ६-१-१.  [7] स. ५-१-५.  [8] सं. ४-२-२.

## परश्च ॥ १८ ॥

चकारान्वादिष्टाद्रोदसी इत्येतस्मात् पर ईकार एकारो वा पदान्तः प्रग्रहो भवति । यथा—"अग्निन्द्र॰ रोदसी वावशाने"[1] ॥

रोदसीशब्दात्परः पदान्तोऽधिकृतवर्णः प्रग्रहो भवति । 'रोदसी वावशाने अनु'[1] ॥ १८ ॥



## व्यचस्वती भरिष्यन्ती नःपृथिवी ॥ १९ ॥

एतेषु पदेष्वन्त्यः स्वरः प्रग्रहो भवति । यथा—"व्यचस्वती सं वसाथां"[2] । "अग्निमन्तर्भरिष्यन्ती"[2] । 'द्यावा नः पृथिवी इमं'[3] । न इति किं? "रेजते अग्ने पृथिवी मखेभ्यः"[3] ॥ १९ ॥

व्यचस्वतीत्यादिष्वधिकृतवर्णः पदान्तः प्रग्रहो भवति । व्यचस्वती—'व्यचस्वती सं वसाथाम्'[2] । भरिष्यन्ती—'अग्निमन्तर्भरिष्यन्ती'[2] । नः पृथिवी—'द्यावा नः पृथिवी इमम्'[3] । न इत्युपबन्धेन किम्? 'पृथिव्यसि'[4] । ननु—"लोक पदेष्ठा" (३–६) इतिवत् 'द्यावा नः पृथिवी'[3] इत्युपबन्धद्वयं पूर्वेणैव युक्तं पठितुम् किं पृथक्पाठगौरवेण? तदुच्यते—'द्यावा नः पृथिवी'[3] इति वा 'नो द्यावापृथिवी' इति वा सहपाठे "चोत्तमे पदोत्तरे" (४–११) इतिवत् पदद्वयस्यैकोपबन्धत्वशङ्का स्यात् । व्यावर्त्यं च शाखान्तरे कल्प्येत । तन्मा भूदिति पृथक्पाठगौरवमाश्रितम् ॥ १९ ॥



[1] सं. १-७-१३. [2] सं. ४-१-३. [3] सं. ४-१-११. [4] सं. ४-२-९.

**ये अप्रथेतामुर्वी ते अस्य यं क्रन्दसी छन्दस्वती ते आचरन्ती अन्तरैतासु ॥२०॥**

ये अप्रथेताम्, उर्वी, ते अस्य, यं क्रन्दसी, छन्दस्वती, ते आ च रन्ती, अन्तरा 'एतासु' ऋक्षु ईकार एकारौ वा पदान्तः प्रग्रहो भवति । यथा—"ये अप्रथेताममितेभिः"[1] । अप्रथेतामिति किं? "ये ते पन्थानः"[2] । "उर्वी रोदसी वरिवः"[1] । "ते अस्य योपणे"[3] । अस्येति किं? "तेऽवर्धन्त स्वतवसः"[4] । "यं क्रन्दसी अवसा"[3] । क्रन्दसीति किं? "यमग्ने पृत्सु मर्त्य"[5] । "छन्दस्वती उषसा पेपिशाने"[6] । "ते आचरन्ती समना"[7] । आचरन्तीति किं? "ते नो अर्वन्तो हवनश्रुतः"[8] । "अन्तरा मित्रावरुणा चरन्ती"[9] ॥ २० ॥

ये अप्रथेतामित्यादिषु सप्तस्वृक्षु अधिकृतवर्णः पदान्तः प्रग्रहो भवति । ये अप्रथेताम्—"ये अप्रथेतां—ये प्रतिष्ठे"[1] । अप्रथेतामिति किम्? "ये वाजिनम्"[10] इत्यादौ मा भूदिति । उर्वी—"उर्वी रोदसी—पत्नी अधि नो ब्रूयातम्"[1] । ते अस्य—"ते अस्य योपणे दिव्ये"[3] । अस्येति किम्? "ते ते धामानि"[11] इत्यादौ मा भूदिति । यं क्रन्दसी—"यं क्रन्दसी अवसा तस्तभाने-रेजमाने" क्रन्दसी इति किम्? 'यमग्ने पृत्सु मर्त्यम्'[5] । इत्यादौ मा भूदिति ।

---

[1] सं. ४-७-१५. [2] सं. ७-५-२४. [3] सं. ४-१-८. [4] सं. ४-१-११.
[5] सं. १-३-१३. [6] सं. ४-३-११. [7] सं. ४-६-६. [8] सं. १-७-८.
[9] सं. ६-१-११. [10] सं. ४-६-९. [11] सं. १-३-६.

छन्दस्वती—"छन्दस्वती—उषसा पेपिशाने—संचरन्ती—सूर्यपत्नी—प्रजानती—कृण्वाने—अजरे"[1]। ते आचरन्ती—"ते आचरन्ती समनेव योषा—संविदाने—आर्ली—इमे—विष्फुरन्ती"[2] आचरन्ती इति किम्? पूर्ववत्प्रत्युदाहरणम्। अन्तरा—"अन्तरा मित्रावरुणा चरन्ती—संविदाने—सुहिरण्ये—सुशिल्पे"[3] ॥ २० ॥



## नोपस्थे ॥ २१ ॥

एतास्वृक्षु 'उपस्थे' इत्यन्त्यस्वरः प्रग्रहो न भवति। यथा—"विभृतामुपस्थे"[2]। उपेति किं? "ये प्रतिष्ठे अभवताम्"[4] ॥

उपस्थे इत्यत्राधिकृतवर्णः पदान्तः प्रग्रहो न भवति। 'मातेव पुत्रं विभृतामुपस्थे'[2]। उपेति किम्? "प्रतिष्ठे अभवताम्"[4] ॥ २१ ॥



## इरावतीप्रभृत्यादाधार ॥ २२ ॥

'इरावतीप्रभृति' इरावतीशब्दमारभ्य 'आदाधार' दाधारशब्दपर्यन्तं ईकार एकारो वा पदान्तः प्रग्रहो भवति। यथा—"इरावती धेनुमती हि भूतं"[5]। "विष्णुरेते दाधार"[5] ॥ २२ ॥

इरावतीशब्दः प्रभृतिरादिर्यस्य तदिदमिरावतीप्रभृतीति क्रियाविशेषणम्। 'इरावती धेनुमती'[5] इत्यादि दाधारपर्यन्ते

[1]सं. ४-३-११. [2]सं. ४-६-६. [3]सं. ५-१-११. [4]सं. ४-७-१५.
[5]सं. १-२-१३.

देशेऽधिकृतवर्णः पदान्तः प्रग्रहो भवति—"वती। मती। यशस्विनी। यशस्ये। एते"[1] नन्वियमिरावतीप्रभृतिः त्रिष्टुप्। तेन पूर्वोक्ताभिः ऋग्भिः सहैव पाठः किमिति न? सत्यम्। पूर्वेण त्वधर्चेन संहिताम्नानादृग्विभागस्यास्पष्टत्वादेवमुच्यत इति वेदितव्यम्॥ २२॥



## पूर्वजेप्रभृत्याऽयम्॥ २३॥

'पूर्वजेप्रभृति' 'अयं'पर्यन्तं ईकार एकारो वा पदान्तः प्रग्रहो भवति। यथा–"पूर्वजे ऋतावरी इत्याह"[2]। आङिदं मर्यादायां वर्तते। ननु—"प्र पूर्वजे पितरा"[3] इत्यारभ्य "अयं पुरो भुवः"[4] इत्येतत्पर्यन्तं स्थलमेतत्सूत्रविषयः किं न स्यात्? उच्यते, भवत्पक्षे उपबन्धान्तःपातित्वात् 'कृणुध्वꣳ सदने' (४–११) इति ग्रहणस्य वैयर्थ्यं स्यात्। तस्मात् तत्स्थलमेतत्सूत्रविषयः न भवति। नन्वत्र पूर्वजेग्रहणमनर्थकम्। "पूर्वजे कृणुध्वꣳ सदने" (४-११) इति तत्रैवोक्तत्वात्। किन्तु वरीप्रभृतीत्येतावतैवालम्। नेति ब्रूमः। वरीग्रहणद्वयसम्भवात् कुत्र वा अवधित्वेन स्वीकार इति सन्देहः[6] स्यात्। किञ्च—"आसन्नꣳ सन्देहे" (१–२९) इतिवचनादुत्तरावधिसन्निकृष्टो द्वितीयवरीशब्द एव स्वीकर्तव्यः। तथा सति पूर्ववरीशब्दस्य च प्रग्रहत्वं न स्यात्[7] तच्चानिष्टम्। ननु भवन्म-

[1] सं. १-२-१३. [2] स. २-६-७. [3] स. ४-१-११. [4] सं. ४-३-२.
[5]स्यात्. तन्मा भूदिति, तस्मात् एतत्स्थल. [6]क्वे वा वरी इत्येतत्स्वीकारसन्देहः.
[7]नैव स्यात्.

तेऽपि पूर्वेनेद्वयसम्भवात् कुत्र वा ग्रहणमिति सन्देहः समानः । किञ्च-युक्तयुक्त[1]मनिष्टं च समानम् । मैवं, पूर्वेजे इति पदमत्र कार्यभाक्त्वेन नोच्यते, येन पौनरुक्त्यं भवेत्, किन्तु पूर्वश्चासौ जेशब्दश्च पूर्वेजे । एतत्प्रभृतीत्युपलक्षणत्वे[2]नोच्यते । ननु तर्हि उपहूत इति पदमतिक्रम्य अयमित्यवधित्वेन किमुच्यते ? उपहूत इति पदानां बाहुल्येऽपि 'आसन्न॰ सन्देहे' (१—२९) इति वचनात् प्राथमिकस्यैव ग्रहणसिद्धेः । मैवम् । उपहूत इतिग्रहणे सूत्रगौरवदोषः । उपेत्येतावन्मात्रस्येड्ग्यांशस्य पदत्वं गौणम् । अयं इत्यस्य तु मुख्यम् । "मुख्ये संभवति न गौणं" इति न्यायादयमिति युक्तं ग्रहणम् । नन्वेतेनैव न्यायेन आद्यावधेरनुपपन्नता । नायं पक्षः । मुख्यसम्भवाभावात् । तथा हि । ह्वयत इति मुख्ये स्वीकृते अभिविधिन्यायेन तस्यापि प्रग्रहत्वं स्यात् । तच्चानिष्टं । "अते समानपदे" (४—९४) इतिवचनादिदनिष्टं न भवतीति चेत् । 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरं' इति न्यायात्, ह्वयत इत्युच्चार्य तस्य निषेधकथनादपि तदनुच्चारणमेव रमणीयमिति मुख्यसम्भवाभावस्तदवस्थ एव । तस्मादस्मिन् सूत्रेऽनुपपत्तिलेशो नास्ति ॥

'पूर्वजे ऋतावरी' इत्यादि अयंशब्दपर्यन्ते देशोऽधिकृतवर्णः पदान्तः प्रग्रहो भवति—"जे । वरी । जे । ऐते । वरी । देवी । पुत्रे । देवी । एते । पुत्रे" ।[3] नन्वत्र पूर्वजेप्रभृत्यायमिति "प्र पूर्वजे पितरा"[4] इत्यादिः 'प्र

[1] युक्तियुक्त, । पौनरुक्त्य. [2] लक्षितत्वे. [3] सं. २-६-७, [4] सं. ४-१-११.

प्रायमग्निः "[1] इत्ययंशब्दपर्यन्तो देशः किं न स्यात्? 'पूर्वजे कृणुध्व॰ सदने' (४-११) इति विधानसामर्थ्यात् । 'वाजेवाजे'।[2] 'अग्नेऽभ्यावर्तिन्'[3] । इत्यादीनां प्रतिषेधानुपदेशाच्च । अथ हौत्रब्राह्मणेऽपि पूर्वजेप्रभृतीति किं मन्त्रानुवादांशस्थः पूर्वजेशब्दो गृह्यते? आहोस्विद्विवरण[4] प्रवादांशस्थः? इति संशयो भवति । न च पूर्वजे· इति पूर्वशब्दोपबन्धस्य व्यावर्त्यं पश्यामः । तेन पूर्वजेप्रभृतीति पूर्वस्माज्जेशब्दादारभ्येति व्याख्येयमित्यन्ये । तदिदं बालसंमोहनं न सम्यङ्न्यायविद्भ्यो रोचते । यत्तावत् "पूर्वजे कृणुध्व॰ सदने" (४-११) इत्यत्र पूर्वशब्दोपबन्धस्य व्यावर्त्यं शाखान्तरीयं परिगृहीतं तदत्रापि व्यवच्छेद्यमेव । तेन पूर्वश्चासौ जेशब्दश्चेतीदं न युक्तम्[5] । इह 'ये अप्रथेताम्'(४-२०)इत्यादयो देशनिबन्धा बहुपदसङ्ग्रहार्थाः । तेनात्र प्रथमस्य पूर्वजेशब्दस्य प्रभृतित्वे पदद्वयमधिकं गृह्यत इति स एव युक्तः पूर्वावधिः । यद्येवं "वि वा अयमार्धि"[3] इत्यादिरयंशब्द उत्तरावधिः स्यात् । नैतदेवम् । प्रगृह्यान्तरसम्भवे हि देशवैपुल्यमिष्यते । न तावत् "उपहूतोऽयम्"[7] इत्यस्य व्यतिक्रमे विध्यन्तरासङ्गृहीतं किमपि प्रगृह्यं सङ्गृह्यते । प्रत्युत 'करणे'[7] 'दत्ते'[6] प्रभृतीनां प्रतिषेधः कर्तव्य आपद्यते । तस्मान्न तस्य युज्यतेऽतिक्रम इत्येषा दिक् ॥ २३ ॥

---o---

## इमे गर्भमुपैवरसेनपरः ॥ २४ ॥

इमे इत्यन्त्यस्वरो गर्भम्, उप, एवरसेन, एवम्परः प्रग्रहः[8] स्यात् । यथा—"यदिमे गर्भमदधाताम्"[9] । "इमे उपावर्त्स्येतः"[10] । "इमे

[1] सं. ४-२-३. [2] सं. ४-१-११. [3] सं. ४-२-२. [4] उत विवरण.
[5] शब्द इति तत्र तावद्युक्तम्. [6] सं. २-६-८.
[7] सं. १-६-७. [8] पदान्तः प्रग्रहः. [9] सं. ३-४-३. [10] सं. ६-१-३.

एव रसेनानक्ति "[1] । रसेनेति किं ? "इम एवास्मे लोकाः"[2] । एवम्पर-इति किं ? "अध्वर्तव्या वा इमे देवाः"[3] ॥ २४ ॥

इमे इत्यत्राधिकृतवर्णः पदान्तः प्रग्रहो भवति—गर्भम्, उप, एवरसेन, इत्येतेषु परतः । 'यदिमे गर्भमदधाताम्'[4] । 'इमे उपावर्त्स्यंतः'[5] । 'इमे एव रसेनानक्ति'[1] । रसेनेति किम् ? 'इम एवास्मै लोकाः'[2] । एवंपर इति किम् ? 'इमे वै प्रयाजाः'[6] ॥



## क्रूरमापस्सजूर्ब्रह्मजैतेषु च ॥ २५ ॥

इमे इति शब्दमन्वादिशति चकारः । क्रूरं आपः सजूः ब्रह्मज 'एतेषु' अनुवाकेषु इमे इत्यन्त्यस्वरः, पूर्वोक्तपरनिमित्ताभावेऽपि प्रग्रहो भवति । 'क्रूरमिव वै"[7] इत्यत्र यथा—" इमे वै रोदसी "[7] । "आपो वरुणस्य "[9] इत्यत्र यथा—" इमे एवोपधत्ते "[8] । "सजूरब्दः"[9] इत्यत्र यथा—"इमे अश्विना संवत्सरः"[9] । 'ब्रह्म जज्ञानं "[10] इत्यत्र यथा—" न हीमे यजुषाऽऽप्तुम् "[10] । जेति किं? "ब्रह्मवादिनो वदन्त्यद्भिः "[11] इत्यत्र " त्रय इमे लोकाः "[11] इत्यस्य प्रग्रहत्वं मा भूदिति ॥ २५ ॥

चशब्देनेमेशब्दोऽन्वादिश्यते । 'क्रूरमिव वै'[7] । 'आपो वरुणस्य'[8] । 'सजूरब्दः'[9] । 'ब्रह्म जज्ञानमिति'[10]—इत्येतेष्वनुवाकेषु इमे-शब्देऽधिकृतवर्णः पदान्तः प्रग्रहो भवति । क्रूरम्—'इमे वै रोदसी'[7] । आपः—'इमे एवोपधत्ते'[8] । सजूः—'इमे अश्विना

---

[1] सं. ६-३-११. [2] सं. २-७-१०. [3] स. ३-२-२. [4] सं. ३-४-३.
[5] ,, ६-२-२. [6] ,, ६-१-६. [7] ,, ५-१-५. [8] ,, ५-५-४.
[9] ,, ६-६-४. [10] ,, ५-२-७. [11] ,, ३-६-६.

## पपरो न ॥ ३० ॥

सान्निध्यात् न्वती इति लभ्यते । 'पपरः' न्वती इत्यन्त्यस्वरः प्रग्रहः 'न' भवति । यथा–"मूर्धन्वती पुरोऽनुवाक्या भवति"[1] ॥

पकारपरश्चेन्न भवति । 'मूर्धन्वती पुरोनुवाक्या भवति'[1] ॥

—o—

## समीची ॥ ३१ ॥

'समीची' इत्यन्त्यस्वरः प्रगह्यो भवति । यथा—"समीची रेतस्सिश्चतः"[2] । "पश्चात् समीची ताभिः"[3] ॥ ३१ ॥

समीचीशब्देऽधिकृतवर्णः पदान्तः प्रग्रह्यो भवति । 'समीची माऽऽहृसस्पातम्'[4] ॥ ३१ ॥

—o—

## नपरो न ॥ ३२ ॥

सान्निध्यात् समीची इति लभ्यते । 'न' खलु समीची इत्यन्त्यस्वरः नकारपरः प्रग्रह्यो भवति । यथा—'समीची नामासि'[5] ॥ ३२ ॥

नकारपरश्चेन्न भवति । 'समीची नामासि'[5] ॥ ३२ ॥

—o—

[1] सं. २-६-२. [2] सं. ६-६-४. [3] सं. ६-२-३.
[4] सं. १-२-४. [5] सं. ६-५-१०.

## ची यत्प्रपरः ॥ ३३ ॥

'ची' इत्यन्त्यस्वरः 'यत्परः' 'प्रपरः' वा प्रग्रहः स्यात् । यथा—"ऐक्षवी तिरश्ची यत्"[1] । "प्राची प्रेतम्"[2] । एवम्पर इति किं? "प्राची दिक्"[3] । तकाररेफाभ्यां किं? "गौर्घृताची यज्ञः"[4] । "प्राची पत्न्यन्वास्ते"[5] । चीति किं? "एकादशिनी यद्ग्नौ"[6] । 'प्रजनने प्रजननम्'[7] ॥ ३३ ॥

समीचीशब्दस्य विशेष उक्तः । ततोऽन्यत्र चीशब्देऽधिकृतवर्णः पदान्तः प्रग्रहो भवति यत्, प्र, इत्येतयोः परतः । यदिति केवलग्रहणं प्रेति त्वकारान्तम् । यथोक्तं "ग्रहणस्य च" (१–२२) इति । 'ऐक्षवी तिरश्ची यदाश्ववालः'[1] । 'ऐक्षवी तिरश्ची प्रजापतेरेव'[1] । नन्वत्र प्रेति केवलमपि ग्रहणं भवितुमर्हतीति भवति संशयः । तत्र किं नियामकं? तदुच्यते—यत्र लक्षणस्य विधाऽन्तरैर्व्याख्यानं घटते तत्र लक्ष्यानुरूपैव विधा परिगृह्यते । यदि तु लक्ष्यानुरूपायां विधायां लक्षणमशक्तं स्यात्तदा हि दोषस्स्यात् । उक्तं च महाभाष्ये—"सर्वसन्देहेषु चेदमुपतिष्ठते । व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्" इति । अत्र प्रशब्दस्य केवलग्रहणत्वाश्रयणे पदग्रहणपरिभाषाप्रवृत्तेः 'ऐक्षवी तिरश्ची प्रजापतेः'[1] इत्यत्र प्रग्रहो न स्यात् । किन्तु "प्राची प्रेतम्"[2] इत्यादावेव स्यात् । अकारान्तग्रहणत्वाश्रयणे तु सर्वत्र सिध्यतीति तदेवाश्रितम् । एवं

[1] सं. ६-२-१. [2] स. १-२-१३. [3] स ४-३-६. [4] सं. २-५-७.
[5] ,, ६-३-७. [6] स. ६-६-७. [7] स. १-५-९.

संवत्सरः '¹ । ब्रह्म जज्ञानम्—' असावौदुम्बरीमे एवोपधत्ते '² । ' न ह्येमे यजुषाऽऽप्तुमर्हति '² । ऊेति किम् ? ' ब्रह्मवादिनो वदन्त्यद्भिः'³ इत्यत्र मा भूदिति । ' त्रय इमे लोकाः '³ । अत्र समाम्नानक्रम-मुल्लङ्घ्य ब्रह्मजेत्यन्ततो ग्रहणमुत्तरार्थम् ॥ २५ ॥

---

## पूर्णे च ॥ २६ ॥

'च'शब्दो " ब्रह्म जज्ञानं "² इत्यन्वादिशति । 'पूर्णे' इत्यन्त्यस्वरः ब्रह्मजज्ञानमित्यनुवाके प्रग्रह्यो भवति । यथा—"पूर्णे उप दधाति पूर्णे एवैनम् "² । अस्मिन्ननुवाक इति किं ? "यो वै पूर्ण आ सिञ्चति "⁴ ॥

च शब्दान्वादिष्टे ' ब्रह्म जज्ञानम् '³ इत्यनुवाके पूर्णेशब्दस्थोऽधिकृतवर्णः पदान्तः प्रग्रह्यो भवति । ' पूर्णे उप दधाति पूर्णे एवैनम् '² । अन्वादेशेन किम् ? ' यो वै पूर्ण आ सिञ्चति '⁴ ॥२६॥

---

## द्वे ॥ २७ ॥

'द्वे' इत्यन्त्यस्वरः⁵ सर्वत्र प्रग्रह्यो भवति । यथा—"येन द्यौरुग्रा पृथिवी च द्वे"⁶ ॥ २७ ॥

द्वे इत्यत्राधिकृतवर्णः पदान्तः प्रग्रह्यो भवति । ' उग्रा पृथिवी च द्वे '³ ॥ २७ ॥

---

¹ सं. ६-६-४. ² सं. ५-२-७. ³ सं. २-६-५. ⁴ सं. ७-५-६.
⁵ इत्यन्तिमस्वरः. ⁶ „ ४-१-८.

## ध्री चक्रे पपरे ॥ २८ ॥

'घ्री' 'चक्रे' इत्येते पदे 'पपरे' प्रग्रहे भवतः । यथा—"वार्त्रघ्री पूर्णमासे"[1] । "चक्रे पृष्ठानि"[2] । पपर इति किं? "यद्विरूपया वार्त्रघ्नी स्यात्"[3] । 'समिधानचक्रे नीचा तम्'[4] । घ्रीचक्रे इति किं? "शाका भौमी पान्त्रः"[5] । "येषामीशे पशुपतिः"[6] । पकारः परः याभ्यां ते पपरे ॥ २८ ॥

घ्री चक्रे' इत्यनयोरधिकृतवर्णः पदान्तः प्रग्रहो भवति । पकारे परे । 'वार्त्रघ्री पूर्णमासे'[1] । 'चक्रे पृष्ठानि'[2] । पपर इति किम्? 'यत्कर्णगृहीता वार्त्रघ्नी स्यात्'[3] । 'चक्रे नीचा तं धक्ष्यतसम्'[4] ॥ २८ ॥

—o—

## न्वती ॥ २९ ॥

'न्वती' इत्यन्त्यस्वरः प्रग्रहो भवति । यथा—"ओमन्वती तेऽस्मिन्"[7] । "वृधन्वती अमावास्यायाम्"[1] । नकारेण किं? "कर्णकावत्येतया ह स्म"[8] ॥ २९ ॥

नकारेण पूर्वेणोपलक्षिते वतीशब्देऽधिकृतवर्णः पदान्तः प्रग्रहो भवति । "वृधन्वती अमावास्यायाम्"[1] । नकारोपबन्धेन किम्? 'इयं विमृधेयमिन्द्रियावतीत्यब्रवीत्'[9] ॥ २९ ॥

—o—

| | | |
|---|---|---|
| 1 सं. २-५-२. | 2 सं. ६-६-८. | 3 सं. ६-१-६. |
| 4 „ १-२-१४. | 5 „ ५-५-१८. | 6 „ ३-१-४. |
| 7 „ २-६-९. | 8 „ ५-४-७. | 9 „ २-४-२. |

"अपुमिथुपूर्वः शकारश्चपरः" (४–९) इत्यादिष्वपि द्रष्टव्यम्। यत्प्रपर इति किम्? 'ध्रुवाऽसि घृताची नाम्ना'[1]। 'गौर्घृताची यज्ञः'[2]। 'प्राची पल्लवन्वास्ते'[3] ॥ ३३ ॥

---

## आन्मही ॥ ३४ ॥

'आन्' इत्येतद्विशिष्टे 'महीग्रहणे' अन्त्यस्वरः प्रग्रहो भवति। यथा—"महान्मही अस्तभायन्"[4]। आनिति किं! "मही द्यौः पृथिवी च नः"[5]। आकारेण किं? "वयुनाविदेक इन्मही"[6] ॥३४॥

आनित्युपचन्धात्परे महीशब्देऽधिकृतवर्णः पदान्तः प्रग्रहो भवति। 'महान्मही अस्तभायत्'[4]। आनिति किम्? 'स्वाहा। मही द्यौः'[5]। आकारव्यावर्त्यं शाखान्तरे। तकारनकारसंशयस्तु व्याख्यानत एव व्यवच्छिद्यते ॥ ३४ ॥

---

## पतीश्रुतिः ॥ ३५ ॥

'पती' इत्यस्य यत्रयत्र 'श्रुतिः' श्रवणमस्ति, तत्रतत्र प्रग्रहत्वं विज्ञेयम्। यथा—"तस्मादेका द्वौ पती विन्दते"[7]। "शुभस्पती इदम्"[8]। श्रुतिरिति किं? "दम्पती वाममश्नुतः"[9]। "प्रियमिन्द्राबृहस्पती"[10] इत्यादावपि पदैकदेशे प्रग्रहत्वाय ॥ ३५ ॥

---

[1] सं. १-१-११. [2] सं. २-५-७. [3] सं. ५-३-७. [4] सं. २-३-१४. [5] सं. ३-३-१०. [6] सं. ३-२-१३. [7] सं. ६-६-४. [8] सं. ३-३-१०. [9] सं. ३-२-८. [10] ,, ३-३-११.

श्रुतिग्रहणं पदैकदेशस्यापि सम्प्रत्ययार्थम्। पतीशब्दे[1] सर्वत्राधिकृतवर्णः पदान्तः प्रग्रहो भवति। 'उतिपणीते शुभस्पती'[2]। 'प्रियमिन्द्राबृहस्पती'[3] ॥ ३९ ॥

---

## ग्नी ॥ ३६ ॥

'ग्नी' इति[4] प्रग्रहो भवति। यथा—"अन्तराऽग्नी पशूनाम्"[5]। "विश्वामित्रजमदग्नी"[6] ॥ ३६ ॥

ग्नीशब्देऽधिकृतवर्णः पदान्तः प्रग्रहो भवति। 'अथा सपत्नानिन्द्राग्नी मे'[7]। 'अभि वा पयोऽग्नी आरोहति'[8] ॥ ३६ ॥

---

## न हिपरः ॥ ३७ ॥

ग्नी इति सान्निध्याल्लभ्यते। 'न' खलु ग्नी इति पदान्तः 'हिपरः' प्रग्रहो भवति। यथा—"ऐन्द्राग्नी हि बार्हस्पत्या"[9]। एवम्पर इति किं? "इन्द्राग्नी हवामहे" इति शाखान्तरे ॥ ३७ ॥

हिपरश्चेन्न प्रग्रहः। 'ऐन्द्राग्नी हि बार्हस्पत्या'[7] ॥ ३७ ॥

---

## वीड्वारौकृष्णश्चरावोयदापरः ॥ ३८ ॥

'वीड् द्वारौ कृष्णः चरावः यदा' इत्येवं 'परः' ईकार एकारो वा पदान्तः प्रग्रहो भवति। यथा—"धिषणे वीडू सती वीडयेथाम्"[10]।

---

[1] पतिशब्दे. [2] सं. ३-२-१०. [3] सं. ३-३-११. [4] इत्यन्त्यस्वरः. [5] सं. १-६-७. [6] स. ३-१-७. [7] सं. १-६-४ [8] स. १-५-९. [9] स. ५-५-६. [10] सं. १-४-१.

डकारेण किं? "आपश्च मे वीरुधश्च"[1]। "देवी द्वारौ मा मा"[2]। रौ इति किं? "द्वादश सं पद्यन्ते द्वादश"[3]। "अतिष्ठमाने कृष्णो रूपम्"[4]। विसर्गेण किं? "चात्वाले कृष्णविषाणाम्"[4]। "विवसानो ये चरावः"[5]। राव इति किं? "राये च नस्स्वपत्याय"[6]। "नन्नमाने यदेदन्ताः"[7]। ननु "यतन्ते यदाक्षिपुः"[8] इत्यत्र प्रग्रहत्वं किं न स्यात्? "पदग्रहणेषु पदं गम्येत" (१–१०) इति वचनात् नेति ब्रूमः ॥ ३८ ॥

वीड्। द्वारौ। कृष्णः। चरावः। यद्वा। इत्येतेषु परतः अधिकृतवर्णः पदान्तः प्रग्रहो भवति। "धिषणे वीड्ड सती वीडयेथाम्"[9]। 'देवी द्वारौ मा मा संतासम्'[2]। 'अतिष्ठमाने कृष्णः'[4]। 'विवसानो ये चरावः'[5]। "अजवन्नमाने यदेदन्ताः"[7]। पदान्त इति किम्? 'अनु देवा ममिरे वीर्यम्'[8]। 'अष्टौ च मे द्वादश च मे'[10] ॥ ३८ ॥

—o—

## न ज्ञे अह्ने नित्यम् ॥ ३९ ॥

'ज्ञे' 'अह्ने' इत्येतयोरन्त्यस्वरः 'नित्यं' प्रग्रहः 'न' स्यात्। यथा–"वरुणाय राज्ञे कृष्णः"[11]। "एण्यह्ने कृष्णः"[12]। 'वीड्' (४-३८) आदिप्राप्तिरनयोः। नित्यशब्दः प्राप्त्यन्तरप्रतिषेधप्रयोजकः।

[1] सं. ४-७-५. [2] स. ३-२-८. [3] स. १-५-७. [4] सं. ६-१-३. [5] सं. १-५-१० [6] स. ५-५-४. [7] सं. ४-६-२. [8] सं. ४-६-७. [9] सं. १-४-१ [10] सं. ४-७-११. [11] सं. ५-५-११. [12] सं. ५-५-१५.

"यत्रेऽपि कर्तोरिति तावन्नूताम्"[1] । "गमयतो भवतः" (४-९२) इत्यादिना प्राप्तिः । "स्वराज्ञेऽनोवाहौ"[2] । "सोमाय स्व" (४-४८) इति प्राप्तिः ॥ ३९ ॥

क्षे अह्वे इत्यनयोः अधिकृतवर्णः पदान्तः वीड्वादिपरः प्रग्रहो न भवति। 'वरुणाय राज्ञे कृष्णः'[3]। 'पण्यह्वे कृष्णः'[4]। नित्यग्रहणाद्विध्यन्तरप्राप्तिरपि प्रतिषिध्यते । 'सोमाय स्वराज्ञे'[5] इत्यत्र "सोमाय स्वेतस्मिन्" (४-४९) इति प्राप्तिः ॥ ३९ ॥



## आकार एकारपूर्वस्तु बहुस्वरस्य तेथे॥४०॥

'बहुस्वरस्य' पदस्य सम्बन्धी 'ते' इति 'थे' इति वा शब्द आकारपूर्व एकारपूर्वो वा प्रग्रहो भवति । यथा-"सृजाते यो विद्विषाणयोः"[5] । "शुक्रामन्थिनौ गृह्येते"[6] । "पृथिव्या रिरिचाथे"[7] । 'दृश्हणा यं नुदेथे'[8] । एवम्पूर्व इति किं? "आवृश्चते वा एतत्"[9]। "त्रीणि व्रता विदथे अन्तरेषाम्"[10] । बहुस्वरस्येति किं ? "तत् प्रवाते"[11] । "यदेते गृह्यन्त एषाम्"[12] । ते थे इति किं ? "अनूच्यमान आ सादयति"[13] । "वीड्" (४-३८) आदिनिमित्तसापेक्षतानिवर्तकः तुशब्द इति वररुचिपक्षः । माहिषेयपक्षस्तु वक्ष्यते—

[1] स. २-६-७. [2] स. ५-६-२१. [3] स. ९-५-११. [4] स. ५-५-१५.
[5] स. २-२-३. [6] सं. ६-४-१०. [7] स. ४-२-११. [8] सं. ४-७-१५.
[9] स. ३-३-८. [10] सं. २-१-११. [11] स. ६-४-७. [12] ,, ३-३-६.
[13] ,, २-२-५.

पूर्वसूत्रोक्तनिषेधं नित्यशब्दज्ञापितानुवृत्तिं निवारयतीति । तत्र वररुचिमतं रुचिरम् । बहवः स्वराः यस्मिन् तत् बहुस्वरं, तस्य । अत्र स्वरशब्देनोपादानमचाम् । बहुशब्देन व्यक्तिभेदो विज्ञेयः ॥ ४० ॥

आकार एकारेति प्रकृतिभाव[1]श्छान्दसः । तस्मादेकारशङ्का न भवति । आकारैकारौ पूर्वौ यस्मात्स तथोक्तः । एतच्च कार्यभाज एव विशेषणम्[2] । न तु निमित्तमुपबन्धश्चेत्युक्तम् । तत्पूर्वको यो बहुस्वरस्य पदस्य सम्बन्धी तेशब्दः थेशब्दश्च तत्राधिकृतवर्णः पदान्तः प्रग्रहो भवति । आकारे—'वि वा एतौ छिपाते'[3] । एकारे—'देवता इज्येते देवतानाम्'[4] । 'रिरिचाथे दिवश्च'[5] । 'न पराजयेथे'[6] । एतत्पूर्व इति किम्? 'अदित एहि'[7] । 'विदथे अन्तरेषाम्'[8] । बहुस्वरस्येति किम्? 'तत्प्रयाते विपजन्ति'[9] । "तिग्महेते । यो नो अरातिम्"[10] । तु शब्दो दशतय्यां प्रसिद्धमैकारपूर्वकप्रग्रहमम्मच्छाखातो विनिवर्तयति ॥ ४० ॥

—᯾—

## न शार्याते ॥ ४१ ॥

'शार्याते' इत्यन्त्यस्वरः प्रग्रहः 'न' भवति । यथा—"यथा शार्याते अपिबस्सुतस्य"[11] । पूर्वसूत्रप्राप्तौ सत्यां कण्ठोक्त[12]निषेधोऽनेन विधीयते ॥ ४१ ॥

शार्यातेशब्दे पूर्वसूत्रप्राप्त्या प्रग्रहो न भवति । 'यथा शार्याते अपिबः'[11] ॥ ४१ ॥

—᯾—

[1] प्रकृतिर्नान्य. [2] विशेषणमात्रम. [3] ग. ५-२-४. [4] स. २-६-२. [5] ग. ४-२-११. [6] सं. ३-२-११. [7] सं. १-६-१. [8] स. २-१-११. [9] ,, ६-६-७. [10] ,, १-२-१४. [11] ,, १-४-१८. [12] कण्ठोक्तपा.

## ते मापातं नम एनमभि वायुर्गर्भमुपाहस्तु परः ॥ ४२ ॥

मापातं नमः एनमभि वायुः गर्भम् उप अहः तु एवंपरः 'ते' इति शब्दः, प्रग्रहः स्यात् । यथा—"ते मा पातमाऽस्य"[1] । पातमिति किं? "ते माऽस्मिन् यज्ञे"[2] । "परि दधावहे पुनस्ते । नमोऽग्नये"[3] । म इति किं? "ते न व्यजयन्त"[4] । "ते एनमभि समनह्येताम्"[5] । अभीति किं? "त एनं भिषज्यन्ति ब्रह्मणः"[6] । "ते वायुर्व्यवात्"[7] । युरिति किं? "ते वाचश्स्त्रियम्"[8] । "ते गर्भमदधाताम्"[7] । "ते उपामन्त्रयन्त"[9] । "ते अहोरात्रयोः"[10] । "ते त्वाव नोत्सृज्ये इत्याहुः"[10] । उकारेण किं? "ते ते धामान्युश्मसि"[11] । एवम्पर इति किं? "ते देवाः"[12] । ते इति किं? "बृहदुक्षे नमः"[13] । 'अमुष्मिल्लोक उपशेरे"[14] । "यन्ति वा एते सवनाद्येऽहः"[15] ॥ ४२ ॥

तेशब्देऽधिकृतवर्णः पदान्तः प्रग्रहो भवति–मापातम् । नमः । एनमभि । वायुः । गर्भम् । उप । अहः । तु । इत्येतेषु परतः । 'ते मा पातमाऽस्य'[1] । पातमिति किम्? 'ते माऽस्मिन् यज्ञे'[2] । "पुनस्ते । नमोऽग्नये"[3] । 'ते एनमभि समनह्येताम्'[5] । अभीति किम्?

---

[1] सं. १-२-२. [2] स. २-२-४. [3] सं. १-५-१०. [4] स. ५-४-१.
[5] ,, २-५-६. [6] ,, २-३-११. [7] ,, ३-४-३. [8] ,, ६-१-६.
[9] ,, ६-१-३. [10] ,, ७-५-७. [11] स. १-३-६. [12] स. १-४-१०.
[13] स. १-४-२६. [14] सं. ५-३-७. [15] ,, ७-५-६.

'त एनः सुवन्ते'[1] । 'ते वायुर्व्यवात'[2] । 'ते गर्भमदधाताम्'[2] । 'ते उपामन्त्रयन्त'[3] । 'ते अहोरात्रयोः'[3] । "ते त्वाव नोत्स्रक्ष्ये इत्याहुः"[4] ॥ ४२ ॥



## अनुदात्तो न नित्यम् ॥ ४३ ॥

मापातमित्यादिपरोपि ते इत्यन्त्यस्वरः 'अनुदात्तः' 'नित्यं' प्रग्रहो 'न' भवति । यथा—"उभाभ्यामुत ते नमः"[5] । नित्यमिति किं ? लक्षणान्तरप्राप्तस्यापि प्रतिषेधो यथा स्यात् । "नमस्ते अस्त्वायुधाय"[5] । "गमयतो भवतः" (४—१२) इति प्राप्तिः ॥ ४३ ॥

ते इत्यत्राधिकृतवर्णः पदान्तोऽनुदात्तः पूर्वसूत्रप्राप्त्या प्रग्रहो न भवति । 'उत ते नमः'[6] । नित्यग्रहणाद्विध्यन्तरप्राप्तिरपि प्रतिषिध्यते । 'सोम देव ते मतिविदः'[7] । "देवते उभे" (४–११) इति प्राप्तिः । 'नमस्ते अस्त्वायुधाय'[5] । "उभाभ्यां—आपघ्नात्" (४–४९) इति प्राप्तिः ॥ ४३ ॥



## एते तनुवौवैसमेवहियज्ञपदिष्टक्परः ॥ ४४ ॥

तनुवौ वैसं एव हि यज्ञ पद् इष्टक् एवं 'परः' 'एते' इत्यन्त्यस्वरः प्रग्रहो भवति । यथा—"तस्यैते तनुवौ"[8] । "एते वै संवत्सरस्य चक्षुषी"[9] । समिति किं ? "एते वा इडाग्ने स्तनाः"[10] । "स

[1] सं. ५-६-२. [2] सं. ३-४-३. [3] सं. ६-२-३. [4] सं. ७-५-७.
[5] ,, षाड्व्या. [6] ,, ४-५-१. [7] ,, ३-३-५. [8] ,, ५-८-२.
[9] ,, २-५-६. [10] सं. १-७-१.

एते एव नमस्यन्नुपाधावत्"[1] । "एते हि देवानाम्"[1] । "चक्षुषी वा एते यज्ञस्य"[2] । "एते पदे अथो"[3] । "यदेते इष्टके उपदधाति"[4] । एवम्पर इति किं? "अथ कतम एते देवाः"[5] । एते इति किं? "मनुत एवैनम्"[6] । "पुष्करपर्णे ह्येनम्"[7] । "अग्ने यज्ञपतिं यत्त"[8] । "सप्तमे पदे जुहोति"[9] ॥ ४४ ॥

एतेशब्देऽधिकृतवर्णः पदान्तः प्रग्रह्यो भवति—तनुवौ । वैसम् । एव । हि । यज्ञ । पत् । इष्टक् । इत्येतेषु परतः । 'तस्यैते तनुवौ'[10] । 'एते वै संवत्सरस्य'[1] । समित्युपबन्धेन किम्? 'एते वै देवाश्वाः'[11] । 'स एते एव नमस्यन्'[1] । 'एते हि देवानाम्'[1] । 'चक्षुषी वा एते यज्ञस्य'[2] । 'यज्ञस्य ह्येते पदे'[3] । 'यदेते इष्टके उपदधाति'[4] ॥ ४४ ॥



## परश्च द्वयोः ॥ ४५ ॥

निमित्तिन उपरि वर्तमानयोः पत् इष्टक् इत्येतयोः चकारान्वादिष्टयोः द्वयोः परः* एकारः पदान्तः प्रग्रह्यो भवति । यथा—"यज्ञस्य ह्येते पदे"[3] । "यदेते इष्टके उपदधाति"[4] । निमित्तिन उपरि वर्तमानयोरिति किं? "सप्तमे पदे जुहोति"[9] । "तस्यास्ते देवीष्टके"[12] ॥ ४५ ॥

[1] स. ३-६-६. [2] स. २-६-२. [3] स. ५-१-६. [4] सं. ५-३-५.
[5] ,, २-६-५. [6] ,, ५-५-६. [7] ,, ५-१-४. [8] ,, १-१-५.
[9] ,, ६-१-८. [10] ,, ६-७-३. [11] ,, १-७-४. [12] ,, ८-२-९.

* द्वयोर्निमित्तयोः परः.

चशब्दस्समुच्चयार्थः । द्वयोरिति निमित्तनिमित्तिनोर्वादः। तयोस्समुदितयोस्सतोः ततः[1] परोऽधिकृतवर्णः पदान्तः प्रग्रहो भवति। 'यज्ञस्य ह्येते पदे'[2]। 'यदेते इष्टके उपदधाति'[3]। द्वयोरित्यधिकोक्तियत्नस्समुदितसम्प्रत्ययार्थः । तेन पृथग्भूतयोर्न भवति। 'यदेते गृह्यन्ते'[4] । 'इडायाः पदे'[5]। 'तस्यास्ते देवीष्टके'[6]। अन्ये तु—चशब्दान्वादिष्टाभ्यां निमित्ताभ्यामन्याभ्यां पर इति व्याचक्षते । तेषां निमित्तस्य पृथग्भावेऽपि प्रग्रहस्स्यात् । ननु निमित्तिविप्रयोगे निमित्तत्वं नास्तीति न स्यात्प्रग्रहः। एवं तर्हि "परश्चोभयोः" (४-४४) इत्यत्र उभशब्दोऽनर्थकस्स्यात् । "वृषणो स्थ उर्वश्यसि"[7] इत्यादावतिप्रसङ्गाभावात् । तस्मादत्रापि द्वयोरिति निमित्तनिमित्तिनोरेव युक्तो वादः । शब्दभेदस्तु— 'पर्णमयेन स्रुवेण जुहोति'[8]। 'पञ्चपलाशाः'[9] इत्यादिवदर्थभेदा[10]भावेऽपि न दोषाय। अर्थभेदकल्पनायां पर्यायतैव शब्दानामुत्सीदेदित्यलम् ॥ ४५ ॥

—o—

## स्थःपरः ॥ ४६ ॥

'स्थः' इत्येवंपरः ईकार एकारो वा पदान्तः प्रग्रहो भवति। यथा—"विष्णोः श्नप्त्रे स्थः"[11]। विसर्गेण किं? "लोके स्थ युष्मांस्तेऽनु"[12] ॥ ४६ ॥

---

[1] ताभ्यां. [2] सं. ५-१-६. [3] सं. ५-३-५. [4] सं. १-१-६. [5] सं. १-२-१. [6] सं. ४-२-९. [7] सं. ३-३-७. [8] ब्रा. १-७-१. [9] ब्रा. ३-८-२०. [10] दर्शविषय. [11] सं. १-२-१३. [12] सं. ३-२-१.

स्थशब्दे परतो[1]ऽधिकृतवर्णः पदान्तः प्रग्रहो भवति । 'विशो यन्त्रे स्थः'[2] । 'यज्ञस्य पदे स्थः'[3] । एवंपर इति किम्? 'य एतस्मिन् लोके स्थ'[4]॥ ४६ ॥

---

## परश्चोभयोः ॥ ४७ ॥

चकारान्नादिष्टयोः पूर्वसूत्रोक्तनिमित्तनिमित्तिनोः 'उभयोः' 'परः' ईकार एकारो वा पदान्तः प्रग्रहो भवति । यथा—"शिल्पे स्थस्ते वामा रभे ते"[5] । "दृढे स्थशिथिरे समीची"[6] । उभयोरिति किं? "वृषणौ स्थ उर्वशी"[7] । "परश्च द्वयोः" (४—४९) इतिवत् द्वयोरिति वाच्ये उभयोरिति शब्दान्तरप्रयोगोऽर्थान्तरज्ञापकः । निमित्तसहितयोः पूर्वसूत्रोक्तयोर्निमित्तयोः परः प्रग्रहो भवतीति, "परश्च द्वयोः" (४—४९) इति सूत्रार्थः । अत्र तु सूत्रे निमित्तनिमित्तिनोरुभयोः परः प्रग्रहः स्यादिति विषयभेदो विज्ञेयः ॥ ४७ ॥

व्याख्यातमेतत्पूर्वतरेण सूत्रेण । उदाहरणं तु—'ऋक्सामयोश्शिल्पे स्थस्ते वाम्'[5] । 'दृढे स्थशिथिरे समीची'[6] । उभयोरिति किम् ? 'वृषणौ स्थ उर्वश्यासि'[7] ॥ ४७ ॥

---

## सोमाय स्वैतस्मिन् ॥ ४८ ॥

"सोमाय स्वराज्ञे"[8] इत्येतस्मिन्ननुवाके ईकार एकारो वा पदान्तः

---

[1] स्थशब्दपरो. [2] स. १-१-११. [3] स. ५-१-६. [4] सं. ३-२-५.
[5] सं, १-२-२, [6] „ ३-२-४. [7] „ १-३-७. [8] „ ५-६-११.

प्रग्रहो भवति । यथा—"अवी द्वे धेनू भौमी"[1] इत्यादि । स्वेति किं ? "सोमाय पितृमते"[2] इत्यत्र मा भूदिति ॥ ४८ ॥

"सोमाय स्वराज्ञे"[1] इत्येतस्मिन् अनुवाके अधिकृतवर्णः पदान्तः प्रग्रहो भवति । 'अवी'[1] । 'वडवे'[1] । "वैराजी"[1] । इत्यादि । स्वग्रहणं किम्? 'सोमाय पितृमते'[2] इत्यस्य व्यावृत्त्यर्थम् ॥ ४८ ॥

---

द्वे ॥ ४९ ॥

'द्वे' इत्यन्त्यस्वरः सर्वत्र प्रग्रहो भवति । यथा—"द्वेद्वे सं भरति"[3] । "यद्वे नश्येताम्"[4] ॥ ४९ ॥

द्वे इत्यत्राधिकृतवर्णः पदान्तः प्रग्रहो भवति । 'न द्वे यजेत'[5] ॥ ४९ ॥

---

परश्च ॥ ५० ॥

चकारो द्वे इत्यन्वादिशति । द्वे इत्येतस्मात् 'परः' ईकार एकारो वा पदान्तः प्रग्रहो भवति । यथा—"द्वे शुक्ले द्वे कृष्णे धूम्रवती:"[6] ॥ ५० ॥

चशब्दान्वादिष्टात् द्वेशब्दात्परोऽधिकृतवर्णः पदान्तः प्रग्रहो भवति । 'द्वे शुक्ले द्वे कृष्णे'[6] । 'द्वे उत्तरे द्विपदः'[7] ॥ ५० ॥

---

[1] सं. ५-६-२१. [2] सं. १-८-१. [3] सं. १-६-८. [4] सं. २-६-३.
[5] „ २-५-५. [6] सं. ५-३-१. [7] सं. ६-६-११.

## एकव्यवेतोऽपि ॥ ५१ ॥

'एकव्यवेतोऽपि'[1] द्वे[4] इत्येतस्मात् परः ईकार एकारो वा पदान्तः प्रग्रहो भवति। यथा—"द्वे इते देवते"[2]। "द्वे वाव देवसत्रे"[3]। एकेन पदेन व्यवेतः एकव्यवेतः। अपिशब्दो द्वे इत्यन्वादिशति, मण्डूकप्लुतिन्यायेन ॥ ५१ ॥

अपिशब्देन द्वे इत्यन्वादिश्यते। द्वेशब्दादेकव्यवेतः परोऽधिकृतवर्णः पदान्तः प्रग्रहो भवति। 'द्वे वा एते विराजौ'[5]। 'तस्माद्द्वे सवने शुक्रवती'[6]। अत्र परो चेत्येकस्मिन् विधौ शक्ये एकव्यवेतोपीति व्यवायनिर्देशसंयुक्तपृथग्विधिकरणमवग्रहस्याव्यवायित्वप्रकटनार्थम्। तेन द्वितीयोदाहरणमप्युपपन्नं भवति ॥ ५१ ॥



## गमयतो भवतोऽनूकारात्परं तनू यदकरोत्कुर्यादिष्टिष्वब्रूतां प्रवर्तास्तांॅ स्तन्नीतां वाचयति भिभृतस्ताभिं गायत्रं ताभ्यामेवोभाभ्यामवान्तरं पर आपष्ठात् ॥

'गमयतः' 'भवतः' 'अनूकारात्' ऊकारव्यतिरिक्तवर्णात्, 'परम्' 'भवतः' इति पदम्। नञो यद्यप्यभावो मुख्योऽर्थः, तथाऽपि तदन्यार्थता स्वीकृता, लक्ष्यानुसारात्। 'तनू यत्' 'अक-

[1] एकेन व्यवहितोऽपि. [2] स. २-१-९. [3] सं. ७-४-६.
[4] इत्येतदन्वा. [5] ,, ७-३-९. [6] ,, ६-२-६.

रोत्' 'कुर्यादिष्टिषु' कुर्यादिति पदमिष्टिषु[1] । इष्टयो नाम दश-मादयस्त्रयः प्रश्नाः उत्तमानुवाकरहिताः । 'अब्रूताम्' 'प्रवर्तै' 'आस्ताम्' 'स्तभ्नीताम्' 'वाचयति' 'बिभृतस्त' 'अग्निं गायत्रम्' 'ताभ्यामेव' 'उभाभ्याम्' 'अवान्तरम्' इत्येवंपरः 'आपद्यात्' पदात् पूर्वो वर्तमान ईकार एकारो वा पदान्तः प्रग्रहो भवति । अभिविधा-वयमाकारः । तेन सहेत्यभिविधिः । यथा—"ते एवैनं प्रतिष्ठां गमयतः"[2] । "उत्तरावती भवतः"[3] । अनूकारात् परमिति किं ? "दीक्षन्तेऽन्तनामानावृतू भवतः"[4] । "एते वै महायज्ञस्यान्त्ये तनू यत्"[5] । यदिति किं ? "परिपतये त्वा गृह्णामि तनूनप्त्रे त्वा गृह्णामि"[6] । "बुधन्वती अग्रवती याज्यानुवाक्ये अकरोत्"[7] । 'मानवी ऋचौ धाय्ये कुर्यात्'[8] । इष्टिष्विति किं ? "अग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्"[9] । "ते अब्रूतां वरं वृणावहै"[10] । "हविर्धाने प्राची प्रवर्तयेयुः"[11] । वर्तैति किं ? "तेऽदित्याश्च समभ्रियन्त त्वया प्र जानाम"[12] । "इमे वै सहास्ताम्"[13] । "वैश्वदेवाग्निमारुते उक्थे अव्यथयन्ती स्तभ्नीताम्"[14] । "उत्तमे औदुम्बरी वाचयति"[15] । "ते एव यजमानस्य रेतो बिभृतस्तस्मात्"[16] । तेति किं ? "मन्महे यावात्मन्वद्बिभृतो यौ च रक्षतः"[17] । "एते दधाते ये

[1] कुर्यादित्येतदिष्टिषु. [2] सं. २-१-४. [3] स. ५-८-८. [4] स. ७-४-८.
[5] स. २-२-७. [6] „ १-२-१०. [7] „ २-३-४. [8] „ २-२-१०.
[9] „ २-५-५. [10] „ २-५-२. [11] „ ३-१-३. [12] „ ६-१-६.
[13] „ ३-४-३. [14] „ ४-४-२. [15] „ ५-१-१०. [16] „ ६-६-८.
[17] „ ४-७-१६.

अग्निं गायत्रम्''[1] । गायत्रमिति किं? ''सुभस्येऽग्निं पुरीष्यम्''[2] । ''एते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव''[3] । अत्र पदद्वयमेकं निमित्तमित्येतेपद[4]मुद्दिश्य आपष्ठनियमभङ्गप्रसङ्ग इति चेत्, नायं प्रसङ्गः । निमित्तैकदेशस्य पष्ठत्वोपपत्तेः सकलस्यापि निमित्तस्य पष्ठत्वमुपपद्यते[5] । लोकेऽप्यवयवधर्मेणावयविनो विशेषसिद्धेः । तथा हि, कर्णे कुण्डलं धारयन्तं कुण्डली देवदत्त इति वदन्ति । एवेति किं? ''अपहृ॒त्यग्ने । ताभ्यां पतेम''[6] । ''ये द्वे अहोरात्रे एव ते उभाभ्याम्''[7] । ''उत्सृज्ये इत्याहुर्ये अवान्तरम्''[8] । अन्तरमिति किं? ''सं तेऽव ते हेड उदुत्तमम्''[9] । आपष्ठादिति किं? 'पर इत्युत्तरः' (१-३०) इति परिभाषया अनन्तरस्यैव परत्वं स्यात् । तन्मा भूदिति ॥ ५२ ॥

गमयतः भवतः इत्यादिशब्द आपष्ठात्परः द्वितीयादिपष्ठान्तानां अन्यतमतया परश्चेदधिकृतवर्णः पदान्तः प्रग्रहो भवति । 'ते एवैनं प्रतिष्ठां गमयतः'[7] । भवत इत्येतदूकारव्यतिरिक्ताद्वर्णात्परमेव निमित्तम् । 'प्रियवती याज्यानुवाक्ये भवतः'[10] । 'ते श्रुत्ते उपजीवनीये भवतः'[11] । अनूकारात्परमिति किम्? 'य एकाष्टकायां दीक्षन्तेऽन्तनामानावृतू भवतः'[12] । तनू यदिति तनूपदं निमित्तं यदिति तस्योपबन्धः । एवं प्रवर्त । विभृतस्त इत्यादावपि पदादधिकशब्द[13] उपबन्धो विज्ञेयः । 'एते वै महायज्ञस्यान्त्ये तनू यत्'[14] । यदिति किम्? 'लोके प्रति तिष्ठति तनूनपातं यजति'[15] । 'शाकरी याज्यानुवाक्ये अकरोत्'[16] । कु-

[1] सं. ६-३-५. [2] स. ४-१-३. [3] स. ७-२-१. [4] लेतत्पद.
[5] चर्यते. [6] ,, ४-७-१३. [7] ,, ७-४-४. [8] स. ७-५-७.
[9] सं. २-५-१२. [10] ,, २-६-२. [11] ,, ३-१-९. [12] ,, ७-४-८.
[13] पदादिकशब्द. [14] ,, २-२-७. [15] ,, २-६-१. [16] ,, २-२-८.

योदिष्टिषु, 'प्रजापतिः प्रजा असृजत'[1] इत्यादयः त्रयः प्रश्नाः काम्येष्टिविधायका इष्टय इत्याख्यायन्ते । तत्रस्थं कुर्यात्पदं निमित्तम् । 'मारुती याज्यानुवाक्ये कुर्यात्'[2]। इष्टिष्विति किम्? 'अग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्'[3]। 'ते वियती अब्रूताम्'[4]। "हविर्धाने प्रवर्तयति"[5]। वर्तेति किम्? 'तेऽग्नये प्रवर्ते'[6]। 'अहोरात्रे अधिपत्नी आस्ताम्'[7] । 'अव्यथयन्ती स्तभ्नीताम्'[8]। 'उत्तमे औदुम्बरी वाचयति'[9] । 'ते एव यजमानस्य रेतो विभृतस्तस्मात्'[10] । स्तोपवन्धेन[11] किम्? 'विदथानि मन्महे यावात्मन्वद्विभृतो यौ च रक्षतः'[12]। 'वृषणꣳ होते दधाते ये अग्निं गायत्रम्'[13]। गायत्रमिति किम्? 'तस्मिन्नहं निदधे नाके अग्निमेतम्'[14]। 'एते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव'[15]। एवेति किम्? 'अपहꣳस्यन्ते। ताभ्याम्'[14]। 'ये द्वे अहोरात्रे एव ते उभाभ्याम्'[16] । 'ये अवान्तरं यज्ञं भेजाते इति'[17] । अन्तरमिति किम्? 'यज्ञेयज्ञे न उदव'[18] ॥ ९२ ॥

---

## न ग्रामी वर्चसी मिथुनी मासे लोके धत्ते॥

ग्रामी वर्चसी मिथुनी मासे लोके धत्ते, एतेष्वन्त्यस्वरो 'गमयतो भवतः' (४-९२)इत्यादिपरोपि प्रग्रहो न भवति। यथा–"ग्राम्येव भवति गणवती याज्यानुवाक्ये भवतः"[2] । "ब्रह्मवर्चस्येव भवत्युभयतो रुक्मौ भवतः"[19] । "अथ मिथुनी भवतः"[20] । "पूर्णमासे

---

[1] स. २-२-१. [2] सं. २-३-३. [3] स २-५-५. [4] सं. ५-२-३.
[5] ,, ६-२-९. [6] ,, २-४-१. [7] ,, ४-३-१०. [8] ,, ४-४-२.
[9] ,, ५-१-१० [10] ,, ५-६-८. [11] स्तेतुपवन्धेन. [12] ,, ४ ७-१५.
[13] ,, ६-३-५. [14] ,, ४-७-१३. [15] स. ७-२-१. [16] ,, ७-८-४.
[17] ,, ७-५-७. [18] ,, ३-१-११. [19] ,, २-३-२. [20] ,, ६-५-८.

प्रायच्छत्तावव्रूताम्"[1] । "लोके प्रतितिष्ठन्तो यन्ति द्वौ षडहौ भवतः"[2] "धत्ते ज्योतिष्मन्तावस्मा इमौ लोकौ भवतः"[3] ॥ ५३ ॥

पूर्वेण प्राप्तेऽतिप्रसङ्गोऽनेन निवार्यते । प्रामी वर्चसीत्यादीनामपि अधिकृतवर्णः पदान्तः प्रग्रहो न भवति । 'प्राम्येव भवति प्रियवतो याज्यानुवाक्ये भवतः'[4] । 'ब्रह्मवर्चस्येव भवत्युभयतो रुक्मौ भवतः'[5] । "अथ मिथुनी भवतः"[6] । एतेषां 'भवतोऽनूकारात्परम्' (४–५२) इति प्राप्तिः[7] । 'पूर्णमासे प्रायच्छत्तावव्रूताम्'[1] । 'लोके प्रतितिष्ठन्तो यन्ति द्वौ षडहौ भवतः'[2] । 'ज्योतिर्धत्ते ज्योतिष्मन्तावस्मा इमौ लोकौ भवतः'[3] ॥ ५३ ॥

———o———

## अते समानपदे नित्यमवे चावे च ॥ ५४ ॥

निषेधं चकारोऽन्वादिशति । अते अवे इत्यनयोः पदैकदेशयोरन्त्यस्वरः 'समानपदे' वर्तमानो 'गमयतो भवतः' (४–५२) इत्यादिपरोपि नित्यं प्रग्रहो न भवति । यथा—"अवरुन्धतेऽतिरात्रावभितो भवतः"[8] । "अभ्याह्वयते वज्रमेनमभि प्रवर्तयति"[9] । "अनाततायं धृष्णवे । उभाभ्यामुत ते नमः"[10] । समानपद इति किं? "एव ते उभाभ्याम्"[11] । अत्र नित्यशब्दः प्राप्त्यन्तरपरिहारार्थ

[1] स. २-५-२. [2] स. ७ ४-११. [3] स. २-६-२.
[4] ,, २-२-११. [5] ,, २-३-२. [6] ,, ६-५-८.
[7] एतेषामित्यादिः प्राप्तिरित्यन्ता पङ्क्तिः अन्त्योदाहरणद्वयमध्यस्था कचित्कोशेषु।
[8] सं. ७-२-६. [9] स. ३-२-८. [10] स. ४-६-१. [11] सं. ७-४-४.

इति सोदाहरणं "उपबन्धस्तु देशाय" (१–९९) इति सूत्रे प्रसङ्गादुक्तम् । समानं च तत् पदं च समानपदं, तस्मिन् समानपदे ॥ ९४ ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे चतुर्थोऽध्यायः.

## ( अते समानपदे नित्यम् )

अतेशब्दो यस्समानपदे एकपदे वर्तते तत्रस्थोऽधिकृतवर्णः पदान्तः प्रग्रहो न भवति । 'प्रजामवरुन्धतेऽतिरात्रावभितो भवतः'[1] । 'दर्शपूर्णमासौ यजते ताभ्यामेव'[2] । समानपद इति किम्? 'अहोरात्रे एव ते उभाभ्याम्'[3] । नित्यग्रहणाद्विध्यन्तरप्राप्तिरपि प्रतिषिध्यते । 'वनस्पते वीड्वङ्गो हि'[4] । 'द्वे जाये विन्दते'[5] ॥

## *( अवे चावे च )

चशब्दो नित्यं नेत्यन्यादिशति । अवेशब्देऽधिकृतवर्णः पदान्तः प्रग्रहो न भवति । "अनातताय धृष्णवे । उभाभ्याम्"[6] । नित्यग्रहणाद्विध्यन्तरप्राप्तिरपि निवार्यते । 'सूयवसिनी मनवे'[7] । 'वायव आरोहणवाहौ'[8] ॥ ९५ ॥

इत्याचार्यगार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये प्रातिशाख्यव्याख्याने चतुर्थोऽध्यायः.

---

*वैदिकाभरणकारेण "अवे च" इति पृथक्सूत्रतया व्याख्यातम्.

[1] सं. ७-२-६. [2] सं. २-६-६. [3] सं. ७-४-४. [4] सं. ४-६-६. [5] ,, ६-६-४. [6] ,, ४-५-१. [7] ,, १-२-१२. [8] सं. ६-६-३१.

# अथ पञ्चमोऽध्यायः

## अथ सꣳहितायामेकप्राणभावे ॥ १ ॥

'अथ' इत्ययमधिकारः । 'संहितायामेकप्राणभावे' इत्येतदधि[1]कृतं वेदितव्यम्, इत उत्तरं यद्वक्ष्यामः । संहितेति कोऽर्थः ? "नानापदसन्धानसंयोगः" (२४–३) इति सूत्रेणोक्ता संहितेत्यर्थः । 'परस्सन्निकर्षस्संहिता'[2] इति वैयाकरणाः पठन्ति[3] । एकस्समुत्थः प्राणः एकप्राणः, तस्य भावस्तद्भावः, तस्मिन्, इत्यात्रेयमतम् । अन्यथाऽपि समासः सङ्गच्छते, एकप्राणेन भाव्यते जन्यते उच्चार्यते इत्येकप्राणभावः । एकेनोच्छ्वासेन यावानुच्चार्यते वेदभागः तावान् 'एकप्राणभावः' इत्यर्थः । अतएवावसाने पदविधिः । ननु संहितायामित्येतावतैवालम्, एकप्राणभाव इति वा ; उभयारम्भेण किम् ? उच्यते—एकप्राणभाव इत्यनारभ्यमाणे प्रवृत्तस्य संहिताविधेः पदावसानत्वं नेष्यते । संहितायामित्यनारभ्यमाणे तु पदेष्वेक[4]प्राणभावः उपपद्यते इति वक्ष्यमाणं कार्यं कुत्र वा भवतीति सन्देहः स्यात् । तस्मादस्मिन्नुभयारम्भे प्रयोजनमस्ति ॥ १ ॥

अधिकारोऽयं आ षोडशाध्यायपरिसमाप्तेः। यानित ऊर्ध्वमधिक्रिष्यामः[5] ते विधयस्संहितायामेकप्राणभावे च वदितव्याः । इह

[1] दन्याधि.  [2] पा. १-४-१०९.  [3] भणन्ति.
[4] पदेष्वपेक.  [5] मनुक्रमिष्यामः.

द्विविधो विरामः समाम्नायसिद्धः अशक्त्यादिहेतुकश्च । तत्र समाम्नायसिद्धोऽनुवाकान्तेषु तन्मध्यनित्यावसानेषु पदक्रमान्तेषु च भवति । इतरस्त्वनियतदेशः । तत्र संहितायामिति पूर्वस्य अभाव उच्यते । एकप्राणभाव इत्यपरस्य च[1] । एकश्चासौ प्राणो निश्वास एकप्राणः । तेन भाव उच्चारणं एकप्राणभावः । तदुभयं समुदितमधिक्रियते । तेनान्यतराभावेऽपि कार्याणि न भवन्ति । यथा—'देवंगममसि'[2], 'शुन्धध्वं दैव्याय कर्मणे'[3], इत्यत्र सत्यप्येकप्राणभावे 'नोदात्तस्वरितपरः" (१४—३१) इति निषेधो न भवति । तथा संहिताप्रयोगे 'श्रेष्ठतमाय कर्मणे'[4], इत्येतावत्यशक्त्यादिकारणवशादवाने अयादेशादिकार्यं न भवति ॥ १ ॥



## यथायुक्ताद्विधिस्सा प्रकृतिः ॥ २ ॥

प्रकृतिसंहितास्वरूपं अनेनोच्यते—" प्रकृतिर्विक्रमः क्रमः " (२४—९) इति विशेषत्वेन विधानात् । 'यथायुक्तात्' यथास्थितात् पदपाठात् कूटस्थात् अविचालिनः[5] 'विधिः' 'सा' प्रकृतिसंहिता विज्ञेया । 'विधिः' विधानं प्रकृतिरित्यर्थः । यथा—"यथा असुर्वी नासि "[6] । " धन्वन्निव प्रपा असि "[7] । " सहस्रस्य प्रमा असि "[8] । " प्रच्युभिया ईरते "[9] । " ज्या इयꣳ समने "[10] । " अभिनन्त पूर्व. "[11] । अत्र सूत्रे पदानां परस्परा-

[1] इतिनिरम्य च  [2] सं. १-१-२.  [3] ,, १-१-३.  [4] सं. १-१-१.
[5] अविचालिनः.  [6] ,, १-१-९.  [7] ,, २-६-१२.  [8] ,, ६-४-११.
[9] सं. ४-३-११.  [10] ,, ४-६-६.  [11] ,, ३-१-११.

न्वयो महाभाष्यवचनेन विज्ञेयः। तच्च वचनं "ता वर्णप्रकृतयः" (२-७) इत्यत्र पठितम्। एवमन्यत्रापि "स्वरितयोर्मध्ये यत्र नीचम्" (१९-१) इत्यादौ मन्तव्यम् ॥ २ ॥

इह संहितायामित्याधिकारात्तत्प्रतियोगिविभक्तरूपं प्रकृतित्वेन आश्रितमिति तावद्विज्ञायते । तच्चतुर्विधम् । पदानि वर्णा अक्षराण्यङ्गानि चेति[1]। कुत एवमिति चेत्, "अथ चतस्रस्सं-हिताः" (२४—१) इत्यभ्युपगमात्[2] । तत्र पदात्मकं विभक्तरूपं पदाध्याये वर्तते । क्रमाध्याये चोपयुज्यत इति यद्यपि साध्यतामर्हति—अतएव विभागे ह्रस्वत्वादिकार्यं विहितम्—तथाऽपि वक्ष्यमाणकार्यविपर्ययरूपाणां तद्विभागप्रकाराणां विचित्रतया विस्तरप्रतिपाद्यत्वात्तद्व्युत्पादनं दुष्करमिति तदिह प्रधानसाध्यस्य संहिताम्नायस्य प्रकृतिरूपं साधनमाश्रीयते । वर्णात्मकं तु विभक्तरूपं न क्वचिदपि समाम्नाये विद्यत इति नैव साध्यतामर्हति । कल्प्यमानं तु तदन्यार्थतयैव कल्प्यमिति। तदपि त्रिविधम्। प्रधानसाध्यस्य संहिताम्नायस्य प्रकृतिरूपं साधनं परिकल्प्यते । तदनेन सूत्रेणाभिधीयते । यथायुक्तो यथाभूतः । तस्माल्ल्यब्लोपे पञ्चमी । यथाभूतं शब्दमाश्रित्य विधिः करिष्यते पदात्मकं वर्णात्मकं वा। साऽस्मिन्नधिकारे प्रकृतिर्वेदितव्या । न तु पूर्ववत्संहिताम्नायसिद्धं शब्दरूपमिति । अपि च अक्षरसंहिताऽङ्गसंहिता च वर्णसंहितायाः अवान्तरभेदौ वर्णाविशेषत्वादक्षराणामङ्गानां च। तेन "अथ वर्णानाम" (१३—५) इति वर्णसंहिताधिकारात्प्राक्पदसंहिता विधीयत इति तावत्स्पष्टमव-

---

[1] ष्यङ्गानिचेति. [2] इत्युपदेशात्.

गम्यते । इदं तु न विवेक्ष्यते—कुत्र वर्णसामान्यसंहिता? कुत्राक्षरसंहिता? कुत्राङ्गसंहितेति ? । तदप्यनेन सूत्रेण विविच्यते-यथायुक्ताद्विधिः सा प्रकृतिरिति । यत्राक्षरत्वनिबन्धनः कार्यविधिः, यथा—"उदात्तात्परोऽनुदात्तः" (१४—२९) इत्यध्यायशेषे "स्वरितात्सꣳहितायाम्" (२१—१०) इति सूत्रद्वये च-तत्राक्षराणां प्रकृतित्वम । यत्र त्वङ्गत्वनिबन्धनः कार्यविधिः—"व्यञ्जनꣳ स्वराङ्गम" (२१—१) इत्यादि "स्पर्शश्चोष्मपरः" (२१—९) इत्यन्ते ग्रन्थे, तत्राङ्गानां प्रकृतित्वम् । शिष्टे वर्णसंहिताधिकारे वर्णसामान्यस्येति । किञ्च—वर्णसंहिताधिकारविहितानां णकारादीनां नकारादयः प्रकृतय इत्येतद्विधित एव अवगन्तव्यमित्येतदप्यनेन सूत्रेण व्याख्यातं । अन्ये तु दशमाध्यायेऽक्षरसंहिताविधिरित्याहुः । "पदसꣳहिताऽक्षरसꣳहिता" (२४—२) इत्यनुक्रमणात्। तेषां "प्रउगमुक्थम्"[1] इत्यादौ सन्धिकार्यं स्यादेव । "अक्षरसंहितावर्णसंहिता" (२४—२) इत्यनुक्रमणं तु वर्णसमाम्नाये स्वराणां प्राथम्यादित्यनुसन्धेयम ॥ २ ॥

—o—

## तत्र पूर्वंपूर्वं प्रथमम् ॥ ३ ॥

'तत्र' संहिताविधाने, 'पूर्वं पूर्वं' पदं सूत्रं च,[2] 'प्रथमं' कर्तव्यम् । यथा—"भद्रा आ इहि"[3] इत्यत्र "दीर्घं समानाक्षरे" (१०—२) इति दीर्घः । 'भद्रा इहि'[3] इति स्थिते 'इवर्णपर एकारम्' (१०-४) इत्येकारे कृते 'भद्रेहि'[3] इति भवति । अन्यथा

[1] सं. ४-१-२. [2] पूर्वं पदं पूर्वं सूत्रं च. [3] सं. १-२-९.

एहीति कृत्वा भक्षशब्देन सन्धीयमाने भक्षेहीति स्यात् । तच्चानिष्टम् । पूर्वपदकर्तव्यत्वे एतदुदाहरणम् । पूर्वसूत्रकर्तव्यत्वेऽपि वदामः । यथा—"पद्त्रिग्रामनिष्पूर्वः" (७–२) इति नकारस्य णत्वे कृते "उत्तमपर उत्तमं सवर्गीयम्" (८–२) इत्यनेन टकारस्य णत्वे कृते 'पण्णवत्यै'[1] इति भवति । अन्यथा "उत्तमपर उत्तमम्" (८–२) इति सूत्रे प्रथमं प्रवृत्ते सति पण् नवत्या इति स्यात् । तच्चानिष्टम् । तथा, "वड्‌ स्वयमभिगूर्ताय"[2] इत्यत्र "टनकारपूर्वश्च तकारः" (९–३३) "प्रथम ऊष्मपरः" (१४–१२) इति सूत्रद्वयं प्रसक्तम् । तत्र पूर्वत्वात् "टनकारपूर्वः" (९–३३) इत्येतदेव प्रथमं कर्तव्यम् । अन्यथा वड्त्स्वयम् इति स्यात् । तच्चानिष्टम् । अथवा "इमं विष्यामि"[3] इत्यत्र "उपसर्गनिष्पूर्वोऽनुदात्ते पदे" (१–४) 'स्वरपूर्वं व्यञ्जनं'[4] (१४–१) इति सूत्रद्वयं प्राप्तम् । तत्र द्वित्वसूत्रप्राथम्ये "इमं विष्स्यामि" इति स्यात् । तस्मा भूदिति षत्वमेव प्रथमं कर्तव्यम् । पूर्वपूर्वमिति वीप्सा सर्वत्रैवमर्थं समर्थयति ॥ ३ ॥

तत्र संहिताविधिविषये[5] पूर्वपूर्वसूत्रविहितं कार्यं प्रथमं भवति । न परसूत्रविहितम् । यथा—"आयुषा नाग्नेहि"[6] इत्यत्र आङः "दीर्घं समानाक्षरे" (१०–२) इति पूर्वेणैकादेशः कर्तव्यः । "इवर्णपर यकारम्" (१०–४) इति परेण । तत्र पूर्वसूत्रविहितो दीर्घादेशः प्रथमं भवति । तत एकादेश इत्तीष्टरूपसिद्धिः । यदि

[1] सं. ७-२-१५. [2] सं. ३-२-८. [3] सं. १-१-१०. [4] व्रतनर्थ.
[5] संहिताविषये. [6] „ १-२-१२.

तु "इवर्णपर एकारम्" (१०—४) इति विधिः प्रथमं स्यात् । तदा—नाम्न एहीति तावद्भवति । ततः "एकारैकारपर ऐकारम्" (१०–६) इत्यैकारादेशादनिष्टरूपं स्यात् । तथा—"अथैता आहुतीर्जुहोति" इत्यत्र थकारात्परस्याकारस्य "एकारैकारपर ऐकारम्" (१०–६) इत्यैकादेशः कार्यः । "उदात्तात्परोऽनुदात्तस्स्वरितम्". "व्यञ्जनान्तर्हितोपि" (१४—२९,३०) इति स्वरितादेशश्च । तत्र पूर्वसूत्रविहित एकादेशः प्रथमं भवति । स चानुदात्तप्रकृतिकत्वादनुदात्तः । ततस्तस्य स्वरितादेशे प्राप्ते "नोदात्तस्वरितपरः" (१४—३१) इति प्रतिषेधादिष्टस्वरसिद्धिः । यदि तु प्रथमं स्वरितादेशस्स्यात् । तत एकादेशो भवन् "स्वरितानुदात्तसन्निपाते स्वरितम्" (१०—१२) इति स्वरितस्स्यात् । तस्य तु न बाधकं किञ्चिदिति स एव श्रूयेत ॥ ३ ॥



## त्रपुमिथुपूर्वश्शकारश्चपरः ॥ ४ ॥

'त्रपु' 'मिथु' एवम्पूर्वः शकारागमो भवति चकारपरः । यथा—"सीसं च मे त्रपुश्च मे"[1] । "मिथुश्चरन्तमुपयाति"[3] एवम्पूर्व इति किं ? "विभु च मे प्रभु च मे"[4] । एवंपर इति किं ? "असिना मिथुकः"[5] ॥ ४ ॥

चपर इत्यकारान्तः व्यञ्जननिर्देशः । न तु केवलं ग्रहणम् । तथा सति पदग्रहणपरिभाषाप्रवृत्तेः मिथुपूर्वे तदसम्भवात् । शकार इहागमो विधीयते । एषामागमानामभक्तत्वात्पूर्वोत्तरे पदे निमित्ते भवतः । यस्त्वागमोऽन्यतरभक्तस्तत्र्येनतरत्पदं निमि-

[1] सं. २-४-६. [2] स. ४-७-५. [3] स. ४-७-१०, [4] स. ४-७-४, [5] स. ४-६-५.

त्समिति वेदितव्यम्। तदयमर्थः—'त्रपु मिथु' इत्येतयोः पदयोः पूर्वयोश्शकार आगमो भवति चकारादौ पदे परतः। यथा—'सीसं च मे त्रपुश्च मे'[1]। 'मिथुश्चरन्तम्'[2]। एतत्पूर्व इति किम्? 'दिवं दृꣳह चक्षुः'[3]। चपर इति किम्? 'असिना मिथू कः'[4] ॥ ४ ॥



## सुपूर्वश्च चन्द्रपरः ॥ ५ ॥

चकारः शकारमन्वादिशति। 'सुपूर्वः' शकार आगमो भवति 'चन्द्रपरः'। यथा—'सुश्चन्द्र दस्म विश्पते'[5]। एवम्पूर्व इति किं? "प्र चन्द्रमास्तिरति"[6]। एवम्पर इति किं? "आ मा सुचरिते भज"[7]। सु इत्येष शब्दः पूर्वो यस्मादसौ सुपूर्वः ॥ ५ ॥

सु इति पदे पूर्वे शकारागमो भवति चन्द्रशब्दे परतः। यथा—'उभे सुश्चन्द्र सर्पिषः'[5]। सुपूर्व इति किम्? 'प्रेत चन्द्रदक्षिणा यज्ञस्य'[8]। चन्द्रपर इति किम्? 'सुचरिते भज'[7] ॥५॥



## सम्पूर्वस्सकारः कुरुपरः ॥ ६ ॥

'सम्' इत्येवम्पूर्वः 'सकारः' आगमो भवति, 'कुरुपरः'। यथा—"यजमानस्सꣳस्कुरुते"[9]। एवम्पूर्व इति किं? 'पुरोडा-

[1] सं. ४-७-५. [2] सं. ४-३-१५. [3] सं. १-१-३.
[4] सं. १-८-१३. [5] सं. ४-४-४. [6] सं. २-८-१८.
[7] सं. १-१-१२. [8] सं. १-८-४३. [9] सं. ५-६-६.

शाᳲ अलंकुरु'[1] । एवंपर इति किं? "संकृत्यच्छावाकसामं भवति"[2] । कुरुशब्दः परो यस्मादसौ कुरुपरः ॥ ६ ॥

समिति पदे पूर्वे सकार आगमो भवति कुरुशब्दे परतः यथा—'यजमानस्सᳲस्कुरुते'[3] । संपूर्व इति किम्? 'यज्ञमुख एव ब्रह्म कुरुते'[4] । कुरुपर इति किम? 'सं वपामि'[5] ॥ ६ ॥



## अकुर्व च प्रत्ययात्परः ॥ ७ ॥

चकारः सम्पूर्वत्वमागमं चान्वादिशति । 'अकुर्व' इति ग्रहणे 'प्रत्ययात्' 'परः' सकार आगमो भवति, सम्पूर्वः । यथा—"त इपुᳲसमस्कुर्वत"[6] । प्रत्ययो नाम अकार उच्यते । प्रत्याय्यन्ते[7] अभिव्यज्यन्ते व्यञ्जनान्यनेनेति प्रत्ययः । सम्पूर्व इति किं? "अग्निहोत्रं व्रतमकुर्वत"[8] ॥ ७ ॥

चशब्देन सम्पूर्व इत्यन्वादिश्यते । प्रत्येति पश्चादागच्छतीति प्रत्ययः परः । तथा बह्वृचानां प्रातिशाख्ये च प्रयुज्यते—"विवृत्तेश्च प्रत्ययस्सस्कुकारः" इति । तदयमर्थः—सम्पदे पूर्वं ततः परोऽकुर्वशब्दसम्बन्धी यो वर्णः तस्मात्परस्सकार आगमो भवति । 'त इपु॰ समस्कुर्वत'[6] । अन्वादेशेन किम्? 'यद्यदेऽकुर्वन'[9] । अकारात्पर इत्युक्ते कतरस्मादिति संशयस्स्यात् । उभाभ्यां वा परस्स्यात् । तन्मा भूदिति प्रत्ययादित्युक्तम् ॥ ७ ॥

---

[1] ब्रा. ६-३-१. [2] सं. ५-४-१२. [3] ब्रा. १-६-६. [4] सं. १-६-१०
[5] „ १-१-८. [6] „ ६-२-३. [7] प्रतीयन्ते. [8] „ ३-२-२.
[9] „ १-५-३.

## नीचापूर्वो दकार उच्चापरः ॥ ८ ॥

'नीचापूर्वः' 'दकारः' आगमो भवति, 'उच्चापरः'। यथा—"मध्यान्नीचादुच्चा स्रभया"[1]। एवम्पूर्व इति किं? "लोकं यन्त्युच्चावचान् हि"[2]। एवम्पर इति किं? "नीचा तं धक्षि"[3]। आगमा एते ॥ ८ ॥

नीचापदे पूर्वं दकार आगमो भवत्युच्चापदे परतः। यथा—"मध्यान्नीचादुच्चा"[1]। नीचापूर्वं इत्यस्य व्यावर्त्यं शाखान्तरे। उच्चापर इति किम्? 'नीचा तं धक्षि'[3] ॥ ८ ॥



## असम्पूर्वोऽरमृकारः ॥ ९ ॥

'असम्' इत्येवम्पूर्वः 'ऋकारः' 'अरं' विकारमापद्यते। यथा—"गृहाणामसमर्त्यै"[4]। अत्र निमित्तमेकपदस्थं विज्ञेयम्। अन्यथा 'कल्याणी रूपसमृद्धा'[5] 'वही ह्येष समृद्ध्यै'[6] इत्यादावपि भवेत्। ऋकार इति किं? 'असंतृण्णे हि'[7] ॥ ९ ॥

अत्रेदं सामर्थ्यसिद्धमनुसन्धेयम्। पदादेर्यौ लोपविकारौ तत्र पूर्वपदं निमित्तम्। यौ तु पदान्तस्य तत्रोत्तरपदमिति। तदयमर्थः—असंशब्दे पूर्वे ऋकारः अर् इत्यादेशमश्नुते संहितायां सर्वत्र। यथा—"गृहाणामसमर्त्यै बहवः"[4] असंपूर्वे

1 स. २-३-१४. 2 स. ७-४-३. 3 सं. १-२-१४. 4 सं. ३-३-८.
5 ,, ७-१-६. 6 ,, २-२-२. 7 ,, ६-२-११.

इति किम्? "यज्ञस्य समृद्ध्यै"[1] । नन्वत्राप्यसंशब्दोऽस्ति । सत्यम् । अपदत्वान्न[2] गृह्यते ॥ ९ ॥

---

## अवग्रह आशीर्धूस्सुवरिति रेफं परस्सकारष्षकारम् ॥ १० ॥

'अवग्रहे' इति सप्तम्यन्तं पदं आशीःप्रभृतिभिः प्रत्येकमभिसम्बध्यते । आशीः धूः सुवः इत्येतेष्ववग्रहेषु विसर्जनीयो रेफमापद्यते । एतेभ्यः 'परः' यदि वर्तते 'सकारः' तर्हि सोपि 'षकारं' आपद्यते । यथा—"इत्याशीर्ष्पदयर्चा"[3] । "धूर्ष्पाहावनश्रू"[4] । "सुवर्षां जिह्वामग्ने"[5] । अवग्रह इति किं? "देवसुवस्स्थ ते"[6] । 'कखपकारपरः' (८—२३) इत्यनेन आशीष्पदयेति प्राप्तम्[7] । "अघोषपरस्तस्य सस्थानम्" (९—२) इति धूस्साहौ, सुवस्सां इति च प्राप्तम्[7] । तदुभयभङ्गायायमारम्भः । इतिशब्द एषामेवैष विशेषो नान्येषामिति प्रकारवाची ॥ १० ॥

आशीर्धूस्सुवरित्यवग्रहो रेफमादेशमश्नुते संहितायां सर्वत्र। अवग्रहस्योत्तरपदसंहितैव प्राथमकल्पिकीति तत्संहितायां कार्याणि विधीयन्त इत्यनुसन्धेयम् । एवं परपदस्य निमित्तत्वे निर्दिष्टे पूर्वपदान्तस्यायं विकारो विधीयत इत्यर्थात्सम्पद्यते।

[1] स. १-५-२. [2] अपदत्वात्तु न. [3] स. ६-२-९. [4] सं. १-२-८. [5] ,, ४-२-४. [6] ,, १-८-१०. [7] प्राप्तिः

अवग्रहात्परस्सकारश्च पकारमादेशमश्नुते संहितायाम् । पदादेर्विकारस्य पूर्वपदं निमित्तमित्युक्तमेव । तद्यथा—'आशीर्पदयर्चा'[1] 'उस्राघेतं धूर्षाहावनश्रू'[2] । "दिवि मूर्धानं दधिषे सुवर्षाम्"[3] । आशीरित्यस्य रेफादेशेन "कखपकारपरः" (८–२३) इत्युपचारो निवर्त्यते । विशेषविषयत्वादस्य रेफविधेः । धूस्सुवरित्यनयोस्तु "अघोषपरस्तस्य" (९–२) इत्यूष्मादेशो निवर्त्यते । अवग्रह इति किम्? 'ये देवा देवसुवस्स्थ'[4] । सकार इति किम्? "आशीर्पदयर्चा"[1] ॥ १० ॥

---

## अथ लोपः ॥ ११ ॥

'अथ' इत्ययमधिकारः । 'लोपः' इत्येतदधिकृतं वेदितव्यं, इत उत्तरं यद्वक्ष्यामः । अयमधिकारः "तिष्ठन्त्येकया" (५-१९) इति सूत्रपर्यन्तो मन्तव्यः[5] ॥ ११ ॥

लोपाधिकारोऽयं लोपागमविवेचनार्थः । लोपविधेरन्यत्र यः अःकारः स आगमस्य संज्ञेति भावः । "तिष्ठन्त्येकया सपूर्वः" (५–२९) इत्येतदन्तोऽयमधिकारः ॥ ११ ॥

---

## ईम्पूर्वो मकारः ॥ १२ ॥

'मकारः' 'ईम्' इत्येवम्पूर्वो लुप्यते । यथा—"ई मन्द्रासु प्रयसः"[6] । एवम्पूर्व इति किं? "इमं मे वरुण"[7] । दीर्घेण

---

[1] सं. ६-२-९. [2] सं. १-२-८. [3] सं. ४-४-४. [4] सं. १-८-१०.
[5] पर्यन्तं वेदितव्यम्. [6] सं. ४-१-८. [7] ,, २-१-११.

किं? "अग्निं मित्रं वरुणम्"[1] । ईमिति पदग्रहणम् । इतरथा "पृथिवीं मा हिꣳसीः"[2] इत्यादौ मकारो लुप्येत । तच्चानिष्टम् । मकार इति किं । "ईङ्काराय स्वाहेङ्कृताय"[3] ॥ १२ ॥

ईमिति पदे पूर्वे मकारो लुप्यते । 'ई मन्द्रासु प्रयसः'[4] । ईम्पूर्व इति किम्? 'मा वस्स्तेन ईशत माऽघशꣳसः'[5] । पद इति किम्? 'पृथिवीं मा हिꣳसीः'[2,6] ॥ १२ ॥

---

## तुनुपूर्व उदात्तयोर्वकारः ॥ १३ ॥

'तु नु' इत्येवम्पूर्वो 'वकारः' लुप्यते तयोः तुन्वोः 'उदात्तयोः' सतोरिति विभज्य विनियोगो विज्ञेयः । यथा—"स त्वै यजेत"[7] । "इन्द्रा उपस्तीर्णम्"[8] । उदात्तयोरिति किं? "अनु वृत्रहत्ये"[9] । "अप्यकारादि" (१–९२) इति प्राप्तिः । एवम्पूर्व इनि किं? 'इन्द्रं वामास्ये हविः'[10] । वकार इति किं? 'प्र तु जनयतीति'[11] । 'विदुषो नु यज्ञम्'[12] । तुश्च नुश्च तुनू तौ पूर्वौ यस्मात् स तथोक्तः ॥ १३ ॥

तु नु इत्येतयोः पदयोः उदात्तयोः पूर्वयोः वकारो लुप्यते । 'स त्वै दर्शपूर्णमासौ यजेत'[13] । 'मनुष्यायेन्वै'[14] । तुनुपूर्व इति

---

[1] सं. २-१-११. [2] सं. ४-२-९. [3] सं. ७-१-१९. [4] सं. ४-१-८.
[5] ,, १-१-१. [6] मकार इति किम्? 'विर्हामिद्ा अव्यत्' (सं. १-२-१८.) इत्यपि क्वचित्कः पाठः.
[7] ,, २-६-६. [8] ,, १-६-७. [9] ,, १-६-१२. [10] ,, ३-३-११.
[11] ,, १-७-२. [12] ,, १-३-१३. [13] ,, २-५-४. [14] ,, १-५-६.

किम्? 'मा वस्स्तेन ईशत'[1]। उदात्तयोरिति किम्? 'अक्ष्ण रिहाणा वियन्तु वयः'[2]। इति केचित्। तदयुक्तम्। पदग्रहणपरिभाषयैव निरस्तत्वात्। 'सत्रा ते विश्वमनु वृत्रहत्ये'[3] इत्यादि प्रत्युदाहर्तव्यम्। अत्र तु "अप्यकारादि" (१-५२) इति विधानोऽस्ति हि प्राप्तिः। वकार इति किम्? "प्र तु जनयतीति"[5]। "भूय इतु ते दानम्"[6] ॥ १३ ॥

---

## उत्पूर्वस्सकारो व्यञ्जनपरः ॥ १४ ॥

'व्यञ्जनपरः' 'सकारः' 'उत्पूर्वः' लुप्यते। "प्रत्युत्तब्ध्यै सयत्वाय"[7]। व्यञ्जनमस्मात् परमिति व्यञ्जनपरः। एवम्पूर्व इति किम्? 'जगत्स्था देवाः'[8]। सकार इति किं? 'उत्क्रंस्यते स्वाहा'[9]। एवम्पर इति किं? 'उत्सादेन जिह्वामवक्रन्देन'[10] ॥ १४ ॥

उदिति पदे पूर्वे व्यञ्जनपरस्सकारो लुप्यते। 'ज्योतिषा दिवमुत्तभान'[11]। "उत्थास्यते स्वाहा"[9]। उत्पूर्व इति किम्? 'मा वस्स्तेन ईशत'[1]। व्यञ्जनपर इति किम्? 'देवस्त्वा सवितोत्सृजतु'[12-3]। ननु मूलशास्त्रे "उदस्स्थास्तम्भ्वोः पूर्वस्य"[14] इति स्थास्तम्भ्वोरेव सकारस्य पूर्वसवर्णादेशपूर्वको लोपस्स्मर्यते। इह तु व्यञ्जनपर इति सामान्येनोक्तम्। ततोऽन्यस्यापि लोपः प्राप्नोति। 'पुनरुत्स्यूतं वासः'[15]। 'शृत उत्स्नाति जनि-

---

[1] सं. १-१-१. [2] सं. १-१-१३. [3] सं. १-६-१२. [4] इति तदपवादः.
[5] सं. १-७-२. [6] ,, १-४-२२. [7] स. ६-६-४. [8] स. २-१-११.
[9] ,, ७-१-१९. [10] ,, ५-७-११ [11] ,, ४-६-५. [12] ,, २-३-१०.
[13] सकार इति किम्? "उत्क्रामोदक्रमीत्" (स. ६-१-३.) इत्यपि क्वाचित्कः पाठः.
[14] पा. ८-४-६१. [15] स. १-६-२.

ता मतीनाम्[1]। इति। नैष दोषः। न ह्यत्र मूलशास्त्रसिद्धं पदपरिमाणमिष्यते । अपि तु समाम्नानप्रसिद्धमेव । तेन पुनरुरस्यूतमित्यत्र उच्छब्दस्य पदैकदेशत्वान्न प्रसङ्गः । नापि श्रुत उत्स्नातीत्यत्र प्रसङ्गः । संहिताग्रन्थमात्रविषयत्वादस्य शास्त्रस्य । इह तर्हि 'उदायुषा स्वायुषा'[2] इत्यनुवाके स्वायुषोदिति क्रमस्य[3] जटायां स्यात् "स्वायुषोदुदायुषा स्वायुषोत्"[2] इति। अत्रोच्यते—

नासमाम्नातरूपस्य[4] प्रातिशाख्यं प्रवर्तकम् ।
जटा ततोऽसमाम्नाता नास्य शास्त्रस्य गोचरः ॥

त्रिविधो हि समाम्नायः समाम्नायते । संहिताम्नायः पदाम्नायः क्रमाम्नाय इति । जटा तु न कदाचित्समाम्नायते । किन्त्वभिज्ञैर्जातुचित्प्रयुज्यते । तदुक्तं शीक्षायाम्—

प्रातिशाख्यादिशास्त्रज्ञः सर्वशीक्षाविशारदः ।
बुद्धिशक्तिसमेतो यः स जटां वक्तुमर्हति ॥

कार्यं व्याकरणेऽनुक्तं समाम्नानबलात्क्वचित् ।
इदं ह्यनुविधातव्यं नाऽऽम्नातं च[5] कल्प्यते ॥

छन्दोवैशेषिकं कार्यं यच्च व्याकरणादिषु ।
स्मर्यते हेतुरत्रापि समाम्नानबलं खलु ॥

तस्मादसमाम्नातसन्धिषु छन्दोवैशेषिकं व्याकरणानुक्तं च कार्यं नारोपयितव्यम्। किञ्च—जटा नास्य शास्त्रस्य विषय इत्येकादशाध्याये—"यये स इन्द्रः पूर्वः" (११-९) इति सूत्रे स्पष्टं

[1] ब्रा. ३-७-५. [2] सं. १-२-८. [3] व्युत्क्रमस्य. [4] समाम्नातस्य रूपस्य. [5] तु.

भविष्यति । तस्मान्नात्रत्यानि कार्याणि जटायामसमाम्नातसन्धिषु निवेशयितव्यानि । ये च "अविभः पितः" (८-८) इत्यादीनां विधयस्तेषामपि जटाव्यतिरिक्तविषयाः तत्रतत्र दर्शयिष्यन्त इत्यलं प्रसङ्गेन[1] ॥ १४ ॥

---

## एष स स्य इति च ॥ १५ ॥

व्यक्तिविषयः[2] इतिशब्दः प्रत्येकमेष इत्यादीन् विसर्जनीयान्तान्[3] द्योतयति । चकारो व्यञ्जनपरतामन्वादिशति । एषः, सः, स्यः एषु पदेषु विसर्जनीयो व्यञ्जनपरो लुप्यते । यथा—'एष ते गायत्रः'[4] । 'स ते जानाति'[5] । 'एष स्य वाजी'[6] । एवम्पर इति किं? 'दम एवास्यैष उप तिष्ठते'[7] । 'स इधानः'[8] ॥ १९ ॥

चशब्देन व्यञ्जनपर इत्यन्वादिश्यते । एषः । सः । स्यः । इत्येतानि पदानि लुप्यन्ते व्यञ्जने परतः । अत्रान्त्यो वर्णो लुप्यते "वर्णस्य विकारलोपौ" (१-६६) इति परिभाषणात् । 'एष वै देवरथः'[9] । 'एष ते यज्ञो यज्ञपते'[10] । 'स खदिरोऽभवत्'[11] । 'स गिरिमुदैत्तमाग्निरनूदैत्'[12] । 'एष स्य वाजी'[6] । 'अयमुष्य प्र देवयुः'[13] । अन्वादेशेन किम्? 'यस्यैष उपधीयते'[14] । 'स इन्द्रोऽ-

---

[1] प्रपञ्चेन. [2] व्यक्तिविशिष्टः. [3] इत्यादीना विसर्जनीयान्.

[4] स. ३-१-२. [5] स. १-२-१४. [6] सं. १-७-८.

[7] सं. १-५-७. [8] ,, ४-४-४. [9] ,, २-५-६.

[10] ,, १-४-४४. [11] ,, ३-५-७. [12] ,, २-३-३.

[13] ,, ५-६-११. [14] ,, ५-६-२.

मन्यत[1]। नन्वत्रापि यकारादेशपूर्वको लोपोऽस्तीति कथं प्रत्युदाहरणम्? उच्यते—यकारलोपे हि "परश्च" (१०–२९) इति सन्धिकार्यनिषेधादिष्टरूपसिद्धिः। विसर्जनीयस्य साक्षाल्लोपे तु सन्धिकार्यप्रसङ्गादनिष्टरूपापत्तिः॥ १९॥

---

## नासः॥ १६॥

'असः' इत्यस्मिन् ग्रहणे विसर्जनीयः व्यञ्जनपरो 'न' लुप्यते। 'हृत्स्वसो मयोभूः'[2]। 'अप्यकारादि' (१–५२) इतिप्राप्ते-र्निषेधः[3]॥ १६॥

अस इति पदं व्यञ्जने परतः न लुप्यते। 'हृत्स्वसो मयोभूः'[2]। "अप्यकारादि" (१–५२) इति प्राप्तिः॥ १६॥

---

## इद्विदग्नइमांनएनौषधीःपरस्सः॥ १७॥

इदु, इदग्ने, इमां नः, एना, ओषधीः इत्येवंपरः 'सः' इत्यत्र विसर्जनीयो लुप्यते। यथा—'सेदु होता'[4]। 'सेदग्ने अस्तु'[5] उ, अग्ने इत्येताभ्यां किं? 'स इज्जनेन'[6]। 'स इद्देवेषु गच्छति'[7]। 'सेमां नो हव्यदातिम्'[8]। न इति किं? 'स इमामभ्यमृशत्'।[9]

1 सं. ७-१-६. 2 सं. ४-२-११. 3 इति प्राप्तिः.
4 ,, १-१-१४. 5 सं. १-२-१४. 6 सं. ३-३-१४.
7 ,, ४-१-११. 8 ,, ४-६-६. 9 ,, ५-५-२.

'सेनाऽनीकेन'[1] । 'सौषधीरनु रुध्यसे'[2] । स इति किं? 'परो दिवा पर एना'[3] ॥ १७ ॥

इदु । इदग्ने । इमां नः । एना । ओषधीः । इत्येतेषु परतः स इति पदं लुप्यते । अव्ययानपरार्थं वचनम् । 'सेदु होता'[4] । 'सेदग्ने अस्तु'[5] । उ अग्ने इत्युपबन्धाभ्यां किम्? 'स इध्मेन'[6] । 'सेमां नो हव्यदातिम्'[7] । न इत्युपबन्धेन किम्? 'स इमाम-भ्यमृशत्'[8] । 'सेनाऽनीकेन'[1] । 'सौषधीरनु रुध्यसे'[2] ॥ १७ ॥

---

## अवग्रह इत्येकम् ॥ १८ ॥

इतिशब्दविशिष्टे 'एकम्' इत्यस्मिन् 'अवग्रहे' मकारो लुप्येत । यथा—'इत्येकैकं तस्य जुहयात्'[9] । अवग्रह इति किं? 'इत्येकमग्रेऽथ'[10] । इतिशब्दविशिष्ट इति किं? 'यदेकमेकऽसं भरेत्'[11] ॥ १८ ॥

इतिशब्दोपबन्धात्पर[12] एकमित्यवग्रहः संहितायां लुप्यते । 'पापीयान्त्स्यादित्येकैकम्'[9] । अवग्रह इति किम्? 'अर्धुकः स्यादित्येकमग्रे'[10] । इतीत्युपबन्धेन किम्? 'यदेकमेकऽसं भरेत्'[11] ॥ १८ ॥

---

1 सं. ४-३-१३. 2 सं. ४-२-३. 3 सं. ४-६-२.
4 सं. १-१-१४. 5 सं. १-२-१४. 6 सं. २-३-१४.
7 ,, ४-६-६. 8 ,, ५-५-२. 9 ,, ५-१-१.
10 ,, ६-२-३. 11 ,, १-६-८. 12 इतिशब्दादुपबन्धात्परः.

## तिष्ठन्त्येकया सपूर्वः ॥ १९ ॥

तिष्ठन्तिशब्दविशिष्टे 'एकया' इत्यस्मिन् ग्रहणे[1] अन्त्यो वर्णः 'सपूर्वः' पूर्वसहितः लुप्यते । यथा—'तिष्ठन्त्येकैकयाऽस्तुतया समायन्ति'[2] । तिष्ठन्तीति किं? 'करोत्येकयैकयोत्सर्गम्'[3] । पूर्वेण सह वर्तत इति सपूर्वः ॥ १९ ॥

तिष्ठन्तीत्युपबन्धात्परमेकयेति पदं लुप्यते । एकयेत्यस्य अवग्रहत्वात् उत्तरपदसंहितायां अन्त्यवर्णो लोपमर्हति । स इह सपूर्वः पूर्वेण उपान्त्येन वर्णेन सहितो लुप्यते । "प्रति तिष्ठन्त्येकैकया"[2] । तिष्ठन्तीति किम्? 'करोत्येकयैकयोत्सर्गम्'[3] ॥*

---

## नकारश्शकारं चपरः ॥ २० ॥

चकारपरः 'नकारः' 'शकारम्' आपद्यते । यथा—'अहीꣳश्च सर्वाञ्जम्भयन्'[4] । 'ऋतूꣳश्च तस्य नक्षत्रियां च'[5] । 'कर्णाꣳश्चाकर्णाꣳश्च'[6] । नकार इति किं? 'शं च मे'[7] । चपर इति किं? 'ताञ्छन्दोभिरन्वविन्दत्'[8] । चकारः परो यस्मादसौ चपरः ॥ २० ॥

---

*एष च स्य इत्यादिचतुर्षु सूत्रेषूक्तो लोपनिर्देशो भद्वाया घोष इति गल्क्षु- नया पदान्त्यस्यैव । इह तु पदान्तोपान्त्ययोरेवेति विशेषः । इत्यधिकः पाठः ॥

[1] अवग्रहे. [2] सं. ७-५-८. [3] सं. ६-१-९.
[4] ,, ४-५-१. [5] ,, ७-१-३. [6] ,, १-८-९.
[7] ,, ४-७-३. [8] ,, १-५-५.

चपर इत्यत्रापि अकारान्तो व्यञ्जननिर्देशः । 'नायन्नैरयन्' (५-२१) इति प्रतिषेधसामर्थ्यात् । पदान्तो नकारः शकारमादेशमश्नुते चकारे पदादौ परतः । यथा—'भुवो नॄँश्चयौत्नः'[1] । 'सजाताँश्चाचयति'[2] । "वृत्रान्मञ्छ्रेरत्"[3] । चपर इति किम्? 'तामाहरन्'[4] ॥ २० ॥

## नायन्नैरयन्नाध्नुवन्ननड्वान्घृणीवान्वारुणानेवास्मिन् ॥ २१ ॥

आयन्, ऐरयन्, आध्नुवन्, अनड्वान्, घृणीवान्, वारुणान्, एवास्मिन् एतेषु ग्रहणेषु नकारः शकारं नापद्यते, चपरोऽपि । यथा—'लोकमायञ्चतस्रः'[5] । 'यामैरयञ्चन्द्रमसि'[6] 'आध्नुवञ्चरुणाऽस्मिन्'[7] । 'अनड्वाञ्च मे धेनुश्च मे'[8] । 'घृणीवाञ्चेतति त्मना'[9] । 'वारुणाञ्चतुष्कपालान्निर्वपेत्'[10] । 'एवास्मिञ्चक्षुर्धत्तः'[11] । एवेति किं? 'अस्मिंश्चामुष्मिंश्च'[12] ॥ २१ ॥

आयन्नित्यादिषु नकारश्शकारं नाश्नुते चकारे पदादौ परतः । आयन्—'लोकमायञ्चतस्रः'[5] । ऐरयन्—'यामैरयञ्चन्द्रमसि'[6] । आध्नुवन्—'लोक आध्नुवञ्चरुणाऽस्मिन्'[7] । अनड्वान्—'अनड्वाञ्च मे' ।

---

[1] सं. ३-४-११. [2] सं. २-२-५ [3] सं. २-४-१३.
[4] „ ७-१-८. [5] „ ५-२-३. [6] „ १-१-९.
[7] „ ५-५-१. [8] „ ४-७-१०. [9] „ ३-६-११.
[10] „ २-३-१२. [11] „ २-२-५. [12] „ ७-३-४.

नात् । 'तेनैवैनाञ्छमयति'[1] । चकारपरत्वे तु यत्र शकारादेशः प्रतिषिद्धस्तत्रैव विधिः प्रवर्तत इत्यविरोधः । 'यांमिरयश्चन्द्रमसि'[2] । 'क्षुरो भृज्वाञ्छन्दः'[3] । 'असुराञ्जयाम'[4] । एतेष्विति किम ? 'तान्कल्पयाति'[5] ॥ २४ ॥

---

## लपरौ लकारम् ॥ २५ ॥

द्विवचनसामर्थ्यात् गृहीतौ प्रकृतौ तकारनकारौ 'लकारम्' आपद्येते । 'लपरौ' यथा—'यल्लोहितं पराऽपतत्'[6] । 'त्रींल्लोँकानुदजयत्'[7] । लकारः[8] परः याभ्यां तौ लपरौ ॥ २५ ॥

आसन्नौ तकारनकारौ लकारमादेशमश्नुवाते लकारे पदादौ परतः । 'उक्षल्येभ्य एवैनल्लोकेभ्यः'[9] । 'छन्दोभिरिमांल्लोकान्'[10] ॥ २५ ॥

---

## नकारोऽनुनासिकम् ॥ २६ ॥

'अनुस्वारोत्तमा अनुनासिकाः' (२–३०) इति नकारस्यानुनासिकत्वे सिद्धे पुनरत्रापि तत्कथनमनुपपन्नम् । तस्मादत्र लक्षणया 'नकारः' नाम तत्स्थानो लकार इत्यर्थः । असौ 'अनुनासिकं' भजते । पूर्वोक्तमेवोदाहरणम् ॥ २६ ॥

1 सं. ३-४-८. 2 स. १-१-९. 3 स. ४-२-१२.
4 सं. २-४-१. 5 ,, ५-३-१. 6 ,, २-१-७.
7 ,, १-७-११. 8 लः. 9 ,, २-६-६.
10 ,, १-७-५.

नकारस्य तु अत्र विशेषमाह–नकारो लपरोऽनुनासिकं लकारमादेशमश्नुते । न तु शुद्धम् । तथैवोदाहृतम् ॥ २६ ॥

---

## मकारस्स्पर्शपरस्तस्य सस्थानमनुनासिकम् ॥ २७ ॥

'स्पर्शपरः' 'मकारः' 'तस्य' स्पर्शस्य, 'सस्थानमनुनासिकं' भजते। यथा—'यङ्कामयेत'[1]। 'शञ्च मे'[2]। 'दीक्षितदण्डम्प्र यच्छति'[3]। 'तन्ते दुश्चक्षाः'[4]। 'तम्प्रत्नथा'[5]। समानं स्थानं यस्यासौ सस्थानः, तम्। स्पर्शः परो यस्मादसौ स्पर्शपरः ॥२७॥

मकारः पदादौ स्पर्शे परतस्तस्य स्पर्शस्य समानस्थानमनुनासिकमश्नुते। 'यङ्कामयेत'[1]। 'त्वचङ्कृधीष्व'[6]। तद्वेदाग्निः'[7]। 'पौष्णञ्चरुम्'[8]। 'तच्छन्दसाञ्छन्दस्त्वम्'[9]। 'यज्ञीयमञ्चवामहे'[10]। 'तन्ते दुश्चक्षाः'[4]। 'तन्देवाः'[11]। 'प्रथमन्धातारं करोति'[12]। 'तम्प्रत्नथा'[5]। 'तम्भागधेयेन'[13]। स्पर्शपर इति किम्? 'प्रेयमगाद्धिषणा'[14]। पदसंहिताविधौ वचनात् 'अर्यम्णे',[15] 'धाम्नेधाम्ने'[16] इत्यपदान्तस्य न भवति॥

---

[1] सं. १-६-१०. [2] सं. ४-७-३. [3] सं. ६-१-४. [4] सं. ३-२-१०.
[5] सं. १-४-९. [6] सं. १-१-८. [7] सं. २-६-११. [8] सं. १-८-२.
[9] सं. ५-६-६. [10] सं. ४-२-६. [11] सं. ७-३-१. [12] ,, ३-४-५.
[13] ,, २-२-६. [14] सं. १-१-२. [15] ,, २-३-४. [16] ,, १ १-१०.

घृणीवान्—'घृणीवाञ्चेतति त्मना'[1]। वारुणान्—'तावतो वारुणाँश्च-तुष्कपालान्'[2]। एवास्मिन्—'तावेवास्मिञ्चक्षुर्धत्तः'[3]। एवेत्युपबन्धेन किम्? 'अस्मिँश्चामुष्मिँश्च'[4] ॥ २१ ॥

---

## तकारश्चकारं शचछपरः ॥ २२ ॥

'शचछपरस्तकारश्चकारम्' आपद्यते। यथा—'तच्छंयोः'[5] 'तच्चादद्युः'[6]। 'तच्छन्दसाम्'[7]। अत्र शचछपर इति सामान्येनोक्तानां निमित्तानां प्राकृतत्वं विज्ञेयम्, मुख्यत्वात्। प्राकृतवैकृतयोः प्राकृतं मुख्यम्। अन्यथा शकारग्रहणवैयर्थ्याच्च। कुतो वैयर्थ्यम्? 'स्पर्शपूर्वश्शकारश्छकारम्' (५—३४) इति शकारस्य छत्वे कृते 'तकारश्चकारं चछपरः' इत्येतावतैव सिद्धिरिति ब्रूमः। किञ्च—परसूत्रे सति प्रवृत्ते पश्चात् पूर्वसूत्रप्रसरणं न स्वरसम्। 'तत्र पूर्वंपूर्वं प्रथमम्' (५—२) इति नियमभङ्गप्रसङ्गात् ॥२२॥

तकारश्चकारमादेशमश्नुते श, च, छ इत्येतेषु व्यञ्जनेषु पदादिषु परतः। 'यच्छ्यामाकः'[8]। "यच्चिद्धि ते"[9]। 'आच्छंच्छन्दः'[10]। एतत्पर इति किम्? 'यज्ञस्य घोषदसि'[11] ॥ २२ ॥

---

[1] स. ३-५-११. [2] स. २-३-१२. [3] स. २-२-९.
[4] स. ७-३-८. [5] स. २-६-१०. [6] स. १-१-५.
[7] स. ६-५-६. [8] स. २-३-३. [9] स. ३-४-११.
[10] स. ४-३-१२. [11] स. १-१-३.

## जपरो जकारम् ॥ २३ ॥

सान्निध्यात्तकार इति लभ्यते । 'जपरः' तकारः 'जकारम्' आप्नोति[1] । यथा—'तज्जयानां जयत्वम्'[2] । एवम्पर इति किं? 'तत्प्रवाते'[3] ॥ २३ ॥

जपर इति तकारस्य विशेषणम् । न नकारस्य । 'आसन्न१ सन्देहे' (१-२९) इति वचनात् । तकारो जकारमश्नुते जकारे पदादौ परतः । 'अग्नेरहमुज्जितिमनूज्जेषम्'[4] ॥ २३ ॥

---

## नकार एतेषु ञकारम् ॥ २४ ॥

एतेष्विति बहुवचननिर्देशात् प्रत्यासन्नसूत्रद्वयस्थेषु[5] परनिमित्तेषु सम्प्रत्ययः । तस्मात् 'एतेषु' इति शचछजेषु परत इत्यर्थः । 'नकारो ञकारम्' आपद्यते । यथा—'तेनैवैनाञ्छमयति'[6] । शत्वापत्तौ निषिद्धो यो नकारः सोऽत्र चपरत्वेन विषयीक्रियते । 'लोकमायञ्श्वतस्रः'[7] । 'ताञ्छन्दोभिरनु'[8] । 'अपरूपमात्मञ्जायते'[9] । एवम्पर इति किं? 'तान्थ्सुन्धान्'[10] ॥ २४ ॥

एतेष्विति शचछजाः प्रत्यवमृश्यन्ते । न त्वासन्नस्य जकारस्य व्यक्तिभेदा गृह्यन्ते । "अनेकस्यापि" (१-२६) इति वच-

---

[1] आपद्यते. [2] स. ३-४-४. [3] स. ६-४-७.
[4] स. १-६-४. [5] प्रत्यासन्नमेवानपेक्ष्य, प्रत्यासन्नमेवापेक्ष्य.
[6] सं. ३-४-८. [7] स. ५-२-३. [8] सं. १-५-९.
[9] सं. ३-६-७. [10] सं. २-४-१.

## अन्तस्थापरश्च सवर्णमनुनासिकम् ॥

चकारो मकारमन्वादिशति । 'अन्तस्थापरः' मकारस्तस्या अन्तस्थायाः 'सवर्णं' सदृशं, 'अनुनासिकम्' अनुनासिकधर्मविशिष्टं भजते । यथा—'सँय्यत्ता आसन्[1]' । 'सुव र्गँल्लोकम्'[2] 'सँव्वथ्सरः'[1] । नन्वनुनासिकमित्यनेन सानुनासिकं कथमुपलभ्यते[3] ? उच्यते नितरां परिहारः—यतो धर्मवाचकः शब्दो धर्मिणमपि कथयति 'शुक्लः पटः । नीलमुत्पलम्'इत्यादि[4] ॥ २८ ॥

चशब्दो मकारमन्वादिशति । सोऽन्तस्थासु पदादिषु परतस्तासां सवर्णमनुनासिकमादेशमश्नुते । अत्र पारिभाषिकसवर्णासम्भवाल्लौकिकं सवर्णमाश्रित्य तां तामन्तस्थां अनुनासिकमश्नुत इति विवेक्षयम । 'सँय्यत्ताः[1]' । 'सुवर्गँल्लोकम्[2]' । 'प्रजवँव्वै' ।[5] पदसंहिताऽधिकारात् 'भूम्या वृत्वाय नो ब्रूहि'[6] इत्यादौ न भवति ॥ २८ ॥

---

## न रेफपरः ॥ २९ ॥

अन्तस्थात्वाद्रेफस्य तत्परस्यापि मकारस्य तत्सवर्णानुनासिकापत्तिः प्राप्ता अनेन प्रतिषिद्ध्यते । 'न' खलु मकारो 'रेफ-

---

[1] स. १-५-१. [2] स. १-५-४. [3] कथमुपलभामहे.
[4] इत्यादिवत्. [5] सं. ७-३-१. [6] स. ४-२-२.

परः[1] पूर्वोक्तं भजते । यथा—'प्रसम्राजम्[1]' । 'साम्राज्याय सुक्रतुः[2]' । रेफः परो यस्मादसौ रेफपरः ॥ १९ ॥

रेफे परतः मकारोऽनुनासिकरेफं नाश्नुते । 'त्वं राज-ब्रह्मासि[3]' । 'सम्राजोरच आ वृणे[3]' ॥ २९ ॥

---

## यवकारपरश्चैकेषामाचार्याणाम् ॥ ३० ॥

चकारो निषेधान्वादेशकः[4] । प्रकृतो मकारः 'एकेषामाचार्याणां' पक्षे यकारपरः वकारपरो वा न सवर्णमनुनासिकं भजते यथा—'संयत्ताः[5]' । 'संवत्सरः[5]' ॥ ३० ॥

चशब्दो निषेधमन्वादिशति । यश्च वकारश्च यवकारौ । केषां चिदाचार्याणां मते यवकारपरो मकारः परसवर्णमनुनासिकं नाश्नुते । पूर्वतरसूत्रोक्तमेवोदाहरणम् ॥ ३० ॥

---

## उत्तमलभावात्पूर्वोऽनुनासिक इत्यात्रेयः ॥

उत्तमस्य नकारस्य मकारस्य वा 'लभावात्' लकारापत्तेः, पूर्वस्वरः 'अनुनासिकः' भवतीति आत्रेयो नाम मुनिः मन्यते । यथा—'त्रीँल्लोकान्[6]' । 'सुवर्गँल्लोकम्[7]' । उत्तमयोर्लभावः उत्तमलभावः, तस्मात् । सूत्रद्वयमेतदनिष्टम् ॥ ३१ ॥

---

[1] सं. १-६-१२. [2] सं. १-८-१६. [3] सं. २-५-१२.
[4] निषेधाकर्षकः. [5] सं. १-५-१. [6] सं. १-७-११.
[7] ,, १-५-४.

योऽयमुत्तमसंज्ञयोर्नकारमकारयोर्लभाव उक्तः "नकारोऽनुनासिकम्" (५–२६) "अन्तस्थापरश्च सवर्णमनुनासिकम्" (५–२८) इति स लकारोऽनुनासिको न भवति । किन्तु ततः पूर्वस्वरोऽनुनासिकमित्यात्रेयो मन्यते । 'त्रीँल्लोकानुदजयत'[1] । 'तँल्लोकंपृणयोपैत'[2] । नेदं सूत्रद्वयमिष्टम् ॥ ३१ ॥

---

## ङपूर्वः ककारस्सपकारपरः ॥ ३२ ॥

'सकारपरः' 'षकारपरः' वा 'ककारः' आगमो भवति, 'ङकारपूर्वः'[3] । यथा—'प्रत्यङ्क्ख् सोमो अतिद्रुतः'[4] । 'प्रत्यङ्क्ष् षडहः'[5] । एवम्पर इति किं? 'प्रत्यङ् होतारम्'[6] । एवम्पूर्व इति किम्? 'तथ्सवितुः'[7] । 'यथ्षोडशी गृह्यते'[8–9] ॥

ङकारात्परः ककार आगमो भवति सकारषकारयोः पदाद्योः परतः । 'सद्ङ्क्ष्मानैः'[10] । 'प्रत्यङ्क्ष्षडहः'[5] । सपकारपर इति किम्? 'पराङ् चाव यक्ष प्याति'[11] ॥ ३२ ॥

---

## टनकारपूर्वश्च तकारः ॥ ३३ ॥

नकारः सषकारावन्वादिशति । टकारपूर्वः वा नकारपूर्वः वा तकारः आगमो भवति, सषकारपरः । यथा—'वषट्त्स्वाहा'[12] ।

---

[1] ग्. १-७-१.१. [2] सं. ५-७-५. [3] ङपूर्वः. [4] सं. १-८-२१.
[5] सं. ७-८-२. [6] ,, ६-३-१. [7] ,, १-५-६. [8] सं. ६-६-११.
[9] 'तथ्षोडशिनमात्'. (६-६-११) [10] ,, २-२-८. [11] ,, १-७-६
[12] ,, ७-३-१२.

'विद्वान्थ् सोमेन यजते'[1] । "अनूयाजो पट्थ् पडनूयाजावनूयाजो पट्"[2] । एवम्पर इति किं? 'पड्वा . ऋतवः'[3] । 'तान्रुद्रा अब्रुवन्'[3] ॥ ३३ ॥

चशब्देन सपकारपर इत्यन्वादिश्यते । ङनकारयोः पदान्तयोः पूर्वयोः सतोः सकारपकाराभ्यां पूर्वस्तकार आगमो भवति । 'पड्थ्सम्पद्यन्ते'[2] । 'पितरं च प्रयन्थ्सुवः'[4] । पकारोदाहरणं शाखान्तरे । एतत्पूर्व इति किम्? "तथ्सवितुः"[5,6] । "तथ्योडशी" ।[7] ननु शकाराद्यागमसन्निधिमतीत्य किमर्थमेतावागमाविह पृथगुच्येते? श्रूयताम्—अभक्ताश्शकाराद्यागमास्ते । एतौ तु यथाक्रमं पूर्वोत्तराङ्गभूताविति ख्यापनार्थम् । तथा मूलशास्त्रे 'ङ्णोः कुक् टुक् शरि'[8] इति ककारः कित्कृतः । धकारस्तु[9] "डःसि धुट्"[8] "नश्च"[8] इति टित्कृतः ॥ ३३ ॥



## स्पर्शपूर्वश्शकारश्छकारम् ॥ ३४ ॥

शकारश्छकारं आपद्यते स्पर्शपूर्वः । यथा—'शरच्छ्रौत्री'[10] । एवम्पूर्व इति किं? 'आशुश्शिशानः'[11] । स्पर्शः पूर्वः यस्मादसौ स्पर्शपूर्वः ॥ ३४ ॥

---

[1] स. ३-२-२. [2] स. ६-६-३. [3] स. ५-५-२.
[4] ,, १-८-३. [5] स. १-५-३. [6] "पञ्चमी संवत्सरस्य षष्ठी" (तै. सं. ५-७-२१.) इति पाठान्तरम् [7] स. ६-६-११.
[8] पा. ८-३-२८, २९, ३०. [9] धकारस्तु.
[10] स. ४-३-२. [11] ,, ४-६-४.

स्पर्शे पदान्ते पूर्वे शकारः छकारमश्नुते। 'यच्छ्यामाकः'[1]। "अनुष्टुप्छारदी"[2]। स्पर्शपूर्वे इति किम्? 'सुश्लोकाश्म्'[3]। "पुरा क्रूरस्य विसृपो विरप्शिन्"[4] इत्यत्र तु न भवति अपदान्तत्वात् ॥ ३४ ॥



## न मकारपूर्वः ॥ ३५ ॥

'मकारपूर्वः' शकारश्छकारं नापद्यते। यथा—"सꣳशितं मे ब्रह्म"[5]। "सꣳश्रवा ह"[6]। स्पर्शत्वान्मकारस्य तत्पूर्वे शकारे प्राप्तं छत्वमनेन निषिध्यते। नन्वेतदनुपपन्नम्; 'रेफोष्मपरः' (१३–२) इति मकारस्य लोपविधानाच्च शकारस्य छत्वापत्तिनिमित्तमस्तीति। मैवम्। छत्वापादकमलोपसूत्रयोश्छत्वापादकस्यैव पूर्वत्वात् 'तत्र पूर्वम्' (९–३) इति न्यायेन छत्वमेव कर्तव्यं स्यात। तथा सति 'मकारः स्पर्शपरस्तस्य' (५—२७) इति मकारे ञत्वमापन्ने 'सञ्छितं मे ब्रह्म'[5] इति स्यात्। तन्मा भूदित्येतत्सूत्रमुपपन्नमेव ॥ ३५ ॥

मकारे पूर्वे शकारश्छकारं नाश्नुते। 'सꣳशिशाधि'[7] ॥



[1] सं. २-३-३. [2] सं. ४-३-२. [3] सं. १-८-१६.
[4] ,, १-१-९. [5] ,, ४-१-१०. [6] ,, १-७-२.
[7] ,, ४-१-७.

## पकारपूर्वश्च वाल्मीकेः ॥ ३६ ॥

चकारः प्रतिषेधाकर्षकः । 'वाल्मीकेः' मते 'पकारपूर्वः' शकारश्छत्वं नापद्यते । यथा—'अनुष्टुफ्शारदी'[1] ॥ ३६ ॥

चशब्दो नेत्यन्वादिशति । पकारे पदान्ते पूर्वे शकारः छकारं नाश्नुते वाल्मीकेर्मतात् । "अनुष्टुफ्शारदी"[1] । अत्र पकारस्य द्वितीयादेशः ॥ ३६ ॥

---

## व्यञ्जनपरः पौष्करसादेर्न पूर्वश्च ञकारम् ॥ ३७ ॥

'पौष्करसादेः' मते 'व्यञ्जनपरः' शकारः स्पर्शपूर्वोऽपि छत्वं नापद्यते । शकारात् 'पूर्वः' नकारश्च 'ञकारं' न आपद्यते । यथा—'आदित्यान् श्मश्रुभिः'[2] । 'पापीयान् श्रेयसे'[3] पूर्व इत्युक्ते नकार इति कथं लभ्यते? ञकारापत्तिरस्यैवेति ब्रूमः । प्रसक्तस्यैव हि प्रतिषेधः । व्यञ्जनं यस्मात् परमिति व्यञ्जनपरः । नैतत् सूत्रद्वयमिष्टम् ॥ ३७ ॥

व्यञ्जनपरः शकारः छकारं नाश्नुते पौष्करसादेर्मतात् । शकारात्पूर्वश्च वर्णो ञकारं नाश्नुते । अत्र शकारे परतो नकारस्यैव ञत्वविधानान्नकारपूर्वकशकारविषयकमिदं सूत्रम् । 'पुरीषमिष्टका उपधास्यन् श्वेतमश्वमभिमृशेत'[4] । नेदं सूत्रद्वयमिष्टम् ॥

---

[1] स. ४-३-२. [2] स. ५-७-१२. [3] स. १-५-७.
[4] सं. ५-७-१.

## प्रथमपूर्वो हकारश्चतुर्थं तस्य सस्थानं प्लाक्षिकौण्डिन्यगौतमपौष्करसादीनाम् ॥

प्लाक्षिप्रभृतीनां मते 'प्रथमपूर्वो हकारः' 'तस्य' प्रथमस्य 'सस्थानं' 'चतुर्थं' भजते। यथा—'अर्वाग्घ्येनम्'[1]। 'सरद्घ वा अश्वस्य'[2]। 'तद्धिरण्यम्'[3]। एवम्पूर्व इति किं? 'प्रत्यङ् होतारम्'[4]। हकार इति किं? 'वाक्त आ प्यायताम्'[5] 'वषट्ते'[6] 'तत्ते'[5]। प्रथमः पूर्वो यस्मादसौ प्रथमपूर्वः ॥ ३८ ॥

प्रथमे पदान्ते पूर्वे हकारस्तस्य प्रथमस्य समानस्थानं चतुर्थमादेशमश्नुते। 'अर्वाग्घ्येनम्'[1]। 'सरद्घ वै'[3]। 'इन्द्रमिद्धरी'[7]। प्रथमपूर्व इति किम्? 'रुद्रस्य हेतिः'[8]। 'एतान् होमान्'[9]। प्लाक्ष्यादिग्रहणं तेषां पूजार्थम्। न स्वमतपर्युदासार्थम् ॥ ३८ ॥



## अविकृत एकेषाम् ॥ ३९ ॥

'एकेषां' मते प्रथमपूर्वो हकारः 'अविकृतः' भवति। यथा—अर्वाग् ह्येनम्'[1] ॥ ३९ ॥

एकेषां मते प्रथमपूर्वो हकारो न विक्रियते। प्रथमस्य तु वक्ष्यमाणविधिना तृतीयादेशः पूर्ववद्भवत्येव। 'अर्वाग्ह्येनम्'[1]। 'सरद्वै'[2]। 'इन्द्री वहतः'[7] ॥ ३९ ॥

---

[1] स. ६-३-३. [2] स. ५-३-१२. [3] स. ५-४-२.
[4] स. ६-३-१. [5] स. १-३-९. [6] सं. २-२-१२.
[7] सं. १-४-३८. [8] सं. ३-१-१. [9] स. ३-५-४.

## चतुर्थोऽन्तरे शैत्यायनादीनाम् ॥ ४० ॥

'शैत्यायनादीनां' मते हकारप्रथमयोः 'अन्तरे' मध्ये, प्रथमसस्थानः 'चतुर्थः' आगमो भवति। यथा—'अर्वाग्घ्येनं परैः'[1]. आदिशब्देन कौहलीपुत्रभरद्वाजस्थविरकौण्डिन्यपौष्करसादयो गृह्यन्ते॥

शैत्यायनादीनां मते अन्तरे प्रथमहकारयोर्मध्ये चतुर्थ आगमो भवति। अत्रापि प्रथमस्य तृतीयादेशो भवत्येव। "अर्वाग्घ्येनम्"[1] ॥ ४० ॥

—o—

## मीमांसकानां च मीमांसकानां च ॥

चकारः पूर्वोक्तविधिमन्वादिशति। 'मीमांसकानां' चान्तरागममतं[2] सम्मतम्। पूर्वमेवोक्तमुदाहरणम्। मीमांसकानां पूजार्थं पृथक् सूत्रारम्भः। नैतत् सूत्रत्रयमिष्टम् ॥ ४१ ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे पञ्चमोऽध्यायः.

चशब्दोऽनन्तरोक्तं चतुर्थमागममन्वादिशति। मीमांसकाः केचिदृषयस्तेषामपि मताच्चतुर्थागमो भवति। नेदं सूत्रत्रयमिष्टम् ॥ ४१ ॥

इत्याचार्यगार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये प्रातिशाख्यव्याख्याने पञ्चमोऽध्यायः.

[1] सं. ६-२-२. [2] अनन्तरोदितं. चातीतम्, चानन्तरातीतम्. इति च पाठः.

सोम आह'[1] । 'ऊषुण ऊतये'[2] । 'मोषूण इन्द्र'[3] । 'प्रोष्वस्मै'[4] 'त्रीषधस्था'[5] । 'महिषद्द्युम्नतमः'[6] । 'य उप द्यविष्ठ'[7] । 'पद्दिषिताम्'[8] 'शुचिषद्वसुः'[9] । 'अया विष्ठा जनयन्'[10] । 'गोष्टोमं द्वितीयम्'[11] अवग्रहः पूर्वो यस्मादसौ अवग्रहपूर्वः ॥ २ ॥

अत्र पूर्वपदनिमित्तं षत्वमुच्यमानं पदान्तनियतस्य[12] विसर्जनीयस्याभावात्सकारस्यैव भवति । तदयमर्थः—स्वानासो दिवि। आपो हि । अयमु । कमु । ऊ । मो । प्रो । त्री । महि। द्यवि । पदि । अवग्रहे[13] । स्वानासो दिवीत्यादिषु अवग्रहे च पूर्वेषु[14] सकारः षकारं विकारमेति । 'उत स्वानासो दिविषन्त्वग्नेः'[15] । स्वानास इति किम्? 'तृतीयस्यामितो दिवि सोम आसीत्'[16] । 'आपो हिष्ठा मयोभुवः'[17] । आप इति किम्? 'वशा हि सूनो अस्यद्मसद्वा चक्रे'[18] । 'अयमुष्य प्र देवयुः'[19] । 'कमुष्विदस्य सेनया'[20] । 'समत ऊषु मधु मधुनाऽभि योधि'[21] । अयम कम् इत्युपबन्धाभ्यां दीर्घेण च किम्? 'तदु सोम आह'[1] । 'मोषूणः'[3] । 'प्रोष्वस्मै'[4] । 'त्रीषधस्था'[5] । 'महिषद्द्युमन्तमः'[6] । 'य उप द्यविष्ठ'[7] । 'पद्दिषितामनुञ्चत'[8] । अवग्रहपूर्वः । 'सुषदा योनिꣳ स्वाहा'[22] । 'मध्यतोऽनुष्टुभा'[23] ॥ २ ॥

—o—

[1] स. ४-२-८. [2] सं. ४-१-४. [3] स. १-८-३. [4] सं. १-७-१३.
[5] ,, २-४-११. [6] ,, ३-२-८. [7] ,, २-४-१४. [8] सं. ४-७-१२.
[9] स. १-८-१५. [10] स. १-७-१२. [11] स. ७-४-११. [12] अपदान्तस्य.
[13] स्वानास इत्यादीनि पदानि केषु चित्कोशेषूदाहरणेभ्यः पूर्वं प्रत्येक क्रमशो लिखितानि. [14] पूर्वे. [15] स. १-२-१४ [16] सं. ३-६-७.
[17] स. ४-१-६. [18] सं. १-३-१४. [19] सं. ३-६-११. [20] सं. ३-६-११.
[21] ,, ३-५-१०. [22] ,, १-१-१३. [23] ,, ५-१-३.

## असदामासिश्चञ्श्च ॥ ३ ॥

असदाम, असिश्चन् इत्येतयोः सकारः षकारमापद्यते । यथा—'येन कामेन न्यषदामेति'[1] । 'मित्रावरुणावभ्यषिश्चन्'[2] । चकारोऽवग्रहपूर्वत्वान्वादेशकः । अन्वादेशेन किं? 'अजायां घर्मं प्रासिश्चन्'[3] । अवग्रहपूर्वत्वेऽप्यकारेण व्यवेत इत्ययमारम्भः । ननु, लाघवादकारव्यवेतोपीत्येतावतैवालम्, कण्ठोक्त्या किं? उच्यते—'ह्रस्वसो मयाभून्'[4] इत्यादौ मा भूदिति ॥ ३ ॥

चशब्देनावग्रहपूर्वं इत्यन्वादिश्यते । अनन्तरार्थं त्विदं वचनम् । अवग्रहे पूर्वे 'असदाम' 'असिश्चन्' इत्यनयोः सकारः षकारं विकारमेति । 'न्यषदामेति तासाम्'[1] । 'मित्रावरुणावभ्यषिश्चन्'[2] । अन्वादेशेन किम्? 'अजायां घर्मं प्रासिश्चन्'[3] ॥३

---

## उपसर्गनिष्पूर्वोऽनुदात्ते पदे ॥ ४ ॥

सर्वानुदात्ते 'पदे' वर्तमानः सकारः उपसर्गपूर्वो निष्पूर्वो वा षत्वमापद्यते । यथा—'अश्मन्नूर्जमिति परिषिञ्चति'[5] । 'इमं विष्यामि'[6] । 'साम्राज्येनाभिषिञ्चामि'[7] । 'यजमाने प्रतिष्ठापयन्ति'[8]। 'निषसाद धृतव्रतः'[9] । एतान्युपसर्गपूर्वाणि । निष्पूर्वमपि यथा—

---

[1] स. ७-५-२. [2] स. १-८-११. [3] स. ५-४-३.
[4] स. ६-२-११. [5] सं. ५-४-४. [6] स. ३-१-१०.
[7] स. १-७-१०. [8] सं. ६-१-४. [9] स. १-८-१६.

'निष्टनिंहि दुरिता'[1] । एवम्पूर्व इति किं? 'सदने सीद'[2]। 'बृहतश्शर्मणि स्याम्'[3] । सर्वानुदात्त इति किं? 'वि सीमतः'[4] । 'अभि सवना पाहि'[5] । पद इति किं? कालार्थम् । पदकाले अनुदात्त इत्यर्थः ॥ ४ ॥

उपसर्गेषु निश्शब्दे च पूर्वे सर्वानुदात्तपदस्थः सकारः षकारं विकारमेति । अनवग्रहपूर्वार्थं वचनम् । 'अभिष्याम पृत्सुतीः'[6] । 'प्रतिष्टोभन्ति'[7] । 'निष्टनिंहि'[1] । एवंपूर्व इति किम्? 'किंस्विदासीत्'[8] । अनुदात्त इति किम्? 'प्रति स्तोमꣳ शस्यमानं गृभाय'[9] । पद इति किम्? अनुदात्तपर[10]मात्रेण माभूत् । 'वि सीमतस्सुरुचः'[4] ॥ ४ ॥

——o——

## रासस्सतेऽग्निर्निर्विदुर्मीढुःपायुभिर्वेस्सुमतिर्माकिरीयुरायुराभिस्सधिर्नकिस्तकारपरो नित्यम् ॥ ५ ॥

रासः सते इत्येताभ्यां विशिष्टे अग्निरित्यस्मिन् ग्रहणे निः विदुः मीढुः पायुभिः वेः सुमतिः माकिः ईयुः आयुः आभिः सधिः नकिः इत्येतेषु च[11] विसर्जनीयः 'तकारपरः' षकारं

---

[1] सं. ४-६-६.    [2] सं. ४-३-१.    [3] सं. ४-१-५.
[4] ,, ४-२-८.    [5] ,, १-४-१०.    [6] ,, १-४-४६.
[7] ,, २-२-१२.    [8] ,, ७-४-१८.    [9] ,, १-२-१४.
[10] अनुदात्तपरत्व.    [11] परेषु च.

'नित्यं' आपद्यते । यथा—'अविदुष्टरासः । अग्निष्टत्'[1] । 'मेध्यश्च सप्ते । अग्निष्ठा'[2] । एताभ्यां विशिष्ट इति किं ? 'नाकेऽग्निस्ते तनुवम्'[3] । 'निष्टपामि गोष्ठम्'[4] । 'विदुष्टरꣳ सपेम'[5] । 'अप्यकारादि' (१–५२) इतिवचनात् 'अविद्दुष्टरासः' इत्यप्युदाहरणम्[6] । 'मीढुष्टम शिवतम'[7] । 'पायुभिष्ट्वꣳ शिवेभिः'[8] । पायुरिति किं ? 'त्रिभिरितिष्ठꣳ स्तिष्ठति'[9] । 'शोचे वेष्टꣳ हि यज्वा'[10] । 'सुमतिष्टे अस्तु'[11] । स्विति किं ? 'प्रमतिस्ते देवानाम्' इति शाखान्तरे । 'माकिष्टे व्यथिरा दधर्षीत्'[12] । 'ईयुष्टे ये पूर्वतराम्'[13] । 'आयुष्ट आयुर्दाः'[14] । 'आभिष्टे अद्य'[15] । 'अप्स्वग्ने सधिष्टव'[16] । 'नकिष्टं घ्नन्ति'[17] । नित्यशब्दः किमर्थः ? 'ऋकाररेफवति' 'अवग्रहः' (६–८,९) इति प्रतिषेधं वक्ष्यति । 'अविदुः' इत्यत्र विसर्जनीयस्यावग्रहस्थत्वात् षत्वं न स्यात्तन्मा भूदिति, कण्ठोक्तिरपि विदुरित्यस्यैव न त्वविदुरित्यस्येति दौर्बल्यात् तत्सङ्ग्रहणार्थो[18] नित्यशब्द उपयुज्यते[19] । 'अघोषपरस्तस्य सस्थानम्' (९–२) इत्यस्य पुरस्तादपवादोऽयम्[20] ॥ ९ ॥

---

[1] सं. १-१-१४. [2] सं. ५-१-११. [3] सं. १-१-८.
[4] „ १-१-१०. [5] „ २-६-१२. [6] इत्येतदप्युदाहरणम्.
[7] सं. ४-६-१०. [8] „ १-४-२४. [9] „ ६-४-१२.
[10] सं. ४-३-१३. [11] सं. १-४-४६. [12] सं. १-२-१४.
[13] सं. १-४-३३. [14] „ २-५-१२. [15] सं. ४-४-४.
[16] सं. ४-२-३. [17] सं. २-१-११. [18] तत्संरक्षणार्थो.
[19] प्रयुज्यते. [20] 'अघोषपरस्तस्य सस्थानम्' इत्यनेन तकारपूर्वत्वेन सत्वे प्राप्ते अनेन षत्वविधानार्थं पुरस्तादपवादोऽयम्.

अथ विसर्जनीयस्योच्यते—

रासस्सतेऽग्निरित्यादिषु सकारस्य तकारपरत्वा*भावात्तत्रत्यो विसर्जनीयः षकारं विकारमेति तकारे परतो नित्यमिति विज्ञायते । रासः सत इत्याभ्यां[1] परे अग्निरित्यत्र । "अविदुष्टरासः। अग्निष्टद्विश्वम्"[2] । "मेध्यश्च सते । अग्निष्टु देवैः"[3] । उपबन्धाभ्यां किम् ? 'नाकेऽग्निस्ते तनुवम्'[4] । 'निष्टपामि'[5] । 'विदुष्टरꣳ सपेम'[6] । 'मीढुष्टम शिवतम'[7] । 'पायुभिष्टुꣳ शिवेभिः'[8] । पाय्विति किम् ? 'त्रिभिस्तिष्ठꣳ स्तिष्ठति'[9] । 'शोचे वेष्टुꣳ हि यज्वा'[10] । 'सुमतिष्टे अस्तु'[11] । स्वित्युपबन्धव्यावर्त्यं शाखान्तरे[12] । 'माकिष्टे व्यथिरा'[13] । 'ईयुष्टे ये पूर्वतराम्'[14] । 'आयुष्टे विश्वतो दधत्'[15] । 'आभिष्टे अद्य गीर्भिः'[16] । 'अप्स्वग्ने सधिष्टव'[17] । 'नकिष्टं घ्नन्त्यन्तितो न दूरात्'[18] । सोऽयं "अघोषपरस्तस्य सस्थानमूष्माणम्" (९-२) इत्यस्यापवादः । नित्यग्रहणं बाधकबाधनार्थम् । तेन विदुर्मीढुरित्यनयोः "अवग्रहः" (६-९) इति निषेधो न भवति । नैतदस्ति प्रयोजनम् । विदुर्मीढुर्ग्रहणस्य विशिष्टविषयतयैव सामान्यविषयत्व[19]बाधसिद्धेः । एवं तर्हि "विदुषां देवा अविदुष्टरासः"[2] इत्यत्र "अप्यकारादि" (१-५२)

*परस्या. 1 इत्याभ्यामुपबन्धाभ्यां. 2 सं. १-१-१४.
3 सं. ६-१-११. 4 स. १-१-८. 5 सं. १-१-१०.
6 सं. २-६-१२. 7 ,, ४-५-१०. 8 स. १-४-२४.
9 ,, ५-४-१२. 10 ,, ४-३-१३ 11 ,, १-४-४५.
12 "प्रमतिस्ते देवानाम्" इति पाठान्तरम्. 13 ,, १-२-१४.
14 ,, १-४-३३. 15 ,, १-३-१४. 16 स. ४-४-४.
17 ,, ४-२-३. 18 ,, २-१-११. 19 विषयस्य.

इति सर्वकार्यसाधारणो विधिः "अवग्रहः" (६-९) इति पत्वनिषेधेन बाध्येत । तन्मा भूदित्येवमर्थं नित्यग्रहणं कृतम् ॥ ५ ॥

---

## अथ न ॥ ६ ॥

'अथ' इत्ययमधिकारः । 'न' इत्येतदधिकृतं वेदितव्यम्, इत उत्तरं यद्वक्ष्यामः ॥ ६ ॥

पत्व[1]निषेधोऽधिक्रियते ॥ ६ ॥

---

## अवर्णव्यञ्जनशकुनिपत्न्यृतुमृत्युमलिम्लुबृहस्पतिपूर्वः ॥ ७ ॥

अवर्णपूर्वो व्यञ्जनपूर्वश्च शकुनि पत्नी ऋतु मृत्यु मलिम्लु बृहस्पति इत्येवम्पूर्वश्च सकारः षकारं नापद्यते । यथा— 'अन्तरिक्षसत्'[2] । अवग्रहपूर्वत्वात् प्राप्तिः । 'आ सिञ्चस्व'[3] । उपसर्गपूर्वत्वात् प्राप्तिः । 'ऋक्सामे वै'[4] । 'शकुनिसादेन रथम्'[5] । 'पत्नीसंयाजानामृचा'[6] । 'ऋतुस्थास्तस्य'[7] । 'मृत्युसंयुत इव'[8] । 'नैनं मलिम्लुसेना विन्दति'[9] । 'बृहस्पतिसुतस्य ते'[10] । अवग्रहपूर्वत्वादिषां प्राप्तिः ॥ ७ ॥

---

[1] अनेन पत्व. [2] सं. १-८-१५. [3] सं. १-४-१९,
[4] सं. ६-१-३. [5] ,, ६-७-१४. [6] सं. २-६-१०.
[7] ,, ५-७-६. [8] ,, १-५-९. [9] ,, ६-३-२.
[10] ,, १-४-२७.

अवर्णपूर्वो व्यञ्जनपूर्वः । शकुनि । पत्नी । ऋतु । मृत्यु । मलिम्लु । बृहस्पति[1] । शकुन्यादिपदपूर्वश्च सकारः षकारं विकारं नेति । 'वाजिनं त्वा सपत्नसाहꣳ सं मार्ज्मि'[2] । 'बर्हिरासदे'[3] । अवग्रहपूर्वतया प्राप्तिः । 'देव सवितः प्र सुव'[4] । 'स्योनामा सीद'[5] । उपसर्गपूर्वकतया प्राप्तिः । 'दीर्घामनु प्रसितिमायुषे धाम्'[6] । 'तꣳ शृतमासघ्नमेतेन'[7] । उभयथा प्राप्तिः । 'ऋक्सामयोश्शिल्पे स्थः'[8] । 'पयो अग्नियासु हरसु क्रतुम्'[9] । 'सꣳ सामिद्युवसे वृषन्'[10] । यत्तु 'धूर्षाहावनश्रू'[11] । 'सुवर्षा जिह्वाग्रे'[12] । 'निष्टनिहि दुरिता बाधमानः'[13] । इत्येतेषां षत्वं तदनेन न निषिध्यते विशेषविहितत्वान्निरवकाशत्वाच्च । 'शकुनिसादेन रथम्'[14] । 'आज्येन पत्नीसंयाजा ऋचम्'[15] । 'यो वा अग्निमृतुस्थां वेद'[16] । 'मृत्युसंयुत इव ह्ययम्'[17] । 'नैनं मलिम्लुसेना'[18] 'बृहस्पतिसुतस्य'[19—20] । एतेष्ववग्रहपूर्वत्वात्प्राप्तिः ॥ ७ ॥

---

## ऋकाररेफवति ॥ ८ ॥

ऋकारश्च रेफश्च ऋकाररेफौ, तावस्मिन् स्त इति ऋकाररेफवत् तस्मिन् पदे वर्तमानः सकारः षकारं नापद्यते । यथा–

---

[1] शकुन्यादि बृहस्पत्यन्तं क्वचिन्न दृश्यते. [2] सं. १-१-१०.
[3] सं. १-१-२. [4] सं. १-७-७. [5] सं. १-८-१६.
[6] स. १-१-६. [7] सं. २-४-३. [8] सं. १-२-२.
[9] ,, १-२-८. [10] ,, २-६-११. [11] ,, १-२-८.
[12] ,, ४-४-४. [13] ,, ४-६-६. [14] सं. ५-७-१४.
[15] सं. २-६-१०. [16] स. ५-७-६. [17] १-५-९.
[18] सं. ६-३-२. [19] सं. १-४-२७.
[20] केषु चित्कोशेषूदाहरणेभ्यः पूर्वं अवर्णादित्तन्निमित्तपदानि लिखितानि.

'वि मृजते शान्त्यै'[1] । उपसर्गपूर्वत्वात् प्राप्तिः । 'तस्मात्स विस्तस्यः'[2] अवग्रहपूर्वत्वात् प्राप्तिः ॥ ८ ॥

ऋकारो रेफो वा यस्मिन् अस्ति तस्मिन्पदे सकारः षकारं विकारं नैति । 'सुसम्भृता त्वा सं भरामि'[3] । 'वाचो विसर्जनं देववीतये'[4] । 'असंदितो वि सृज'[5] । 'न विस्रंसयेत्'[2] ॥ ८ ॥

---

## अवग्रहः ॥ ९ ॥

अवग्रहस्थः सकारः षकारं नापद्यते, विसर्जनीयश्च । अवग्रह इत्यवग्रहस्थो लक्ष्यते । मञ्चाः क्रोशन्तीत्यत्र मञ्चस्था यथा । यथा च स्थूलो जानातीति स्थूलदेहस्थः । उदाहरणानि—'तस्यां देवा अधि संवसन्तः'[6] । 'अभि समगच्छन्तेति'[7] । 'यज्ञानामभि संविदाने'[8] ॥ ९ ॥

अवग्रहस्थः सकारः षकारं विकारं नैति । एतदादेस्सकारस्य तदन्तस्य विसर्जनीयस्य च षत्वप्रतिषेधः क्रियते । विसर्जनीये त्वयं विशेषविधिना नित्यग्रहणेन च निवर्तितः सकारेऽर्थवान् भवति । 'प्रति स्विष्टकृतं निराह'[9] । 'यज्ञानामभि संविदाने'[8] ॥ ९ ॥

---

1 सं. १-७-६. 2 सं. ६-२-६. 3 सं. १-१-२.
4 सं. १-३-५. 5 सं. १-२-१४. 6 सं. ३-५-२.
7 सं. ३-५-१. 8 सं. ६-१-११. 9 सं. १-५-२.

## सवस्थानम् ॥ १० ॥

'सव' 'स्थानं' इत्येतयोः सकारः षकारं नापद्यते। सवेति पदैकदेशो बहूपादानार्थः। यथा—'अग्निसर्वाश्रित्यः'[1]। 'अनुसवनं पुरोडाशान्'[2]। 'सवनेसवनेऽभि गृह्णाति'[3]। 'प्रसवाय सावित्रः'[4]। 'गच्छ गोस्थानम्'[5] ॥ १० ॥

सवेति पदैकदेशग्रहणम्। स्थानमिति पदग्रहणम्। तयोः सकारः षकारं विकारं नैति। 'अनुसवनं पुरोडाशान्'[2]। 'तस्मान्मनुसवः'[6]। 'गच्छ गोस्थानम्'[5] ॥ १० ॥

---

## न धिपूर्वे ॥ ११ ॥

सवः स्थानमित्येतयोः सकारे धिपूर्वे[7] निषेधः न प्रसरति। यथा—'अधिषवणमसि'[8]। 'अधिषवणे जिह्वा'[9]। 'अधिष्ठानमारम्भणम्'[10]। धीत्ययं वर्णः पूर्वो यस्मादसौ धिपूर्वः, तस्मिन् ॥ ११ ॥

धिशब्दे पूर्वे सवस्थानमित्येते षत्वप्रतिषेधं न प्रतिपद्येते। 'अधिषवणमसि'[8]। 'अधिष्ठानमारम्भणम्'[10] ॥ ११ ॥

---

[1] सं. ६-६-२.
[2] सं. ६-६-११.
[3] सं. ६-४-११.
[4] सं. ६-६-५.
[5] सं. १-१-९.
[6] सं ७-५-१६.
[7] धिपूर्व.
[8] सं. १-१-५.
[9] सं. ६-२-११.
[10] सं. ४-६-२.

'वि मृजते शान्त्यै'[1] । उपसर्गपूर्वत्वात् प्राप्तिः । 'तस्मात्स विस्रस्यः'[2] अवग्रहपूर्वत्वात् प्राप्तिः ॥ ८ ॥

ऋकारो रेफो वा यस्मिन् अस्ति तस्मिन्पदे सकारः षकारं विकारं नैति । 'सुसम्भृता त्वा सं भरामि'[3] । 'वाचो विसर्जनं देववीतये'[4] । 'असंदितो वि सृज'[5] । 'न विस्रंस-सयेत्'[2] ॥ ८ ॥

---

## अवग्रहः ॥ ९ ॥

अवग्रहस्थः सकारः षकारं नापद्यते, विसर्जनीयश्च । अव-ग्रह इत्यवग्रहस्थो लक्ष्यते । मञ्चाः क्रोशन्तीत्यत्र मञ्चस्था यथा । यथा च स्थूलो जानातीति स्थूलदेहस्थः । उदाहरणानि—'तस्यां देवा अधि संवसन्तः'[6] । 'अभि समगच्छन्तेति'[7] । 'यज्ञानामभि संविदाने'[8] ॥ ९ ॥

अवग्रहस्थः सकारः षकारं विकारं नैति । एतदादेस्स-कारस्य तदन्तस्य विसर्जनीयस्य च षत्वप्रतिषेधः क्रियते । विसर्जनीये त्वयं विशेषविधिना नित्यग्रहणेन च निवर्तितः सकारेऽर्थवान् भवति । 'प्रति स्विष्टकृतं निराह'[9] । 'यज्ञानाम-भि संविदाने'[8] ॥ ९ ॥

---

[1] सं. १-७-६.　[2] सं. ६-२-९.　[3] सं. १-१-२.
[4] सं. १-१-५.　[5] सं. १-२-१४.　[6] सं. ३-५-१.
[7] सं. ३-५-१.　[8] सं. ६-१-११.　[9] सं. १-५-२.

## सवस्थानम् ॥ १० ॥

'सव' 'स्थानं' इत्येतयोः सकारः षकारं नापद्यते। सवेति पदैकदेशो बहूपादानार्थः। यथा—'अग्निसवश्रित्यः'[1]। 'अनुसवनं पुरोडाशान्'[2]। 'सवनेसवनेऽभि गृह्णाति'[3]। 'प्रसवाय सावित्रः'[4]। 'गच्छ गोस्थानम्'[5] ॥ १० ॥

सवेति पदैकदेशग्रहणम्। स्थानमिति पदग्रहणम्। तयोः सकारः षकारं विकारं नैति। 'अनुसवनं पुरोडाशान्'[2]। 'तस्मान्मनुसवः'[6]। 'गच्छ गोस्थानम्'[5] ॥ १० ॥

---

## न धिपूर्वे ॥ ११ ॥

सवः स्थानमित्येतयोः सकारे धिपूर्वे[7] निषेधः न प्रसरति। यथा—'अधिषवणमसि'[8]। 'अधिषवणे जिह्वा'[9]। 'अधिष्ठानमारम्भणम्'[10]। धीत्ययं वर्णः पूर्वो यस्मादसौ धिपूर्वः, तस्मिन् ॥ ११ ॥

धिशब्दे पूर्वे सवस्थानमित्येते षत्वप्रतिषेधं न प्रतिपद्येते। 'अधिषवणमसि'[8]। 'अधिष्ठानमारम्भणम्'[10] ॥ ११ ॥

---

[1] सं. ५-६-२.  [2] सं. ६-५-११.  [3] सं. ६-४-११.
[4] सं. ६-६-५.  [5] सं. १-१-९.  [6] सं. ७-५-२९.
[7] धिपूर्वे.  [8] सं. १-३-५.  [9] सं. ६-२-११.
[10] सं. ४-६-२.

**सन्तानेभ्यस्सप्ताभिस्सम्मिताꣳ स्तनाꣳ सी-
तꣳ स्पशास्सक्सनिसनिस्सनीस्सभेय-
स्सत्वासस्थायै ॥ १२ ॥**

सन्तानेभ्यः, सप्ताभिः, सम्मितां, स्तनां, सीतं, स्पशः, सक्तः सनि, सनिः, सनीः, सभेयः, सत्वा, सस्थायै एतेषु सकार, पकारं नापद्यते । यथा—'परिसन्तानेभ्यस्स्वाहा'[1] । 'त्रिसप्ताभिः पशुकामस्य'[2] । 'वेदिसम्मितां मिनोति'[3] । 'द्विस्तनां करोति'[4] । 'अनुसीतं वपति'[5] । 'तनूपा नः प्रतिस्पशः'[6] । सगिति पदैकदेशो बह्वपादानार्थः यथा—'पश्चात्पृश्निसक्थो भवति'[7] । 'पृश्निसक्थास्त्रयो हैमन्तिकाः'[8] । 'पृश्निसक्थमा लभेत'[9] ।'पृश्निसक्थाय स्वाहा'[10] । 'तस्मादेतन्नोसनि'[11] । 'असि स्तनयित्नुसनिरसि'[12] । 'वृष्टिसनीरुप दधाति'[13] । सनिरित्येतावतैव सिद्धे किमस्विल्पपदपाठेन ? 'मृधा वा एषोऽभिषण्णः'[14] । 'निषण्णाय स्वाहा'[15] इत्यादौ मा भूदिति । 'सुसभेयो य एवम्'[16] । 'अभिसत्वा सहोजाः'[17] । 'सुसस्थायै सुपिप्पलाभ्यस्त्वौ-

1 सं. ७-४-२१. 2 सं. ५-२-६. 3 सं. ५-६-८.
4 सं. ५-१-६. 5 सं. ६-२-६. 6 सं. ५-७-३.
7 सं. २-१-३. 8 सं. ५-६-२३. 9 सं. २-१-३.
10 सं. ७-३-१८. 11 सं. ७-५-२. 12 सं. ४-४-६.
13 सं. ६-३-१. 14 सं. २-४-२. 15 सं. ७-१-१९.
16 सं. ७-१-८. 17 सं. ४-६-४.

पधीभ्यः '[1] । सन्तानेभ्यः सत्वा इत्येतयोरुपसर्गपूर्वत्वात् प्राप्तिः । सर्वेषामन्येषामवग्रहपूर्वत्वात् ॥ १२ ॥

सन्तानेभ्य इत्यादीनि ग्रहणानि षकारं विकारं न यन्ति । 'परिसन्तानेभ्यस्स्वाहा '[2] । 'त्रिसप्ताभिः पशुकामस्य '[3] । 'वेदिसम्मितां मिनोति '[4] । 'द्विस्तनां करोति '[5] । 'प्रति तिष्ठन्त्यनुसीतं वपति '[6] । 'तनूपा नः प्रतिस्पशः '[7] । सक् इति पदैकदेशग्रहणम् । 'पृश्निसक्थमा लभेत '[8] । 'पृश्निसक्थास्त्रयः '[9] । 'तस्मादेतद्रोसनि '[10] । 'स्तनयित्नुसनिरसि '[11] । 'वृष्टिसनीरुप दधाति '[12] । सन् इति समानरूपग्रहणे 'मृधा वा एषोऽभिपन्नः '[13] इत्यादावपि प्रतिषेधः स्यादिति त्रयाणां ग्रहणम् । 'सुसभेयो य एवं विद्वांश्चतूरात्रेण '[14] । 'अभिसत्वा सहोजा जैत्रमिन्द्र '[15] । 'कृष्यै त्वा सुसस्यायै '[1] ॥ १२ ॥

---

## न स्वरस्पर्धास्तरीमसाहस्रसारथिस्स्फुरन्तीस्तुवृज्योतिरायुश्चतुःपूर्वस्स्तो॥१३॥

स्वर, स्पर्द्धाः, स्तरीम, साहस्र, सारथिः, स्फुरन्ती, स्तुष् इत्येतेषु सकारः, ज्योतिः, आयुः, चतुः एवम्पूर्वश्च 'स्तो' इत्यत्र

---

| | | |
|---|---|---|
| [1] स. १-२-२. | [2] स. ७-४-२१. | [3] सं. ५-२-६. |
| [4] सं. ६-६-८. | [5] स. ६-१-६. | [6] स. ५-२-५. |
| [7] सं. ५-७-३ | [8] स. २-१-३. | [9] स. ५-६-२३. |
| [10] स. ७-६-२. | [11] स. ४-४-६. | [12] सं. ५-३-१. |
| [13] सं. २-४-२. | [14] स. ७-१-८. | [15] स. ४-६-४. |

सकारः 'ऋकाररेफवति' 'अवर्णव्यञ्जन' (६—८, ७) इति चोक्तं निषेधं न आपद्यते, किन्तु षत्वं प्रतिपद्यत इति प्रतिप्रसवार्थोऽयं नकारः । यथा—'अम्ब निष्वर'[1] । 'विष्पर्धाश्छन्दः'[2] उपसर्गपूर्वत्वादनयोः प्राप्तिः । 'सुष्टरीमा जुषाणा'[3] । 'ग्रहणस्य च' (१—२२) इति वचनादकारगृहीतं साहस्र[4]मनेकार्थम् । यथा—'द्विषाहस्रं चिन्वीत'[5] । 'त्रिषाहस्रो वा असौ'[5] । 'कामयते सुषारथिः'[6] । 'विष्फुरन्ती अमित्रान्'[6] । 'सष्टुप् छन्दः'[7] । 'ज्योतिष्टोमं प्रथमम्'[8] । 'आयुष्टोमं तृतीयमुप यन्ति'[8] । 'चतुष्टोमो अभवत्'[9] । स्तरीमादीनामेषामवग्रहपूर्वत्वात् प्राप्तिः । ज्योतिरादिपूर्वत्वेन किं? 'यदक्ष्णयास्तोमीयाः'[10] । स्तो इति किं? 'चतुस्स्तनां करोति'[11] 'ज्योतिस्त्वा अस्य'[12] ॥ १३ ॥

उक्ताः सकारस्य षत्वनिषेधाः । तेषु 'सपरस्थानम्' (६-१०) इत्यस्य 'न धिपूर्वं' (६-११) इति भङ्ग उक्तः । अनेन तु ततोऽन्येषां प्रतिषेधानां कश्चिद्भङ्ग उच्यते । स्वरस्पर्धा इत्यादीनां सप्तानां ग्रहणानां, ज्योतिः । आयुः । चतुः । इत्येवंपूर्वस्य स्तोमशब्दस्य च षत्वनिषेधो न भवति । स्वर—'अम्ब निष्वर'[1] । स्पर्धाः—'विष्पर्धाश्छन्दः'[2] । स्तरीम—'सुष्टरी-

---

[1] सं. १-४-१. [2] सं. ४-३-१२. [3] सं. ५-१-११.
[4] साहस्रमप. [5] सं. ६-६-८. [6] सं. ४-६-६.
[7] सं. ४-३-१२. [8] सं. ७-४-११. [9] सं. ४-३-११.
[10] सं. ५-१-१. [11] सं. ६-१-६. [12] सं. ३-३-४.

मा जुषाणा [11] । साहस्रेति पदैकदेशस्याकारान्तनिर्देशः । 'त्रिषाहस्रं चिन्वीत [12] । 'त्रिषाहस्रो वा असौ [12] । सारथिः—'कामयते सुषारथिः [13] । स्फुरन्ती—'विष्फुरन्तो अमित्रान् [13] । एतेषु 'रेफवति' (६—८) इति निषेधः । स्तुप्—"सष्टुप्छन्दः" । [4] अत्रावर्णपूर्वनिषेधः [5] । "अनुष्टुप्" [4] इत्यत्र तु न निषेधप्रसक्तिरिति नोदाहरणम् । स्तो—'ज्योतिष्टोमं प्रथमम् [6] । 'आयुष्टोमं तृतीयम् [6] । 'चतुष्टोमस्स्तोमो भवति [7] । अत्र व्यञ्जनपूर्वतया निषेधप्राप्तिः [5] । एवंपूर्व इति किम्? 'अग्निः प्रस्तोता [8] । स्तो इति किम्? 'चतुस्स्तनां करोति [9] ॥ १३ ॥

---

## तहाँ॑ स्तस्मिन्लोकान्विद्वा॑ स्ता॑ स्त्रीन्युष्मानूर्ध्वानम्वकानृतून॑श्मन्कृण्वन्पितृननान्कपाला॑ स्तिष्ठन्नाद्युदात्ते नेमिर्देवान्त्सवने पशू॑ स्तकारपरस्सकारं प्राकृतो नित्ये प्राकृतो नित्ये ॥ १४ ॥

तहाँन्, तस्मिन्, लोकान्, विद्वान्, तान्, त्रीन्, युष्मान्, ऊर्ध्वान्, अम्बकान्, ऋतून्, अश्मन्, कृण्वन्, पितृन्, अनान्,

---

[1] स. ५-१-११. [2] सं. ५-६-८. [3] स. ४-६-६.
[4] सं. ४-३-१२. [5] (६—७) सूत्रे. [6] स. ७-४-११.
[7] सं. ५-३-१२. [8] स. ३-३-२. [9] सं. ५-१-६.

कपालान्, 'आद्युदात्ते' तिष्ठन्ग्रहणे,[1] नेमिर्देवान्, सवनेपशून् एतेपु ग्रहणेपु 'प्राकृतः' नकारः 'नित्ये' पदे वर्त्तमानः 'तकारपरः' 'सकारम्' आपद्यते । यथा—'शततर्हाꣳस्तृꣳहन्ति'[2] । 'तस्मिꣳस्त्वा दधामि'[3] । 'इमानेव लोकाꣳस्तीर्त्वा'[4] । 'य एवं विद्वाꣳस्त्रैधातवीयेन'[5] । 'ताꣳस्ते दधामि जम्भयोः'[6] । 'त्रीꣳस्तृचाननु'[7] । 'युष्माꣳस्तेऽनु'[8] । 'ऊर्ध्वाꣳस्तानुपव्दिमतः'[9] । 'त्र्यम्बकाꣳस्तृतीयसवनम्'[10] । 'ऋतूꣳस्तन्वते'[11] । 'अश्मꣳस्ते क्षुत्'[12] । 'पुनः कृणुꣳस्त्वा'[13] । 'पितृꣳस्तन्तुरिति'[14] । 'प्राणाꣳस्तस्यान्तर्यन्ति'[15] । 'अपि विकृतम्' (१-९१) इतिवचनादेतद्भवति । 'द्वादशकपालाꣳस्तृतीयसवने'[16] । 'त्रिभिस्तिष्ठꣳस्तिष्ठति'[17] । आद्युदात्त इति किं? 'न प्रत्यतिष्ठन्ता वसुकोसि'[18] 'अव्यकारादि' (१—९२) इति प्राप्तिः । 'नेमिर्देवाꣳस्त्वं परिभूरासि'[19] । नेमिरिति किम्? 'जातवेदो वपया गच्छ देवान्त्वꣳहि'[20] । 'माध्यन्दिने सवने पशूꣳस्तृतीयसवने'[21] । सवन इति किं? 'प्रजां पशून्तेनावर्द्धत'[22] ।

---

1 तिष्ठन्नित्पदमाद्युदात्तं. 2 सं. १-५७. 3 सं. १-६-५.
4 सं. ३-५-४. 5 सं. २-४-११. 6 सं. ४-१-१०.
7 सं. २-५-१० 8 सं. ३-२-५. 9 सं. ३-१-९.
10 सं. ३-२-२. 11 सं. ४-३-११. 12 सं. ४-६-१-
13 सं. ४-७-१३. 14 सं. ६-३-६. 15 सं. ७-१-३.
16 सं. ५-५-६. 17 सं. ५-४-१२. 18 सं. ५-३-६.
19 सं. २-६-९. 20 सं. ३-१-४. 21 सं. ३-२-९.
22 सं. ७-४.३.

तकारपर इति किं? 'तस्मिन्प्रजापतिः'[1-2] । प्राकृत इति किं? 'तान्तेन शमयति'[3] वैकृतोऽयं नकारः 'मकारस्स्पर्शपरः'[4] (९–२७) इति प्राप्तत्वात् । नित्ये इति किं? 'विद्वान्त्सोमेन यजेत'[4] अनित्योऽयं तकारः यतः पदसमये नास्ति । तकारः परो यस्मादसौ तथोक्तः[5] ॥ १४ ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे षष्ठोऽध्यायः.

तर्ह्यांस्तस्मिन्नित्यादिषु पदान्तः प्राकृतो नकारः सकारं विकारमेति नित्ये तकारे परतः । प्रकृतौ पदरूपे भवः प्राकृतः । नित्यः सार्वत्रिकः । संहिताम्नाये पदाम्नाये च विद्यमान इत्यर्थः । तर्ह्यान्–'शततर्हाःस्तृःहन्ति'[6] । 'तस्मिःस्त्वा दधामि'[7] । 'इमानेव लोकाःस्तीर्त्वा'[8] । 'विद्वाःस्त्रेधातवीयेन'[9] । 'ताःस्ते अग्नेऽपि दधामि'[10] । 'श्रीः स्तृचानु'[11] । 'युष्माःस्ते नु'[12] । 'यानूर्ध्वाःस्तान्'[13] । 'अयम्यकाःस्तृतीयसवनम्'[14] । 'ऋतूःस्तन्वते कवयः'[15] 'अदमःस्ते क्षुत्'[16] । 'पुन कृण्वःस्त्वा'[17] । 'पितॄःस्तन्तुरिति'[18] 'प्राणाःस्तस्यान्तर्यन्ति प्राणेषु'[19] । 'द्वादशकपालाःस्तृतीयसवने'[20]

---

[1] सं. ७-१-५. [2] "लोकान् द्रविणावतः" (सं. ५-३-११.) इत्यपि.

[3] सं. ६-७-३. [4] सं. ३-२-२. [5] तकारपरः.

[6] सं. १-५-७. [7] सं. १-६-२. [8] सं. ३-५-४.

[9] सं. २-४-११. [10] सं. ४-१-१० [11] सं. २-६-१०.

[12] सं. ३-२-५. [13] सं. ३-१-९. [14] सं. ३-२-२.

[15] सं. ४-३-११. [16] सं. ४-६-२. [17] सं. ४-७-१३.

[18] सं. ५-३-६. [19] सं. ७-१-३. [20] सं. ७-५-६.

तिष्ठत्याद्युदात्ते[1] नकारः कार्यभाक् । 'त्रिभिस्तिष्ठꣳस्तिष्ठति'[2] । आद्युदात्त इति किम्? 'प्रजाता न प्रत्यतिष्ठन्ता वसुकः'[3] । 'अव्यकारादि' (१-६२) इति प्राप्तिः । 'अराꣳ इवाग्ने नेमिर्देवाꣳस्त्वम्'[4] । नेमिरिति किम्? 'चष्या गच्छ देवान्त्वꣳ हि होता'[5] । 'माध्यन्दिने सवने पशूꣳस्तृतीयसवने'[6] । सवन इति किम्? 'प्रजां पशून्तेनावर्धत'[7] । तकारपर इति किम्? 'त्रीन्लोकान्'[8] । प्राकृत इति किम्? 'तान्तेन शमयति'[9] सांहितोऽत्र पदान्तनकारः । नित्य इति किम्? 'य एवं विद्वान्त्सोमेन'[10] आगमोऽत्र तकारः ॥ १४ ॥

इत्याचार्यगार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये प्रातिशाख्यव्याख्याने षष्ठोऽध्यायः.



[1] तिष्ठतिस्त्वसाद्युदात्ते. [2] सं. २-४-१२. [3] सं. ६-३-६. [4] सं. ७-५-९. [5] सं. ३-१-८. [6] सं. ३-२-९. [7] सं. ७-४-३. [8] सं. १-७-११. [9] सं. ५-७-३. [10] सं. ३-२-२.

# अथ सप्तमोऽध्यायः

## अथ नकारो णकारम् ॥ १ ॥

अथेत्ययमधिकारः । नकारो णकारमापद्यते इत्येतदधिकृतं वेदितव्यम्, इत उत्तरं यद्वक्ष्यामः ॥ १ ॥

नकारो णकारमाप्नोतीत्यधिक्रियते । द्विविधं णत्वम् । नानापदीयनिमित्तं समानपदस्थनिमित्तं च । तत्र पदसंहिताऽधिकारेऽस्मिन्नानापदीयनिमित्तमेव वचनार्हमिति तदिहोच्यते ॥ १ ॥

---o---

## पुपूकधिसुवस्समिन्द्रास्थूर्युरुवाष्पट्त्रिग्रामनिष्पूर्वः ॥ २ ॥

पु, पू, कधिसुवः, समिन्द्र, अस्थूरि, उरु, वाः, पट्, त्रि, ग्राम, निः एवम्पूर्वो नकारो णकारमापद्यते । यथा—'ऊर्ध्व ऊषुण ऊतये'[1] । 'इन्द्रो धर्ता गृहेषु नः'[2] इत्यत्र णत्वं न भवति । कथम्? 'पदग्रहणेषु' (१—९०) इति वचनात् । 'मोषूण इन्द्र'[3] । सुसू इत्येतयोर्यदा षत्वं नास्ति तदा णत्वनिषेधार्थं वैकृतग्रहणम् । यथा—'सुनः । न ऊतये'[1] । 'सूनः । न इन्द्र'[3] । 'ब्रह्मणा कधि सुवर्ण शुक्रम्'[4] । कधीति किं? 'सुवर्न शुक्र-

[1] सं. ४-१-४. [2] सं. २-४-५. [3] सं. १-८-३. [4] सं. २-२-१२.

स्स्वाहा '[1] । 'समिन्द्रणो मनसा '[2] । समिति किं? 'वर्तयेन्द्र नर्दबुद '[3] । 'अस्थूरिणो गार्हपत्यानि सन्तु '[4] । 'उरुकृदुरुण-स्कृधि '[5] । 'तस्माद्वाणामि वो हितम् '[6] । 'पण्णवत्यै स्वाहा '[7] । 'त्रिणवस्तोमो वसूनाम् '[8] । 'ग्रामणीयं प्राप्नुवन्ति '[9] । 'निर्णे-निर्ऋतिं ततोऽधि '[10] । विसर्गेण किं? 'नि नो रयिꣳ सुभोजसम् '[11]॥

पुपू इत्यादिषु पदेषु पूर्वेषु नकारो णत्वमाप्नोति । पु— 'ऊपुणः '[12] । पू—"मोपूणः "[13] । नन्वत्र पुपू इत्यनयोरन्यतरस्य ग्रहणे "अपि विकृतम्" (१-५१) इति परिभाषया इतरस्यापि निमित्तत्वं किं न स्यात्? तदुच्यते—विहितविकारयोगाद्विकृतं भवति । न चात्र पुशब्दस्य दीर्घादेशो विधीयते । पू इत्यस्य तु यद्यपि ह्रस्वादेशो विधीयते । तथाऽप्यसौ विभागविपयत्वात्संहितायां नोपकरोति । अतः उभयं गृह्यते । तथा क्रमाध्याये पत्वाभावविषये णत्वं न भवति । प्रकृतिरूपस्य विकृतत्वाभावात् । यथा—"ऊर्ध्व उ । ऊपुणः । सुनः । न ऊतये"[2] । 'मोपूणः । मो इति मो । सूनः । न इन्द्र'[13] । कृधिसुवः—"ब्रह्मणा कृधि सुवर्णं शुक्रम् "[14] । कृधीति किं? 'सुवर्न घर्मस्स्वाहा'[1] । समिन्द्र—'समिन्द्रणो मनसा '[2] । समिति किम्? 'इन्द्र नर्दबुद '[3] ।

[1] सं. ६-७-६. [2] ग. १-८-४४ [3] सं. ३-३-१०.
[4] ,, ६-३-२. [5] ,, २-६-१२. [6] ,, ५-६-१.
[7] ,, ७-२-१५. [8] ,, ४-३-९. [9] ,, ३-४-३.
[10] ,, ७-२-१०. [11] ,, ३-२-१२. [12] ,, ४-१-४.
[13] ,, १-८-३. [14] ,, ३-२-१२.

अस्थूरि—'अस्थूरिणो गार्हपत्यानि सन्तु'[1]। उरु—'उरुष्कदुरुणस्कृधि'[2]। वाः—'तस्माद्वार्णाम वो हितम्'[3]। षट्—'षण्णवत्यै स्वाहा'[4]। त्रि—'एवा त्रिणामन्'[5]। ग्राम—'ग्रामण्यो गृहे'[6]। "सर्वे ग्रामणीयम्"[7]। निः—"यष्निर्णिजा"[8] ॥ २ ॥

## हन्यादुप्यमानं च ॥ ३ ॥

चकारो निष्पूर्वत्वमन्वादिशति। निश्शब्दोत्तरयोर्हन्यादुप्यमानमित्येतयोर्ग्रहणयोर्नकारो णकारमापद्यते। यथा—'योनेर्गर्भं निर् हण्यात्'[9]। 'निरुप्यमाणमभि मन्त्रयेत'[10]। अन्वादेशः किमर्थः? 'न नि हन्यान्न लोहितम्'[11] ॥ ३ ॥

चशब्देन निष्पूर्वं इत्यन्वादिश्यते। आनन्तर्यार्थं[12] वचनम्। निश्शब्दे पूर्वे हन्यादुप्यमानमित्यनयोर्नकारो णत्वमाप्नोति। "योनेर्गर्भं निर् हण्यात्"[9]। "निरुप्यमाणमभि मन्त्रयेत"[10]। अन्वादेशेन किम्? 'अग्निरनूत्थाय हन्यात्'[13]। विसर्गेण किम्? 'न नि हन्यात्'[11] ॥ ३ ॥

## पारीपरिपरीप्रपूर्वः ॥ ४ ॥

पारी, परि, परी, प्र एवंपूर्वो नकारो णकारमापद्यते। यथा—

[1] स. ५-७-२. [2] स. २-६-११. [3] स. ६-६-१.
[4] सं. ७-२-१५. [5] स. २-१-११. [6] स. १-८-९.
[7] स. ७-४-५. [8] सं. ४-६-८. [9] सं. ६-६-९.
[10] सं. १-६-८. [11] स. २-६-१०. [12] अनन्तरार्थ.
[13] सं. ३-४-१०.

'पारीणह्यस्येशे'[1] । 'परि णो रुद्रस्य'[2] । 'वीरवन्तं परीणसम्'[3] । 'प्रणो देवी सरस्वती'[4] ॥ ४ ॥

पारीत्यादिषु पदेषु पूर्वेषु नकारो णत्वमाप्नोति । 'पारीणह्यस्येशे'[1] । 'अग्नं परिणयति'[5] । 'वीरवन्तं परीणसम्'[3] । प्रणिनाय महते'[6] ॥ ४ ॥

---o---

## अवर्णव्यवेतोऽपि ॥ ५ ॥

अपिशब्दः पर्यायन्वादेशकः । पर्यादिपूर्वो नकारोऽवर्णव्यवहितोऽपि[7] णत्वं भजते । यथा—'अग्नं पर्यणयत्'[8] । 'पर्याणीयाहवनीयस्य'[9] । 'प्राणाय स्वाहा'[10] । 'अनु प्राण्यात्प्रथमाम्'[11] । अवर्णव्यवेत इति किं? 'परि मिनुयात्'[12] । 'प्रमिनाम व्रतानि'[13] ॥ ५ ॥

अपिशब्देनात्र परिप्रपूर्व इत्यन[14]योरन्वादेशः । न केवलम्, न्यस्य । कुतः? अवर्णग्रहणसामर्थ्यात् । परिपूर्वस्य ह्रस्वदीर्घाभ्यां[15] व्यवायोऽस्ति । प्रपूर्वस्य त्वकारेणैव । तावन्मात्रान्वादेशे त्वकारव्यवेत इति ब्रूयात् । प्रतिपत्तिलाघवात् । तथा 'नतकारपरः' (७—१६) इति प्रतिषेधसामर्थ्याच्च परिपूर्वोऽप्यन्वा-

[1] सं. ६-२-१. [2] सं. ४-५-१०. [3] सं. २-२-१२.
[4] सं. १-८-२२. [5] सं. २-३-४. [6] सं. १-३-५.
[7] व्यवेतापि. [8] „ २-३-४. [9] „ ७-१-६.
[10] „ ७-१-१८. [11] „ ५-५-५. [12] „ ६-२-६.
[13] „ १-१-१४. [14] पर्याप्रपूर्वः प्रपूर्व इत्युभः [15] हि ह्रस्वदीर्घाभ्यां.

दिश्यते । स हि तदेकविषयः । अनन्तरार्थोऽयमारम्भः । परिपूर्वः प्रपूर्वश्च अवर्णव्यवेतो नकारो णत्वमाप्नोति । "अग्रं पर्यणयत्"[1] । 'आग्नीध्रं पर्याणीयाहवनीयस्य'[2] । 'प्राणाय स्वाहा'[3] । अवर्णेति किम्? 'प्रेन्द्राग्नी विश्वा'[4] । 'इन्द्रः प्र स्तौतु'[5-6] ॥ ९ ॥

---

## वाहनउह्यमानोयानमयन्यवेनवञ्च ॥ ६ ॥

वाहनः, उह्यमानः, यानं, अयन्, यवेन, वन् एषु ग्रहणेषु चकारात्पूर्वप्रपूर्वेषु नकारो णत्वं भजते । यथा—'प्रवाहणो वह्निरसि'[7] । 'प्रोह्यमाणोऽधिपतिः'[8] । 'प्रयाणमन्वन्ये'[9] । अयचितिपदैकदेशो बहूपादानार्थः । 'तस्मादादित्यः प्रायणीयः'[10] । 'प्रायणीयं कार्यम्'[10] । 'प्रायणमेया प्रतिष्ठा'[11-12] । 'प्रायणीयस्य पुरोऽनुवाक्याः'[10] । 'प्रायणीयेऽहन्'[13] । 'प्रयवेण पञ्च'[14] । वन्निति पदैकदेशो बहूपादानार्थः । 'यदि वा तावत्प्रवणम्'[15] । 'आहवनीयात्प्रवणꣳ स्यात्'[16] । अन्वादेशेन किम्? 'असि हव्यवाहनः'[7] । 'उदयनं वेद'[11] ॥ ६ ॥

---

[1] सं. २-३-४. [2] सं. ७-१-६. [3] स. ७-१-१९.
[4] सं. ४-२-११. [5] ,, ३-५-५.
[6] 'परिमिनुयात्' (सं. ६-२-६.) इति काचित्कं प्रत्युदाहरणान्तरम्.
[7] ,, १-३-३. [8] स. ४-४-९. [9] ,, ४-१-१.
[10] ,, ६-१-५. [11] ,, १-६-११.
[12] 'प्रायणं प्रतिष्ठाम्'. (सं. १-६-११.) [13] सं. ७-२-८.
[14] सं. ४-३-११. [15] स. ३-४-१२. [16] सं. ६-२-६.

अथमप्यनन्तरार्थ आरम्भः । चशब्देन प्रपूर्व इत्यन्वादिश्यते । वाहन इत्यादिषु नकारः प्रशब्दे पूर्वे णत्वमाप्नोति । वाहनः—"प्रवाहणो वह्निः"[1] । उह्यमानः—"प्रोह्यमाणः"[2] । यानम्—"यस्य प्रयाणम्"[3] । अयन्निति पदैकदेशः अनेकसङ्ग्रहार्थः । "यो वै यज्ञस्य प्रायणं प्रतिष्ठाम्"[4] । "प्रायणीये च"[5] । यवेन-"तासामु यन्ति प्रयवेण"[6] । वन्निति पदैकदेशग्रहणमुत्तरार्थम् । "यदि वा तावत्प्रवणमासीत्"[7] । अन्वादेशेन किम्? 'अग्नेः पुरीपवाहनः'[8] । 'उदयनं वेद'[1] । 'अकृन्तन् यवेन'[9] । 'स्तेनास्तस्करा वने'[10] ॥ ६ ॥

---

## प्रापूर्वश्च ॥ ७ ॥

चकाराकृष्टे[11]वन्निति ग्रहणे नकारः प्रा इत्येवंपूर्वो णकारं भजते । यथा—'प्रावणेभिस्सजोषसः'[12] ॥ ७ ॥

चशब्देन वन्नित्यन्वादिश्यते । प्रापूर्वो वन्नित्यत्र नकारो णत्वमाप्नोति । 'प्रावणेभिस्सजोषसः'[12] ॥ ७ ॥

---

## इन्द्रोऽयजुःपूर्व एनं केन ॥ ८ ॥

इन्द्रः, अयजुः इत्येवंपूर्वयो[13]रेनं केन इत्येतयोर्नकारो णत्वं

---

[1] सं. १-३-३. [2] स. ४-४-९. [3] स. ४-१-१.
[4] सं. १-६-११. [5] ,, ३-६-१०. [6] ,, ४-३-११.
[7] ,, २-४-१२. [8] ,, ४-१-४. [9] ,, २-६-८.
[10] ,, ४-१-१०. [11] चकाराकृष्ट. [12] ,, ४-२-४.
[13] ,, पूर्वः.

भजते । यथा—'इन्द्र एणं प्रथमः'[1] । 'अयजुष्केण क्रियते'[2]। एवम्पूर्वं इति किं? 'रुद्र एनं भूत्वा'[3] । 'ब्रह्मवादिनः केन'[4] एनं केनेति किं? 'इन्द्रो नेपदति'[5] ॥ ८ ॥

इन्द्रः, अयजुः इत्यनयोः पूर्वयोः यथाक्रमं एनं केन इत्यनयोः नकारो णत्वमाप्नोति । 'इन्द्र एणं प्रथमः'[1] । 'अयजुष्केण'[2] । एवंपूर्व इति किम्? 'ईश्वरा एनं प्रदहः'[3] । 'प्रीक्षीः केनाप इति'[7] । एनामिति किम्?[8] 'इन्द्रो नस्तत्र वृत्रहा'[9] । केनेत्यनुक्ते विधिर्निर्विषयस्स्यात् । अनन्तरासम्भवात्॥

---

## नृश्रीपूर्वो मनाः ॥ ९ ॥

नृ श्री इत्येवम्पूर्वो मना इत्यत्र नकारो णकारं भजते । यथा—'नृमणा अजस्रम्'[10] । 'श्रीमणाश्शतपयाः'[11] । एवम्पूर्वं इति किं? 'सुमना उपागहि'[12] ॥ ९ ॥

नृ श्री इत्यनयोः पूर्वयोर्मना इति नकारो णत्वमाप्नोति । 'नृमणा अजस्रम्'[10] । 'श्रीमणाश्शतपयाः'[11] । नृश्रीपूर्व इति किम्? 'यो हतमनाः'[13] । मना इत्यनुक्ते विधिर्निर्विषयस्स्यात् । अनन्तरासम्भवात् ॥ ९ ॥

---

1 सं. ४-६-७.   2 स. ६-१-२.   3 सं. ३-४-१०.
4 ,, ७-४-१०.   5 स. ५-७-२.   6 ,, ३-४-९.
7 ,, २-६-५.   8 अनन्तरं मा भूत् इत्यपि प्रत्युदाहरणात्पूर्वं पाठः.
9 ,, ४-६-४.   10 ,, १-३-१४.   11 स. ४-६-३.
12 ,, ३-३-११.   13 ,, २-२-८.

## अङ्गानामोनेगानिगानांग्यानियामेन ॥१०॥

अङ्गानां, ओने, गानि, गानां, ग्यानि, यामेन एषु नकारः संहितायां णत्वं भजते । यथा—'यत्त्र्यङ्गाणा॑ समवद्यति'[1] । 'आयुषि दुरोणे'[2] । 'अति दुर्गाणि विश्वा'[3] । 'पुरोगाणां चक्षुषे'[4] । 'सुवर्ग्याण्यासन्'[5] । 'अन्तर्यामेणान्तरधत्त'[6] ॥ १० ॥

अङ्गानामित्यादिष्विङ्गचोत्तरपदेषु नकारोऽयग्रहसंहितायां णत्वमाप्नोति । अङ्गानाम्—'यत्त्र्यङ्गाणा॑ समवद्यति'[1] । ओने—'वायविष्ट्ये दुरोणे'[7] । गानि—'अति दुर्गाणि विश्वा'[3] । गानां—'सखीनां पुरोगाणाम्'[4] । ग्यानि—'सुवर्ग्याण्यासन्'[5] । यामेन—'तानिन्द्रोऽन्तर्यामेण'[5] ॥ १० ॥

---

## रषःपूर्वो हवन्यह्नेहन् ॥ ११ ॥

हवनी, अह्ने, हन् एषु ग्रहणेषु नकारो रेफपूर्वः ष इत्येवम्पूर्वो वा णत्वं भजते । यथा—"अग्निहोत्रहवणी च"[8] । "शरद्यपराह्णे"[9] । हन्निति पदैकदेशो बहूपादानार्थः । 'रक्षोहणम्'[2] 'वैष्णवी रक्षोहणी'[10] । 'वृत्रहणं पुरन्दरम्'[11] । एवम्पूर्व इति किं? 'साह्न एवास्मै'[12] । 'वलगहनः'[10] ॥ ११ ॥

---

[1] सं. ६-३-१०. [2] सं. १-२-१४. [3] स. १-१-१४.
[4] सं. ३-२-४. [5] स. ६-३-६. [6] स. ६-४-६.
[7] स. २-२-१२. [8] स. १-६-८. [9] सं. २-१-२.
[10] ,, १-३-२. [11] सं. ३-५-११. [12] सं. ६-६-११.

र ष इत्यनयोः पदान्तयोः पूर्वयोः हवनी अह्न हन् इत्येतेषां नकारो णत्वमाप्नोति । रपूर्वस्तावत्—'अग्निहोत्रहवणी च'[1] । 'अपराह्णे'[2] । हविरितिपदैकदेशोऽपि ग्राह्य एव । पदमात्रग्रहणे तु ष इति निमित्तग्रहणमनर्थकं स्यात् । तत्पूर्वकार्यभाजोऽसम्भवात् । रपूर्वस्य तु हन्पदस्य सम्भवेऽपि[4] तद्विषयस्य विधेः 'अन्तश्च' (७-२६) इति निषेधस्य चैकविषयत्वाद्विधिनिषेधावुभावप्यनारम्भणीयौ स्याताम् । तत्सामर्थ्यात्पदैकदेशस्याप्यत्र ग्रहणं युक्तमिति स उदाह्रियते—'वृत्रहणं पुरन्दरम्'[5] । 'वृत्रहणा जुषेथाम्'[6] । षःपूर्वस्तु हन्शब्द एव सम्भवति[7] । स च पदैकदेश एव 'रक्षोहणं वाजिनम्'[8] । 'रक्षोहणः'[9] । एवंपूर्व इति किम्? 'प्रण्यह्ने'[10] । 'न नि हन्यात्'[11] । हवनीशब्दस्त्वुदाहरणं शाखान्तरे ॥ ११ ॥



## रुपूर्वो मयान्यनी ॥ १२ ॥

मयानि, अनी इत्यत्र रुपूर्वो[12] नकारो णत्वं भजते । यथा—'दारुमयाणि पात्राणि'[13] । 'त्वे वसूनि पुर्वणीक'[14] । एवम्पूर्व इति किं? 'यानि मृन्मयानि'[13] । 'अग्नयेऽनीकवते'[15] । रेफग्रहणेन किं? 'स्वनीकसन्दृक्'[16] ॥ १२ ॥

---

[1] सं. १-६-८. [2] स. २-१-२. [3] तत्पूर्वकस्य का.
[4] पदत्वसम्भवे. [5] ,, ३-६-११. [6] स. १-१-१४.
[7] सम्भवी [8] स. १-२-१४. [9] सं. १-३-२.
[10] ,, ५-५-१५. [11] सं. २-६-१०. [12] इत्येतयो रुपूर्वयोः.
[13] सं. ६-४-७. [14] स. १-३-१४. [15] ,, १-८-४.
[16] स. ४-३-१३.

रुशब्दे पदान्ते पूर्वे मयानि, अनी इत्यनयोः नकारो णत्वमाप्नोति ।‘ यानि हि दारुमयाणि ’[1] । ‘ त्वं वसूनि पुर्वणीक ’[2] । एवं पूर्व इति किम्? “अश्मन्मयानि ”[3] । “स्वनीकसन्दृक् ”[4] ॥

—o—

## वाघाप[5]पूर्वस्तष्टम् ॥ १३ ॥

वाघा इत्येवम्पूर्वः पकारपूर्वश्च तकारः, टकारमापद्यते यथा– ‘ दार्वाघाट इति दारु—आघातः ’[6] । ‘ आयुष्ट आयुर्दाः ’[7] । वाघा इति किं? ‘ मघात आदित्यानाम् ’[8] । पपूर्व इति किम्? ‘ अग्निस्ते तेजः ’[9] ॥ १३ ॥

एवं नानापदीयनिमित्ते नकारस्य णत्वं विहितम् । तस्य प्रतिषेधश्च वक्ष्यते । अत्रान्तरे तथयोर्द्वयोरपि मूर्धन्यादेशो *विधीयते । रपूर्वस्यानुवृत्तिर्लभ्यत इति—*

रपूर्व इत्यनुवर्तत इत्युक्तम् । आघापूर्व इति तु कार्यभाज एव विशेषणमात्रं न निमित्तोपबन्धौ कार्यभाक्पदैकदेशत्वात्[10]। पपूर्व इत्यपि तथा नानापदीयत्वनियमाभावात् । तदयमर्थः—रशब्दे पूर्वे आघाशब्दात्परस्य[11] तकारस्य टत्वं भवतीति, तथा पूर्व-

[1] स. ६-४-७. [2] स. १-३-२८. [3] स. २-४-११.
[4] „ ४-३-१३. [5] आघाप इति वैदिकाभरणपाठः.
[6] सं. ५-५-१५. [7] स. २-५-१२. [8] स. ६-१-१.
[9] „ १-१-१०.
[10] ‘तत्परस्य तकारस्य टत्वदर्शनाच्च’ इत्यधिकः पाठः.
[11] शब्दपूर्वस्य.

पदे निमित्ते षकारात्परस्य* । नन्वत्र कुतः पूर्वपदस्य निमित्तत्वम्? आघापूर्वेण समभिव्याहारात् पदादिमध्यवर्तिनां मूर्धन्यादेशानां पूर्वपदनिमित्तत्वदर्शनाच्च । आघा—'द्वार्वाघाटः'[1]। प—'अभिष्ठिध्वम्'[2]। 'विप्रा वर्धन्ति सुष्टुतम्'[3]। आघापूर्व इति किम्? 'उरु ते यज्ञपतिः प्रथताम्'[4]। पूर्वस्य षस्य[5] टकारनिमित्तत्वे वर्णसंहिता स्यात्। नानापदीयत्वनियमाभावात्। आघापूर्वस्तष्टमित्येतावदत्रोक्त्या वर्णसंहिताऽधिकारे षपूर्वस्तष्टमित्युक्तं चेद्विस्तरस्स्यात्। तस्मादत्र पूर्वपदस्य निमित्तत्वमाश्रयितव्यम्- आघापूर्वस्य तु पूर्वपदमात्रनिमित्तत्वे आकारघाशब्दयोः पृथग्विशेषणशङ्कया 'तेज एवात्मन्धत्ते'[6]। 'वयः सङ्घातं जेष्म'[7] इत्यादौ टत्वं स्यात् । षपूर्वानुवृत्तौ तु आघाशब्द एक एवैतद्विशेषणं[8] सिद्ध्यति । अन्ये त्वस्य सूत्रस्य आदितो चकारमधिकं पठन्तो चाघाशब्दं षकारं चैव निमित्तमाहुः । तेषां वर्णसंहितापत्तेर्णत्वविधिनिषेधयोर्मध्ये सङ्गतिर्न स्यात् ॥ १३ ॥

———

## थश्च ठम् ॥ १४ ॥

चकारः षकार[9]पूर्वत्वाकर्षकः । थकारः षकार[9]पूर्वः, ठकारं भजते । यथा—'गोष्ठं मा'[10]। एवम्पूर्व इति कि? "गच्छ गोस्थानम्"[11] ॥ १४ ॥

---

*इतऊर्ध्वे पूर्वं आघाशब्दात्परतः पदमध्ये पूर्वं षकारात्परस्तश्च टकारत्वमाप्नोति, इति पाठान्तरम्.

[1] स. ६-६-१०. [2] स. १-१-१४. [3] स. २-४-४६.
[4] स. १-१-८. [5] षपूर्वस्य. [6] स. १-५-८.
[7] स. १-१-५. [8] कार्यभाज एक विशेषणमिति. [9] प.
[10] स. १-१-१०. [11] सं. १-१-५.

चशब्दान्वादिष्टपूर्वस्थकारः पूर्वपदसंहितायां ठत्वमाप्नोति । 'आपो हिष्ठा मयोभुव'[1] । 'यविष्ठ'[2] 'आखरेष्ठः'[3] । अन्वादेशेन किं? 'चायवस्थ'[4] । नन्वत्र पकारस्य निमित्तत्वेऽप्युपपत्तेः किमर्थं निमित्तान्तराश्रयणगौरवमभ्युपगम्यते? नैतदस्ति । न ह्येतदर्थमिह पृथक्पदसंहिता परिगृह्यते । किन्त्वन्यार्थं परिगृहीताऽत्रापि सम्बध्यते । अतो न गौरवदोषः ॥ १४ ॥

## न तकारपरः ॥ १५ ॥

बाधापादिविधिरनधिकृतत्वादुपपन्नप्रध्वंसी । तस्मादत्र[6] नायं निषेधः किन्तु प्रकृतो णत्वविधिरनेन विषयीक्रियते । तकारपरो नकारो णत्वं नापद्यते । यथा—'पर्यन्तारिक्षात्'[7] । 'पारीपरिपरीप्रपूर्वः' 'अवर्णव्यवेतोपि' (७–४, ९) इत्येताभ्यां प्राप्तिः ॥ १९ ॥

अत्र नकारस्य मूर्धन्यादेशः प्रतिषिध्यते । नानन्तरयोस्तथयोः। कुतः? सम्भवासम्भवाभ्याम् । तदयमर्थः—तकारपरो नकारो णत्वं न प्राप्नोति । 'पर्यन्तारिक्षात्'[7] । 'अवर्णव्यवेतोपि' (७–६) इति प्राप्तिः ॥ १५ ॥

## नह्यतिनूनंनृत्यन्त्यन्योऽन्याभिरन्यान्यन्तश्चान्तश्च ॥ १६ ॥

नकारो निमित्तकर्षकः । नह्यति, नूनं, नृत्यन्ति, अन्यः, अन्या-

[1] सं. ४-१-५. [2] सं. २-४-१०. [3] सं. १-१-११.
[4] सं. १-१-१. [5] सेनाणु. [6] तस्मादत्र.
[7] सं. १-१-१०.

भिः, अन्यानि एतेषु ग्रहणेषु नकारः, पदान्तश्च नकारो णत्वं न भजते । यथा—'वाससा पर्यानह्यति'[1] । "अवर्णव्यवेतोऽपि" (७–२) इति प्राप्तिः । 'प्रनूनं पूर्णवन्धुरः'[2] । 'परि नृत्यन्ति पद्गो निम्नतीः'[3] । 'प्रान्यश्श॰सति'[4] । 'प्रान्याभिर्यच्छति'[5] 'प्रान्यानि पात्राणि'[6] । 'पारीपरिपरीप्रपूर्वः' (७–४) इत्येषां प्राप्तिः । अनित्येतावता सिद्धे, अन्योऽन्याभिरन्यानीति किं प्रतिपदपाठेन ? 'अनुप्राण्यात्प्रथमाम्'[7] इत्यत्र नैव निषेधः प्रसरति[8] । पदान्तो नकारो णत्वं न भजते । यथा[9]—'वृत्रहन्सूर विद्वान्'[10] । 'रषः पूर्वः' (७–११) इति प्राप्तिः ॥ १६ ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे सप्तमोऽध्यायः.

नह्यतीत्यादिषु यो नकारः यश्च पदान्तः स णत्वं न प्राप्नोति । नह्यति—'वाससा पर्यानह्यति'[1] । नूनम्—'प्रनूनं पूर्णवन्धुरः'[2] । नृत्यन्ति – 'मार्जालीयं परि नृत्यन्ति'[3] । अन्यः—'प्रान्यश्श॰सति'[4] । अन्याभिः—'प्रान्याभिर्यच्छति'[5] । अन्यानि—'प्रान्यानि पात्राणि'[6] । 'पारीपरिपरो' (७–४, ५) इत्यादिसूत्रद्वयेन प्राप्तिः । अन् इति सामान्यरूपग्रहणे 'अग्नं पर्यणयत्'[11] इत्यादेरकारव्यवेतस्य सर्वस्य प्रतिषेधप्रसङ्गात् 'अवर्णव्यवेतोऽपि' (७–२) इति सूत्रस्य व्याकोपस्स्यात् । अन्तः—'आ तिष्ठ वृ-

[1] स. ६-१-११. [2] „ १-८-५ [3] स. ७-५-१०.
[4] सं. ७-५-९. [5] सं. ५-१-६. [6] „ ६-६-११.
[7] „ ५-५-५. [8] प्रसरतीति. [9] पदादि यथान्तं क्वाचित्कः पाठः
[10] स. १-४-४२. [11] „ २-३-४.

त्रहनूरथम्[1] । 'रषः पूर्वः' (७-११) इति प्राप्तिः । ननु—'इन्द्राय त्वा वृत्रघ्ने'[2] इत्यादौ हन्शब्दविकारत्वात् 'अपि विकृतम्' (१-५१) इति घकारात्परस्य नकारस्य णत्वं कस्मान्न भवति? तदुच्यते—'पदग्रहणेषु पदं गम्येत' (१-५०) इत्यस्मिन्विषये हि 'अपि विकृतम्' (१-५१) इति विधिर्भवति । इह तु पदं गम्येत इति न नियमः इत्युपपादितम् । यच्च एतच्छास्त्रविहितविकारयोगि तदेव विकृतं गृह्यते । ततश्च 'अपि विकृतम्' (१-५१) इति परिभाषाया नायं विषय इति प्रापकाभावादेव न भवति । न हि वृत्रघ्न इत्यादौ हन्शब्दांशस्य समाम्नायसिद्धं मूलशास्त्रसिद्धं वा पदत्वमस्ति । न चास्मिन् शास्त्रे तस्योपधालोपो घत्वं वा विधीयते । मूलशास्त्रविहितानामपि विकाराणामिह परिग्रहे तेषां सर्वेषामवश्यं वेद्यत्वापत्तेस्तत्सापेक्षमिदं शास्त्रं ततोऽपि गुरुतरं सल्लाघवार्थतारम्भहेतुमतीयात् । अत एव 'पारोपरिपरो' (७-४) इत्येवमादिषु नैक[3]शब्दग्रहणं क्रियते । तस्मादेतच्छास्त्रविहितादेव विकाराद्विकृतमिह गृह्यत इत्यलमतिप्रसङ्गेन ॥ १६ ॥

इत्याचार्यगार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये प्रातिशाख्यव्याख्याने सप्तमोऽध्यायः.

---

[1] ऋ. १-४-१७. [2] सं. १-४-१. [3] अनेक.

# अथाष्टमोऽध्यायः.

## अथ प्रथमः ॥ १ ॥

अथेत्ययमधिकारः । प्रथम इत्येतदधिकृतं वेदितव्यम्, इत उत्तरं यद्वक्ष्यामः । ' अथ विसर्जनीयः ' (८–९) इतिपर्यन्तोऽ[1]यमधिकारः ॥ १ ॥

इह प्रथमो विशेषवर्णः[2] कार्यभाक्त्वेन अधिक्रियते । तस्यैवात्र विकारात् अन्यस्य आऽधिकारात् ॥ १ ॥



## उत्तमपर उत्तमः सवर्गीयम् ॥ २ ॥

उत्तमपरः प्रथम आत्मनः सवर्गीयमुत्तममापद्यते । यथा— ' वाङ्म आसन् '[3] । ' पण्णवत्यै स्वाहा '[4] । ' तन्महेन्द्रस्य '[5] । एवम्पर इति किं ? ' वाक्त आ प्यायताम् '[6] । प्रथम इति किं ? ' इमां नो वाचम् '[7] । उत्तमः परो यस्मादसौ उत्तमपरः ॥ २ ॥

उत्तमे पदादौ परतः प्रथमः स्वसमानवर्गीयं उत्तमं प्रतिपद्यते । " वाङ्म आसन् "[3] । ' पण्णवत्यै स्वाहा '[4] । " अवता-

---

[1] विसर्जनीयपर्यन्तो.

[2] प्रथमाख्यो वर्णः.

[3] सं. ५-६-९.

[4] सं. ७-२-१५.

[5] ,, ६-५-५.

[6] ,, १-३-९.

[7] सं. ६-४-७.

न्मा नाथितम्'[1] । उत्तरसूत्रस्यायमपवादः । उत्तमपर इति किम्? 'हव्यवाड्जुह्वास्यः'[2] । पदसंहितायां किम्? 'रुक्ममुप दधाति'[3] ॥ २ ॥

---

## तृतीयङ्‌ स्वरघोषवत्परः ॥ ३ ॥

स्वरपरो वा घोषवत्परो वा[4] प्रथमः सवर्गीयं तृतीयमापद्यते। यथा—'ऋधगयाड्ढगुत'[5] । 'यद्दे होता'[6] इत्यादि । स्वराश्च घोषवन्तश्च स्वरघोषवन्तः ते परे यस्मादसौ तथोक्तः ॥ ३ ॥

स्वरेषु घोषवत्सु च पदादिषु परतः प्रथमस्तृतीयं प्रपद्यते । 'प्रागपागुदगधराक्'[7] । 'विराडसि'[8] । 'हव्य-वाड्जुह्वास्यः'[2] । 'तद्रुद्रस्य रुद्रत्वम्'[9] । 'तद्धिरण्यमभवत्'[10] पतत्पर इति किम्? 'ऋक्च मे'[11] । पदसंहितायां किम्? 'त्रिक-कुद्वा एष यज्ञः'[12] । 'परिपतये त्वा गृह्णामि'[13] ॥ ३ ॥

---

## ककुच्च मकारपरः ॥ ४ ॥

ककुदित्यस्मिन् ग्रहणे अन्त्यो वर्णो मकारपरः, चकारात्कुटं तृतीयं सवर्गीयमापद्यते । यथा—'ककुद्मान्प्रतूर्तिः'[14] । कक-

[1] सं. १-२-१२. [2] सं. १-४-४६. [3] सं. ५-२-७.
[4] स्वरपरो घोषवत्परश्च. [5] सं. १-४-४४. [6] सं. ३-२-९.
[7] ,, १-४-१. [8] ,, १-३-२. [9] ,, १-५-१.
[10] सं. ६-१-७. [11] सं. ४-७-९. [12] सं. ५-२-५.
[13] सं. १-२-१०. [14] ,, १-७-७.

दिति किं ? 'य उन्माद्येत्'[1] एवम्पर इति किं ? 'ककुच्छन्दः'[2] । मकारः परो यस्मादसौ मकारपरः । 'उत्तमपर उत्तमश्च सवर्गीयम्' (८–२) इत्यस्यापवादोऽयम् ॥ ४ ॥

चशब्देन तृतीयमित्यन्वादिश्यते । ककुदित्यत्र प्रथमः तृतीयमापद्यते[3] मकारे पदादौ परतः । 'ककुद्मान्'[4] । ककुदिति किम् ? 'उन्माद्येत्'[1] । मकारपर इति किम् ? 'ककुच्छन्दः'[2] 'उत्तमपर उत्तमम्' (८–२) इत्यस्यापवादः ॥ ४ ॥

---

## अथ विसर्जनीयः ॥ ५ ॥

अथेत्ययमधिकारः । अथशब्दो विसर्जनीयं लक्ष्यत्वेनाधिकरोति, इत उत्तरं यदुच्यते । 'अथ स्वरपरो यकारम्' (९–१०) इत्यवधिभूतोऽयमधिकारः ॥ ५ ॥

विसर्जनीयः कार्यभाक्त्वेनाधिक्रियते । अन्यस्य आऽभिधानात् ॥ ५ ॥

---

## रेफमेतेषु ॥ ६ ॥

एतेषु स्वरेषु घोषवत्सु च परतः विसर्जनीयो रेफमापद्यते । यथा—'तदग्निराह'[5] । 'आशीर्म ऊर्जम्'[6] । एतेष्विति बहुवच-

---

[1] सं. ३-४-८.   [2] सं. ४-३-१२.

[3] 'ककुदित्यस्मिन्ग्रहणेऽन्त्यो वर्णो मकारपरः प्रथमः सवर्गीयं तृतीयमापद्यते' इति पाठान्तरम्.

[4] सं. १-७-७.   [5] सं. ४-२-८.   [6] सं. ३-२-८.

नान्तस्य सर्वनाम्नो निर्देशात् स्वरघोषवतां परनिमित्तानामुपादानं तेषामेव प्रकृतत्वात् । एतेष्विति किं ? 'अग्निश्च म इन्द्रश्च मे'[1] ॥

एतेषु आसन्नेषु स्वरेषु घोषवत्सु च परतः विसर्जनीयो रेफं प्रपद्यते । 'प्रजावतीरनमीवाः'[2] । 'अग्निर्गृहपतिः'[3] । 'मयोभूर्वातः'[4] एतेष्विति किम् ? 'महि वर्चः क्षत्रियाय'[5] ॥ ६ ॥



## न रेफपरः ॥ ७ ॥

रेफपरो विसर्जनीयो रेफं नापद्यते । यथा—'सुवो रोहाव'[6] 'अहोरात्रे'[7] । घोषवत्त्वाद्रेफस्य पूर्वविधिप्राप्तिः । रेफः परो यस्मादसौ रेफपरः ॥ ७ ॥

रेफपरो[8] विसर्जनीयो रेफं न प्रपद्यते । 'जाय एहि सुवो रोहाव'[6] । 'अश्वा रथेभिः'[9] ॥ ७ ॥



## द्वारभावार्हारविभरजीगरकरनन्तार्विवस्सुवः पुनरहरहःप्रातर्वस्तश्शमितस्सवितस्सनुतस्स्तनुतस्स्तोतर्होतःपितर्मातर्यष्टरे—ष्टर्नेष्टस्त्वष्टः ॥ ८ ॥

द्वाः, अभाः, वाः, हाः, अविभः, अजीगः, अकः, अनन्तः,

[1] सं. ४-७-६. [2] सं. १-२-१. [3] सं. २-४-६. [4] सं. ७-४-१७.
[5] सं. १-८-१२. [6] ,, १-७-९. [7] ,, १-५-९. [8] ,, रेफे परतः.
[9] ,, ४-६-६.

विवः, सुवः, पुनः, अहरहः, प्रातः, वस्तः, शमितः, सवितः, सनुतः, स्तनुतः स्तोतः, होतः, पितः, मातः, यष्टः, एष्टः, नेष्टः, त्वष्टः, एतेषु विसर्जनीयो रेफमापद्यते, स्वरघोषवत्परः । यथा— 'मा ह्वार्मित्रस्य'[1] । 'योनावभारुखा'[2] । 'तस्माद्वार्णाम वो हितम्'[3] 'मा मे प्र हारास्ति वा इदम्'[4] । 'अविभस्तन्तमविमरत्रिमस्तम्'[5] । 'ओषधीरजीगरजीगरोषधीरोषधीरजीगः । अजीगरित्यजीगः'[6] । 'देवत्राऽकरजक्षीरेण'[7] । 'करावरनुदात्ते पदे' (८–९) इति वक्ष्यति। तेनैतदपि सिध्यति, 'अप्यकारादि' (१–९२) इतिवचनादिति चेत् । मैवम् । अनुदात्ते कश्शब्दे तद्भवति । इदं त्वन्यस्वरार्थमपि। यथा—'अर्वाकरकर्वाऽर्वाऽकः'[8] आद्युदात्तस्त्वयम् । 'यन्नपरुषोऽनन्तरित्यै'[9] । 'अन्तरनाद्युदात्ते' (८–१०) इति वक्ष्यति । तस्मात् । 'अन्कारादि च' (१–९३) इतिवचनात् सिद्ध्यतीति चेन् । मैवम् । अनाद्युदात्ते तद्भवति । आद्युदात्तस्त्वयमिति प्रहणम् । 'च विर्विवश्च च विवः । विवरिति विवः'[10] । 'सुवरसि सुवर्मे'[11] । 'पुनरासद्य सदनम्'[12] । 'अहरहर् हविर्धानिनाम्'[13] । 'अहारहर्' (८–१३) इतीङ्‌ग्यान्तो निषिध्यत इत्येवंरूपस्यायं नियमः । 'प्रातरुपसदः'[14] । 'दोषावस्तर्धिया वयम्'[15] । 'हवी३-

[1] सं. १-१-४. [2] सं. ४-२-६. [3] सं. ५-६-१.
[4] सं. २-४-१२. [5] स. २-५-१. [6] सं. ४-६-७.
[7] सं. ५-१-७. [8] सं. ४-१-३. [9] स. ५-२-५.
[10] स. ४-२-८. [11] स. ५-७-६. [12] स. ४-२-३.
[13] ,, २-६-६. [14] ,, ६-२-३. [15] ,, १-६-६.

शामितरिति'[1] । 'देव सवितरेतत्ते'[2] । 'द्वेषस्सनुतर्युयोतु'[3] । 'सनुतः' इति शाखान्तरे । 'एतꣳ स्तोतरेतेन'[4] । 'होतर्यविष्ठ सुक्रतो दमूनाः'[5] । 'मरुतां पितः पितर्मरुतां मरुतां पितः'[6] । 'पृथिवि मातर्मा मा हिꣳसीः'[7] । 'अग्ने यष्टरिदं नमः'[8] । 'अशीयेष्टरेष्टरशीयाशीयेष्टः'[9] । 'नेष्टः पत्नीं पत्नीं नेष्टर्नेष्टः पत्नीम्'[10] । 'शिवस्त्वष्टरिहागहि'[11] । स्वरघोषवत्पर इति किं ? 'अग्निभर्स्तं भूतानि'[12] 'पुनस्तेऽमेषाम्'[13] । 'अवर्णपूर्वस्तु लुप्यते' (९–९) इति क्वचिल्लोपप्राप्तिः । 'अथ स्वरपरो यकारम्' (९–१०) इति क्वचिद्यत्वप्राप्तिः । 'ओकारमस्सर्वोकारपरः' (९–७) इति क्वचिदोत्वप्राप्तिः । ता एताः प्राप्तीः प्रतिषेद्धुं द्वारभाराद्यारम्भः ॥ ८ ॥

एतदादीनि रेफादेशविधायकानि सूत्राणि "ओकारमस्सर्वोऽकारपरः" (९–७) इत्यादीनां चतुर्णां सूत्राणामपवादतयाऽऽरभ्यन्ते । द्वाः अभाः इत्यादीनां विसर्जनीयः स्वरेषु रेफव्यतिरिक्तघोषवत्सु च परतः रेफं प्रपद्यते । अत्र 'न रेफपरः' (८–७) इत्युक्तत्वात्[14] रेफव्यतिरिक्तघोषवत्सु इति लभ्यते । द्वाः—'दृꣳहस्व मा द्वार्वसूनाम'[15] । अभाः—'येनावभारुखा'[16] । वाः—'तस्माद्वार्णाम वो हितम'[17] । हा—'मा प्रहारावम्'[18] । 'अव्यकारादि'

---

[1] सं. ६-३-१०. [2] सं. ३-२-७. [3] सं. १-७-१३.
[4] " ७-४-२०. [5] " १-२-१४. [6] " ३-२-९.
[7] सं. ३-३-२. [8] " १-१-१२. [9] " १-२-११.
[10] सं. ६-६-८. [11] सं. ३-१-११. [12] सं. २-६-१.
[13] सं. ४-७-१४. [14] इत्यस्यानुवृत्त्या. [15] सं. २-१-३.
[16] स. ४-२-५. [17] सं. ५-६-१. [18] सं २-६-२.

(१–६२) इति वचनात् 'पुनराहार्जातवेदाः'[1] इत्यप्युदाहरणम् । अविभः—'ता२ संवत्सरमविभः'[2] । 'इतिपरोपि' (८–१२) इति परमतं वक्ष्यति. तस्मिन् पक्षे इदमुदाहरणम्—'ताम् । संवत्सरमिति सं—वत्सरम् । अविभरिति'[2] । न च परमतानुसारेण कार्यविधिर्नोपपद्यते । "अनुनासिकेऽनुनासिकम्" (१०–११) इत्यादिषु दर्शनात् । एवं 'पितः' इत्यादिष्वपि द्रष्टव्यम् । तथाच–'अविभः, पितः' इत्यादीनां रेफादेशस्यान्यथोपपन्नत्वादस्य शास्त्रस्य जटायां तात्पर्यं शक्यते कल्पयितुम् । अजीगः—"अजीगरित्यजीगः"[3] । "ओषधीः । अजीगरिति"[3] । स एव परमतासिद्ध इतिकरणः पदाध्याये क्रमाध्याये च परिग्रहार्थः । अकः—"अधरा२ अकः । अकरित्यकः"[4] । 'यज्ञमेवाकर्विष्णो'[5] । ननु 'करावनुदात्ते पदे' (८–९) इति वक्ष्यति. ततः "अप्यकारादि" (१–६२) इति वचनात् एतदपि सिध्यति । सत्यम् क्वचित्सिद्ध्यति । "अकस्स लोकम्"[6] इत्यत्र तु न सिद्ध्यति "अकरिति । सः । लोकम्"[6] । अनन्तः—'अनन्तरायाय'[7] अत्रानुदात्तत्वात् 'अन्तरनानुदात्ते' (८–१०) इति न भवति । विवः—"असतश्च विवः । विवरिति विवः"[8] । सुवः—'सुवरसि सुवर्मे'[9] पुनः—'पुनरूर्जा'[10] । अहरहः—अहश्शब्दात्परस्मिन्नहश्शब्दे विसर्जनीयो गृह्यते । 'योऽहरहराहृत्य'[11] । प्रातः—"वसन्ता प्रातराग्नेयीम्"[12] । वस्तः—'दोषावस्तर्धिया वयम्'[13] । शमितः—'शृत२ हवी३श्शमितरिति'[14] । सवितः—'देव सवितरेतत्'[15] । सनुतः—

[1] सं. ३-२-६. [2] सं. २-५-१. [3] सं. ४-६-७. [4] सं. १-१-१३.
[5] ,, ३-१-१०. [6] ,, ४-१-२. [7] ,, ६-४-१२. [8] सं. ४-२-८.
[9] सं. ६-७-६. [10] सं. १-६-३. [11] सं. १-५-९. [12] सं १-१-२.
[13] सं. १-६-६. [14] सं. ६-३-१०. [15] सं. ३-२-७.

'सनुतर्युयोतु'[1] । "स्तनुतः" इति शाखान्तरे । स्तोतः—"एतदूँ-स्तोतरेतेन"[2] । होतः—'यथा होतर्मनुषः'[3] । पितः—"मरुतां पित-स्तदहम् । पितरिति"[4] । मातः—'पृथिवि मातर्मा मा'[5] । यष्टः—'अग्ने यष्टरिदं नमः'[6] । पष्टः—'पष्टा रायः । पष्टरिति'[7] । नेष्टः—'नेष्टः पत्नीम् । नेष्टरिति'[8] । त्वष्टः—'देव त्वष्टर्वसुरण्व'[9] । एवम्पर इति किम् ? 'सुवश्च मूर्धा च'[10] ॥ ८ ॥

## करावरनुदात्ते पदे ॥ ९ ॥

कः, आवः इत्येतयोर्विसर्जनीयः पदकाले[11] अनुदात्ते पदे वर्तमानः स्वरघोषवत्परो रेफमापद्यते । यथा—"मिथुया कर्भागधेयम्"[12] 'सुरुचो वेन आवः । आवरित्यावः'[12-13] । अनुदात्त इति किं ? "कोऽस्येश्वरः"[14] । 'आवो वाजेषु यं जुनाः'[15] । एवम्पर इति किं ? 'अधिपामकस्तमष्टचे'[16] ॥ ९ ॥

कः, आवः इत्यनुदात्ते पदे वर्तमानो विसर्जनीयः रेफं प्रपद्यते स्वरेषु रेफव्यतिरिक्तघोषवत्सु च परतः । 'मिथुया कर्भागधेयम्'[12] । 'वेन आवः । आवरित्यावः'[12] । अनुदात्त इति किम् ? 'कोऽस्येश्वरः'[14] । 'आवो वाजेषु'[15] । पद

[1] सं. १-७-१३. [2] सं. ७-४-२०. [3] सं. ४-३-१३.
[4] सं. ३-३-९. [5] सं. ३-३-२. [6] सं. १-१-१२.
[7] सं. १-२-११. [8] ,, ६-५-८. [9] सं. १-३-७.
[10] सं. १-७-९. [11] पदकाले इति क्वचिन्न दृश्यते.
[12] सं. ४-२-८. [13] कचिन्नद्वारूपमिदमुदाहरणम्. [14] सं. २-६-७.
[15] ,, १-३-१३. [16] ,, ६-१-७.

इति किम्? पदद्वयस्योत्तरपदे मा भूत्. 'आ वोऽर्वाची'[1]। 'आ वो देयास ईमहे'[2]। पदग्रहणपरिभाषया सिद्धे पदे इत्येकवचनान्तस्याधिकस्य प्रयोगादेतत्सिद्धं भवति ॥ ९ ॥

—o—

## अन्तरनाद्युदात्ते ॥ १० ॥

अन्तरित्यस्मिन् पदे अनाद्युदात्ते विसर्जनीयः स्वरघोषवत्परो रेफमाप्नोति। यथा—'अन्तरग्ने रुचा'[3]। 'अग्निमन्तर्भरिष्यन्ती'[4] 'अन्तर्यामे मघवन्'।[5] अनाद्युदात्त इति किं? 'एषोऽन्तोऽन्तं मनुष्यः'[6]। एवम्पर इति किं? 'अन्तस्ते दधामि'[5]। अन्तोदात्त इति वक्तव्ये बहुस्वरत्वं बहूपादानार्थम्। अन्यथा ह्यन्तोदात्तस्यैव स्यात्। इह तु न स्यात्। "अन्तर्वेदि मिथुनौ"[8] "अन्तर्यामे मघवन्"[5]। आदावुदात्तः यस्य तत् आद्युदात्तं, न आद्युदात्तं अनाद्युदात्तं तस्मिन् ॥ १० ॥

अन्तरित्यनुदात्ते[9] पदे वर्तमानो विसर्जनीयो रेफमापद्यते स्वरेषु रेफव्यतिरिक्तघोषवत्सु च परतः। "अन्तरुर्वन्तरिक्षम्"।[5] 'अन्तर्वेदि सं वोमि'[10]। अनाद्युदात्त इति किम्? 'यथान्तो नास्ति यत्'[11] ॥ १० ॥

—॥—

[1] स. १-४-२२. [2] सं. १-२-१. [3] स. ४-१-९.
[4] स. ४-१-३. [5] सं. १-४-३. [6] सं. ७-२-७.
[7] अनाद्युदात्त इति क्वचित्कः पाठः. [8] स. ७-६-९.
[9] अन्तरित्यनाद्युदात्ते. [10] सं. २-४-९. [11] ब्रा. ७-३-१.

## आवृत्परः ॥ ११ ॥

आवृत् इत्येवम्परो[1] विसर्जनीयो रेफमाप्नोति । यथा—'जिन्वरावृथ्स्वाहा'[2] । 'उग्ररावृथ्स्वाहा'[2] । 'भीमरावृथ्स्वाहा'[2] ॥११॥

आवृच्छब्दे परतो विसर्जनीयो रेफमापद्यते । 'जिन्वरावृथ्स्वाहा'[2] ॥ ११ ॥

---

## इतिपरोऽपि ॥ १२ ॥

अपिशब्द आवृत्परं विसर्जनीयमन्वादिशति । असौ विसर्जनीयः, इतिपरोऽपि रेफमाप्नोति । "इति श्रुतश्श्रुतरितीति श्रुतः"[2] अन्वादेशः किमर्थः ? "हवनश्रुतो हवम्"[3] । इतिः परः यस्मादसौ इतिपरः ॥ १२ ॥

तदेवमवर्णपूर्वस्य विसर्जनीयस्योभावलोपयत्वानां अपवादत्वेन 'ह्वारभार्' (८–८) इत्यादिसूत्रैः रेफादेश उक्तः । तस्याव्याप्तिरतिव्याप्तिश्च परिहारिप्यते[4] । अत्रान्तरे रेफि[5]विसर्जनीयान्तानां 'ह्वारभार्' (८–८) इत्यादिपदानां पदाध्याये परमतसिद्धो विशेष उच्यते—

प्रग्रहाध्यायवद्व्याख्येयम् । योऽयं रेफी कथितः 'ह्वारभार्' (८–८)इत्यादिपदेषु विसर्जनीयः स खलु पदाध्याये इतिपरश्च भवति. केवलश्च । तत्र यस्य संहितायां निमित्तसंयोगाद्रेफत्वमभिव्यज्यते

---

[1] इत्येतत्परः. [2] सं.२-४-७. [3] स. २-४-१४. [4] अव्याप्त्यतिव्याप्ती परिहरिष्येते, [5] रेफ.

स पदाध्याये केवलः प्रयुज्यते । अन्यत्र त्वितिपरः । यथा—'दृꣳहस्व मा ह्वाः'[1] । 'अग्निर् स्वे योनावभारुखा'[2] इति केवलः 'ताम्' संवत्सरमिति सं—वत्सरम् । अविभरिति'[3] । "आत् । इत् । ग्रसिष्ठः । ओषधीः । अजीगरिति"[4] । एवमादिरितिपरः । सोऽयं बह्वृचानां पक्षः । अन्ये तु व्याचक्षते—योऽयमावृत्परो विसर्जनीयः स इतिशब्दे परतो रेफं प्रपद्यते । अस्य 'अवृपादिति श्रुतरावृत्स्वाहा'[5] इत्यत्र "इति श्रुतः"[5] इत्यस्य क्रमस्य जटोदाहरणमिति "इति श्रुतश्श्रुतोरितीति श्रुतः"[5] इति । तदयुक्तम् परनिमित्तान्तरत्वात् विध्यन्तरे विध्यन्तरोक्तपरनिमित्तसम्बन्धस्य कार्यभाजस्सम्बन्धायोगात्, तथाऽभ्युपगमे "ओकारमस्सर्वोऽकारपरः" (९–७) "घोषवत्परश्च" (९–८) इत्यत्रापि अकारपरतया क्वचिद्दृष्टस्यैव अकारस्यान्यत्र घोषवत्परत्वे ओभावः स्यात् "आ वोऽर्वाची"[6] "आ वो देवास ईमहे"[7] इति । इतरस्य तु न स्यात् । "अयज्ञो वा एषः"[8] "रजनो वै कौणेयः"[9] इति । किञ्च—एवमनुचिताऽपि कृतिराश्रीयेत यदि किञ्चिदनन्यथासिद्धं समाम्नानरूपमनया सिद्ध्येत्, न त्वेतदस्ति । नन्वेवमनभ्युपगमे इतिशब्दपरस्य सर्वस्य विसर्जनीयस्य रेफादेशस्स्यात । "मा प्र हारावयोर्वै श्रित इति ते अब्रूताम्"[10] । ततो वरं क्वचिद्गत्यां रेफापादनम्,[11] तस्यास्त्वसमाम्नातत्वात् न हि शक्यते वक्तुमयुक्तोऽत्र[12] रेफादेश इति । हन्त्वेवमुचितार्थाप्रतिभान-

[1] स. १-१-४. [2] स. ४-२-६. [3] स. २-५-१.
[4] „ ४-६-७. [5] स. २-४-७. [6] स. १-४-२२.
[7] सं. १-२-१. [8] सं. १-५-७. [9] „ २-३-८.
[10] सं. २-५-१. [11] रेफोपादानम्. [12] वक्तुं युक्तोऽत्र.

मूलमेतद्व्याख्यानमित्युक्तं भवति । प्रसिद्धो हि रेफिणां अव्यक्तरेफाणामितिकरणो बह्वृचानां पदाध्याये तदभावश्च व्यक्तरेफाणाम् । प्रसिद्धश्चास्मिञ्छास्त्रे तत्रतत्र परमतोपन्यासः । प्रसिद्धा च यथोक्ता व्याख्या प्रग्रहाध्याये । अतो नेदं सूत्रं रेफादेशस्य विधायकं किन्त्वितिकरणस्येति न जटारूपं दूषयितव्यम् ॥

---o---

## अहारहस्सुवरनिङ्ग्यान्तः[1] ॥ १३ ॥

अहाः, अहः, सुवः एतेषु पदेषु विसर्जनीयोऽनिङ्ग्यान्तः स्वरघोषवत्परो रेफमापद्यते । यथा—"अहार्जातवेदाः"[2] । "अहर्देवानामासीत्"[3] । "सुवर्देवाꣳ अगन्म"[4] । अनिङ्ग्यान्त इति किं? "अभिपूर्वं त्र्यहा भवन्ति"[5] । 'प्रत्यङ्ख्यडहो भवति'[6] । "देवसुव इति देव-सुवः"[7] । एवम्पर इति किं? 'एवमुत्तममहस्स्यात्'[8] । "सुवश्च मूर्धा च"[4] । "ह्वारमारू" (८—८) आदिसूत्रे[9] हारित्यनेनैव ग्रहणेन अहाश्शब्दस्य "अव्यकारादि" (१—९२) इतिवचनाद्रेफसिद्धौ सत्यामत्र पुनर्वचनमिङ्ग्यान्तस्य अहाःशब्दस्य प्रतिषेधार्थम् । नन्वत्रैव हारिति वक्तव्यं, "अव्यकारादि" (१—९२) इतिवचनेन कार्यसिद्धेः न तु तत्र गौरवदो-

---

[1] 'न्ताः' इति क्वाचित्को बहुवचनान्तपाठः. [2] सं. ३-२-५. [3] सं. १-५-९. [4] स. १-७-९. [5] स. ७-३-९. [6] ,, ७-४-२. [7] स. १-८-१०. [8] ,, ७-२-२. [9] इति सूत्रे.

पापत्तेरिति चेत् । मैवम् । अनिङ्‌ग्यान्त इत्युक्तेररिङ्‌ग्यान्तत्वमपि सम्भावनीयम् । तच्च हारित्येवंरूपे ग्रहणे नास्तीत्यत्रेदं विशेषण-मनर्थकं स्यात् । तथा सत्येवंरूपे मा भून् किं त्वकारादित्वे भवतीति जघन्यः पक्षः न तु सरल इति सूत्रेऽहारिति ग्रहणं सुतरामुपयुज्यते[1] ॥ १३ ॥

ननु 'ह्वारभार्' (८–८) इत्यादिसूत्रमयुक्तं अव्याप्त्यतिव्याप्ति-भ्याम्। तथाहि–अहश्शब्दपूर्वकस्याहश्शब्दस्य रेफादेश उक्तः।सोऽ-तत्पूर्वके न स्यात् 'रात्रिया अध्यहरभि'[2] 'अहर्मांश्सेन'[3]। किञ्च-हास्सुवश्शब्दावविशेषेण गृहीतौ । तेन 'पडहा भवन्ति'[4]। 'ये देवा देवसुवस्स्थ'[5] इत्यत्रापि स्यात् । तत्परिहारायेदं सू-त्रमारभ्यते—

अह्वाः, अहः, सुवः इत्येतेषु विसर्जनीयः इङ्‌ग्यान्तेतरः स्वरेषु रेफव्यतिरिक्तघोषवत्सु च परतो रेफं प्रपद्यते । अ-निङ्‌ग्यस्यान्त इति विग्रहस्त्वयुक्तः, सुवश्शब्दे[6] तदसम्भवात्। एतेनेङ्‌ग्यान्तव्यतिरिक्तस्य अहश्शब्दस्य रेफादेशविधानादव्याप्तिः परिहृता। "अध्यहरभि"[2]। "अहर्मांश्सेन"[3]। तथा—हास्सुवश्शब्दयोरपि 'ह्वारभार्' (८–८) इत्यादिसूत्रे अनिङ्‌ग्यान्तयोरेव ग्रहण-मिति तत्रोक्तेः—'पडहा भवन्ति'[4] 'ये देवा देवसुवस्स्थ'[5] इत्यादौ

[1] सरलः कुतः? "गम्यमानस्य चार्थस्य नैव युक्तं विशेषणम्" इति न्यायात् सुतरामहारिति ग्रहणमुपयुज्यते इति क्वचित्कः पाठः.
[2] सं. १-६-९. [3] सं. ६-७-२०. [4] सं. ७-४-६.
[5] ,, १-८-१०.
[6] 'सुवर्मांशुः' (सं. २-१-२.) इत्यत्र सुवश्शब्दे इति क्वचिद् दृश्यते.

नातिव्याप्तिः । नन्वेवं सति 'ह्वारभार्' (८–८) इत्यादिसूत्रे सुवर्ग्रहण-मनर्थकम् । तदभावेऽपि कार्योपपत्तेः । नैतदस्ति । इह रेफिविसर्जनीयान्तानां 'ह्वारभार्' (८–८) इत्यादीनां पदानामितिकरणो विधित्सितः स तेषां पुरस्ताद्विधातुं न शक्यते । 'न रेफपरः' (८-७) इति प्रतिषेधस्यानन्वयापत्तेः। यद्युच्येत व्याख्यानतस्तदन्वयः प्रतिपत्स्यत इति । एवमपि 'ह्वारभार्' (८–८) इत्यादिविधिषु 'रेफमेतेषु' (८-६) 'न रेफपरः' (८-७) इत्यनयोः अनुवृत्तिर्न स्यात् । इतिकरणविधिव्यवधानात् । तस्मात्तेषां पदानां रेफविधेः परत एवेतिकरणो विधातव्यः । तत्र यदि ह्वारित्यादिसूत्रे सुवर्ग्रहणं न क्रियते । तदा 'अहारहः' (८–१३) इत्यादिसूत्रमेवास्य सुवइशब्दस्य रेफादेशविधायकं स्यात् । ततः परं त्वितिकरणे विधीयमाने 'न भिर्भ्यां परः' (८–१४) इत्यत्र पुनरहर्ग्रहणं कर्तव्यमिति तुल्यं शब्दगौरवम् । एवमपि 'न भिर्भ्यां परः' (८–१४) इत्यादिना रेफादेशः प्रतिषिध्यते। नेतिकरण इत्येतच्च दुर्विज्ञानमिति प्रतिपत्तिगौरवमधिकं स्यात् । यथान्यासे तु 'आवृत्परः' (८–११) इत्यन्ते ग्रन्थे सर्वेषां रेफिणां पदानां गृहीतत्वात्तदनन्तरं युक्तमितिकरणविधानम् । न चोक्तदोषाः प्रादुष्ष्युरिति सर्वमनवद्यम् ॥१३॥

---

## न भिर्भ्याम्परः ॥ १४ ॥

सान्निध्येन लब्धः पूर्वसूत्रोक्तो विसर्जनीयो भिः, भ्यां इत्येवम्परः न रेफमाप्नोति । अर्थात् अहरित्यत्र विसर्जनीयः परिगृह्यते । इतरत्र स्थितस्य एवम्परत्वाभावात् । यथा—"उत्तरैरहोभिः"[1] । "शमहोभ्याम्"[2] इति ॥ १४ ॥

---

[1] सं. ७-५-२.

[2] सं. १-३-५.

अहश्शब्दोऽत्रानुवर्तते । नान्यः । कुतः? सम्भवासम्भवाभ्याम् । अहश्शब्दे विसर्जनीयो रेफं न प्रपद्यते भिः, भ्यां इत्यनयोः परतः । 'उत्तरैरहोभिः'[1] । 'शमहोभ्याम्'[2] ॥ १४ ॥

---

## अꣳहश्च सर्वेषाम् ॥ १५ ॥

चकारो निषेधाकर्षकः[3] । अꣳह इत्यस्मिन् ग्रहणे विसर्जनीयो न रेफमाप्नोति । "अहारहः" (८–१३) इति प्राप्तिः अत्र ग्रहणे केचिदनुस्वारमिच्छन्ति केचिन्नेच्छन्ति । सर्वेषां तेषामेव निषेधो भवति अनुस्वारमिच्छद्भिरपि प्राप्तिरेवं प्रतिपाद्यते—

> विधेर्मध्यस्थनासिक्यो न विरोधो भवेत् स्मृतः ।
> तस्मात् कुर्वन्ति[4] कार्याणि वर्णानां धर्म एव तु ॥

इति । यथा—"अꣳह इन्द्रमेवाꣳहोमुचम्"[5] । "अꣳहोमुचे प्र भरेम"[6] ॥ १९ ॥

अꣳह इति सानुस्वारे अहश्शब्दे विसर्जनीयो रेफं न प्रतिपद्यते—सर्वेषामाचार्याणां मतात् । 'नैनमꣳहो अश्नोत्यन्तितो न'[7] । ननु 'अहारहस्सुवः' (८–१३) इति निरनुस्वारे विहितस्य रेफादेशस्य सानुस्वारे कुतः प्रसङ्गः? 'तत्र पूर्वपूर्वं प्रथ-

---

[1] सं. ७-५-१. [2] सं. १-३-९. [3] निषेधमाकर्षति.
[4] करोति. [5] ,, २-२-७. [6] सं. १-६-१२.
[7] सं. ३-४-११.

मम्' (५-२) इति नियमेन रेफादेशवेळायामनुस्वारागमाभावात् । अत एव 'यवनहस्वरपरेषु' (१२-४) इति लोपविधेः 'अꣳहसोऽꣳहतिः' (११-४) इत्यपवादं वक्ष्यति । तेन 'स्वरपूर्वं व्यञ्जनम्' (१४-१) इत्यस्मिन् विषयेऽपि अनुस्वारात्परस्य संयोगादेर्द्वित्वं सिद्धं भवति । नन्वनुस्वारागमोऽपि 'आदिरꣳहतिरꣳहोऽꣳहोः' (१६-२९) इति विशेषेण विधानात् सर्वत्र भवन्सर्वत्रैव रेफादेशं निवर्तयेत् । तन्न । अनुस्वारविधेः विषयविशेषे तद्विधायकत्वात् । यथा चैवं तथाऽनुस्वारविधौ दर्शयिष्यामः ॥ १९ ॥

---

## अनवर्णपूर्वस्तु रेफपरो लुप्यते ॥ १६ ॥

अवर्णादन्यस्वरपूर्वो विसर्जनीयो रेफपरो लुप्यते । यथा—"रेवती रमध्वम्"[1] । एवम्पूर्व इति किं? "यो रुद्रो अग्नौ"[2] एवम्पर इति किं? "रेवतीर्नस्सधमादः"[3] । तुशब्दारम्भादवर्णपूर्वोऽपि "द्वारभार्" (८–८) आदीनां विसर्गो लुप्यते, पूर्वस्वरश्च दीर्घमापद्यते । यथा—"रुक्मो अन्तरन्ता रुक्मो रुक्मो अन्तः"[4] । तर्हि "सुवो रोहाव"[5] इत्यत्र लोपदीर्घौ किं न स्यातां द्विरुक्तत्वादिति ब्रूमः । तत् कथं? "द्वारभार्" (८–८) आदिसूत्रे. "अहारहस्सुवः' (८–१२) इत्यत्र च । ननु 'अहोरात्रे'[6] इत्यत्र कथमोत्वं? अन्यार्थेन ग्रहणसामर्थ्येनेति ब्रूमः । तत्कथं?

---

[1] स. १-३-७. [2] स. ५-६-९. [3] स. १-७-१३.
[4] सं. ४-२-१०. [5] स. १-७-९. [6] सं. १-५-९.

"अहोरात्रे धृतव्रते" (४–११) इति एवंरूपसाम्यात् 'अहोरात्राभ्याम्'[1] 'अहोरात्रयोः'[2] इत्यादि विज्ञेयम् । एवञ्चेत् " अधिपवणे " (४–११) इति ग्रहणसामर्थ्येनैव पत्वे सिद्धे[3] "न धिपूर्वे" (६–११) इति पत्वनिषेधे निषेधो न विधेयः । सत्यम् । सवशब्दस्य 'अधिपवणे' (४–११) इति ग्रहणसामर्थ्येन पत्वं सिध्यतु । स्थानशब्दस्य कथं सिद्ध्येत् ? ग्रहणादिसामर्थ्याभावात् । तस्मात्तदर्थं वा तत् सूत्रं सार्थकमिति सन्तोष्टव्यम्* । तदर्थं वेति गुडजिह्विकान्यायः । तथा हि ग्रहणसामर्थ्यादिति गमनिकामात्रं, कण्ठोक्तिस्तु विशेषः । ततः सवशब्दार्थमपि 'न धिपूर्वे' (६–११) इति सूत्रमिति भावः* । अवर्णादन्यः अनवर्णः, असौ पूर्वो यस्मात् सः तथोक्तः रेफः परो यस्मादसौ रेफपरः ॥ १६ ॥

अवर्णादन्यस्वरोऽनवर्णः । तत्पूर्वको विसर्जनीयो रेफपरो लुप्यते । 'यवयाराती रक्षोहणः'[4] । 'यवागू राजन्यस्य'[5] । 'एतद्वै प्रजापते रूपम्'[6] । एतत्पूर्व इति किम् ? । 'सोमो राजा वरुणः'[7] । रेफपर इति किम्? 'प्रजावतीरनमीवाः'[8] । मूलशास्त्रे स्ववर्णपूर्वस्यापि कस्यचिद 'रोरि'[9] इति लोपस्स्मर्यते । स खलु 'सुवो रोहाव'[10] इत्याद्यस्मत्समाम्नायविरुद्धत्वान्निवर्त्यः । स चात्र तुशब्देन निवर्त्यते । तेन 'सुवो रोक्ष्यामि'[10] इत्यादिरूपसिद्धिः । कथं तर्हि ? 'द्यावा क्षामा रुक्मो अन्तर्वि भाति'[11] इत्य-

[1] स. २-८-१०. [2] स. ५-७-१८. [3] पत्वसिद्धेः. [4] स. १-३-२.
[5] स. ६-२-६. [6] ,, ६-७-१. [7] ,, १-८-१४. [8] ,, १-१-१.
[9] पा. ८-३-१४. [10] स. १-७-९. [11] ,, ४-१-१०.

*एतच्चिह्नमध्यगतो ग्रन्थः इहत्येषु सर्वेष्वेव कोशेषूपलभ्यते । परं तु 'तदर्थं वा' इति त्रिभाष्यरत्नीयपूर्ववाक्यभावप्रदर्शनरूपः टिप्पणीरूपतया प्रथमं ग्रन्थकारेण वाऽन्येन वा लेखकेन लिखितः आधुनिकैर्लेखकैः ग्रन्थ एवान्तर्भावित इति सम्भाव्यते ।

त्र 'रुक्मो अन्तरन्ता रुक्मो रुक्मो अन्तः'[1] इति लोपस्सिध्यति? उक्तमेतत्—जटायां छान्दसरूपाणि न भवन्ति इति। ततो व्याकरणविहितमेव सन्धिकार्यं भवति। तस्मादत्र तुशब्दस्य व्यावर्त्यमेव साध्यमिति 'तुशब्दारम्भादवर्णपूर्वोऽपि 'ह्वारभाद्' (८-८) आदीनां विसर्गो लुप्यते'[2] इति विपरीतार्थव्याख्यानं गर्हणीयम् ॥ १६ ॥

---

## दीर्घं च पूर्वः ॥ १७ ॥

तस्माद्रेफपरविसर्जनीयाल्लुप्तात् पूर्वोऽपि यः स्वरो ह्रस्वः स न दीर्घमापद्यते। यथा—"रुरू रौद्रः"[3]। 'तित्तिरी रोहित्'[4] 'विष्णू रूपम्'[5]। यदा तस्य विसर्जनीयस्य लोपः तदैव दीर्घत्वं यथा स्यादित्येवमर्थः चशब्दः ॥ १७ ॥

लोपी यो विसर्जनीय उक्तः तस्मात्पूर्वस्वरो यद्यदीर्घस्तत्रोभयं भवति—विसर्जनीयो लुप्यते तस्मात्पूर्वो ह्रस्वश्च दीर्घं प्रपद्यत इति। 'शिशुं न विप्रा मतिभी रिहन्ति'[6]। 'स श्वितानस्तन्यतू रोचनस्थाः'[7] ॥ १७ ॥

---

## एष्टश्च ॥ १८ ॥

एष्टरित्यस्मिन् ग्रहणे विसर्जनीयो रेफपरोऽवर्णपूर्वोऽपि लुप्यते,

---

[1] सं. ४-१-१०. [2] त्रि.भा. ८-१६. [3] सं. ५-५-१९.
[4] सं. ५-५-१६. [5] सं. ६-२-८. [6] ,, १-४-८.
[7] ,, १-३-१४.

पूर्वस्वरश्च दीर्घः । यथा—'एष्टा रायः'[1] । चशब्दो लोप-दीर्घयोराकर्षकः । नन्वेतदनुपपन्नम् । 'द्वारभार्' (८—८) आद्यन्तःपातित्वादेष्टरित्यस्य "रुक्मो अन्तरन्ता रुक्मो रुक्मो अन्तः"[2] इतिवत् "अनवर्णपूर्वस्तु" (८—१६) इत्यत्र तुशब्देन लोपदीर्घसिद्धेः । वक्ष्यमाणमतभेदाश्रयत्वज्ञापनाय गृहीतमेतदुपपन्नतरमिति परिहारः ॥

अवर्णपूर्वार्थोऽयमारम्भः । चशब्देनानन्तरोक्तं कार्यद्वय-मन्वादिश्यते । एष्टश्शब्दे विसर्जनीयो रेफपरो लुप्यते । ततः पूर्वो ह्रस्वो दीर्घं प्रपद्यते । 'एष्टा रायः प्रेषे'[1] ॥ १८ ॥

---

## नैकेषाम् ॥ १९ ॥

एकेषां मते एष्टरिति विसर्जनीयो रेफपरो न लुप्यते । अत एव पूर्वस्वरदीर्घभावश्च । किन्तु "घोषवत्परश्च" (९—८) इत्योत्वम् । यथा—'एष्टो रायः'[1] । वररुचिमतमेतत् । माहिषेयभाषितं त्विवम्—एष्टरिति विसर्जनीयो रेफपरो न रेफमापद्यत इति । सिद्धरूपमुभयोः समानम् ॥ १९ ॥

एकेषां मते एष्टश्शब्दे यथोक्तौ लोपदीर्घौ न भवतः । तत्र 'सुवो रोहाव'[3] इतिवदोत्वं भवति । 'एष्टो रायः'[1] ॥१९॥

---

[1] सं. १-२-११. [2] स. ४-१-१०. [3] स. १-७-६.

## द्वावुत्तमोत्तरीयस्य रेफम् ॥ २० ॥

उत्तमोत्तरीयस्य शाखिनो मते एष्टरिति विसर्जनीयः, तत्परो रेफश्च द्वावेतौ रेफमापद्येते। यथा—"एष्ट रायः"[1]। अयमर्थो वाररुचोक्तः। माहिषेयोक्तस्तु द्वावुत्तमोत्तरीय इति कस्य चिन्नाम तन्मते एष्टरिति विसर्जनीयो रेफपरो रेफमापद्यते। यथा—'एष्टर् रायः'[1] इति ॥ २० ॥

उत्तमोत्तरीयो नाम कश्चिदृषिः। तस्य मते एष्टरिति विसर्जनीयः ततःपरो रेफश्चेति द्वौवर्णावेकं रेफं प्रतिपद्येते। 'एष्ट रायः'[1] ॥ २० ॥

---

## साङ्कृत्यस्योकारम् ॥ २१ ॥

साङ्कृत्यस्य मते एष्टरिति विसर्जनीयो रेफपर उकारमापद्यते ततः "उवर्णपर ओकारम्' (१०–९) इत्योत्वम्। यथा—'एष्टो रायः'[1]। अस्य च, "नैकेषाम्" (८–१९) इत्यस्य चादेशभेदाद्भेदः। सिद्धोदाहरणं तु समानम् ॥ २१ ॥

द्वाविर्तीह नानुवर्तते। अत एवोत्तरसूत्रे एकवचनान्तं विशेषणं वक्ष्यति। तदयमर्थः—साङ्कृत्यो नाम कश्चिदृषिः। तस्य मते एष्टरित्यत्र विसर्जनीयः उकारं प्रतिपद्यते रेफे परतः ॥

---

[1] सं. १-२-११.

ततः 'आद्गुणः'[1] इति मूलशास्त्रप्रक्रियया 'एष्टो रायः'[2] इति रूपं भवति। तथा च प्रक्रियाभेदस्य प्रतिपादनार्थमिदं सूत्रम्। न तु प्रतिषेधलक्षरूपादन्यस्य रूपस्य ॥ २१ ॥

---o---

## उख्यस्य सपूर्वः ॥ २२ ॥

उख्यस्य मते रेफपर एष्टीरिति विसर्जनीयः पूर्ववर्णेन सह उकारमापद्यते, इति माहिषेयोक्तम्। यथा—'एष्टु रायः'[2]। वाररुचोक्तं तु—एष्टीरिति विसर्जनीयो रेफपरः पूर्वेण सह रेफमापद्यते इति। यथा—'एष्टृ रायः'[2]। पूर्वेण सह वर्तत इति सपूर्वः। अस्मिन् विकल्पजाले प्रथमं "एष्टश्च" (८–१८) इति सूत्रमेवेष्टम् ॥ २२ ॥

उख्यस्य मते एष्टशब्दे विसर्जनीयः तस्मात्पूर्वेण वर्णेन सहित उकारं प्रतिपद्यते रेफे परतः। 'एष्टु रायः'[2]। 'नैकेषाम्' (८–१९) इत्यादिसूत्रचतुष्टयं नेष्टम् ॥ २२ ॥

---

## कखपकारपरष्पमकारपूर्वस्समवग्रहः ॥

अत्र परनिमित्तविशेषणादितत्पर्यन्ता स्वरघोषवत्परानुवृत्तिर्मन्तव्या। अवग्रहवर्तिविसर्जनीयः ककारखकारपकारपरः षकारमापद्यते, अकारपूर्वश्चेत् सकारम्। यथा—"अथो हविष्कृतानाम्"[3]। "ग्रसितं

---

[1] पा. ६-१-८७. [2] स. १-२-११. [3] स. ६-४-३.

निष्षिदति '[1] । 'बहिष्पवमान उपसद्यः '[2] । "नमस्कारैरेवैनम्"[3] 'पथस्पथः परिपतिम्'[4] । अवग्रह इति किं? 'पुष्पावतीः प्रसूवतीः'[5] । 'नमः पितृभ्यः'[6] । ककारश्च खकारश्च पकारश्च कखपकाराः, एते परे यस्मादसौ तथोक्तः । अकारः पूर्वो यस्मादसौ अकारपूर्वः ॥ २३ ॥

इदानीमुपचारो विधीयते—

अवग्रह इति षष्ठ्येकवचनस्य स्यादेशाभावश्छान्दसः । अवग्रहस्य सम्बन्धी विसर्जनीयः षकारं प्रतिपद्यते कखपकारेषु परतः । स एवाकारपूर्वश्चेत् सकारं प्रतिपद्यते तेष्वेव वर्णेषु परतः । अकारपूर्व इति कार्यभाज एवायं निर्देशः । न तु निमित्तस्योपबन्धस्य वा । 'ज्योतिष्कृदसि सूर्य'[7] । 'यथा स्याद्गसितं निष्षिदति'[1] । 'चतुष्पादः पशवः'[8] । 'ऋद्धिपरिमितं यशस्कामाः'[9] । 'उत नः परस्पाः'[10] । एतत्पर इति किम्? 'सर्पिर्ग्रीवो'[11] । 'रक्षोहणं वाजिनम्'[11] । अवग्रह इति किम्? आयतनवतीः करोति'[12] । 'द्रविणावतः कुरुते'[13] । अत्राकारपूर्वस्य सत्वविधानादकारेतरस्वरपूर्वविषयं षत्वं वेदितव्यम् ॥२३

---

[1] सं. ६-१-९.  [2] सं. ६-४-९.  [3] सं. ५-५-७.
[4] सं. १-१-१४.  [5] सं. ४-२-६.  [6] सं. १-२-८.
[7] सं. १-४-३१.  [8] सं. ५-१-१.  [9] सं. २-१-२.
[10] सं. ४-६-१.  [11] सं. १-२-१४.  [12] „ ३-१-९.
[13] „ ५-१-११.

## आविर्निरिडश्शश्वतोऽपसोदेवरिपोऽश्व हसोऽतिदिवोविश्वतोऽश्मनस्तमसः ॥ २४ ॥

आविः, निः, इडः, शश्वतः, अपसः, देवरिपः, अश्व हसः, अतिदिवः, विश्वतः, अश्मनः, तमसः एषु विसर्जनीयः कखपकारपरो यथाविहितं भजते । यथा—"आविष्कृणुष्व"[1] । 'घृतं निष्पिबति'[2] । 'इडस्पदे समिध्यसे'[3] । 'शश्वतस्कर् हस्ते'[4] । 'अपसस्पारे अस्य'[5] । "उरोरा नो देव रिपस्पाहि"[6] । देवेति किं? "स रिपः पातु नक्तम्"[7] । "अश्व हसस्पातु"[7] । "अति दिवस्पाहि"[8] अतीति किं? "दिवः पृष्ठ९ सुवर्गत्वा"[9] । "विश्वतस्परि हवामहे"[10] । "तमश्मनस्परि"[11] । "उद्वयं तमसस्परि"[12] । अनवग्रहार्थोऽयमारम्भः ॥ २४ ॥

एतच्चादय उपचारविधयो नावग्रहविषयाः । आविरित्यादिषु विसर्जनीय अकारेतरस्वरपूर्वकः कखपकारेषु परतः पत्वं प्रतिपद्यते । अकारपूर्वस्सकारम् । आविः—'आविष्कृणुष्व'[1] । निः—'स्यन यत्रामयाति निष्कृत'[13] । इडः—'इडस्पदे'[3] । शश्वतः—'शश्वतस्कर् हस्ते'[4] । अपसः—'अपसस्पारे अस्य'[5] । देव-

---

[1] सं. १-२-१४. [2] सं. २-३-११ [3] सं. २-६-११.
[4] ,, २-२-१२. [5] ,, १-२-११. [6] ,, १-४-८५.
[7] ,, ३-२-४. [8] ,, १-८-१८. [9] ,, ४-६-२.
[10] ,, १-६-११. [11] ,, ८-१-२. [12] ,, ४-१-४३.
[13] ,, ४-२-६.

रिपः—'आ नो देव रिपस्पाहि'[1]। देवेति किम्? 'स रिपः पातु'[2]। अꣳहसः—'दिव्यादꣳहसस्पातु'[3]। अतिदिवः—'अति दिवस्पाहि'[4]। अतीति किम्? 'उपाश्रितो दिवः पृथिव्योः'[5]। कथं 'दिवस्परि प्रथमम्'[6] इति? विध्यन्तराद्भविष्यतीति। विश्वतः—'इन्द्रं वो विश्वतस्परि'[7]। अश्मनः—'त्वमश्मनस्परि'[8]। तमसः—'उद्वयं तमसस्परि'[9] ॥ २४ ॥

—o—

## कृधिपिन्वपथेपरः ॥ २५ ॥

कृधि, पिन्व, पथे एवम्परो विसर्जनीयो यथाविहितं भजते। यथा—"उरुणस्कृधि"[10]। "अपस्पिन्व"[11]। "सप्रथा नमस्पथे"[12-13] ॥ २५ ॥

कृधि, पिन्व, पथे इत्येतेषु परतः विसर्जनीयो यथार्हमुपचारं प्रतिपद्यते। 'उत नो मयस्कृधि'[14]। 'अपस्पिन्व'[11]। 'नमस्पथे'[12] ॥ २५ ॥

—o—

## न सक्रघकारपरे ॥ २६ ॥

स, क्र, घ एवम्परे सति कृध्यादौ विसर्जनीयो यथाविहितं नापद्यते। यथा—"आमनसः कृधि स्वाहा"[15]। "शं न

[1] स. १-४-४६. [2] स. १-२-१४ [3] सं. ३-२-४.
[4] सं. १-८-१४. [5] स. ७-६-९ [6] स. १-३-१४.
[7] स. १-६-१२. [8] स. ४-१-२. [9] स. ४-१-७.
[10] स. २-६-११. [11] स. ४-३ ४. [12] स. ४-७-१३.
[13] आलम्भर इति कि। 'नमः कपर्दिने' (स. ४-५ ५.) इत्यधिकः पाठः क्वचित्।
[14] स. ४-५-१०. [15] स. २-३-५.

नः कृधि । क्रत्वे "[1] । रेफेण किं? "उत नो मयस्कृधि क्षयद्वीराय "[2] । "उरु क्षयाय नः कृधि । घृतं घृतयोने पिब"[3] ॥ २६ ॥

अनन्तरसूत्रोक्तस्यायं प्रतिषेधः । तत्रापि कृधिशब्दस्यैतत्सप्तम्यन्तं विशेषणम् । नान्ययोः । कुतः? सम्भवासम्भवाभ्याम् । तदयमर्थः—सकारकशब्दधकारपदोपबन्धपरे कृधिशब्दे परतः उपचारो न भवति । 'आमनसः कृधि स्वाहा'[4] । 'मन्यासै शं च नः कृधि । क्रत्वे दक्षाय'[5] । 'उरु क्षयाय नः कृधि । घृतं घृतयोने पिब'[6] ॥ २६ ॥

---

## पत्नीवेपतीपतेपतयेपतिष्पतिम्परः ॥ २७ ॥

पत्नीवे, पती, पते, पतये, पतिः, पतिं एवम्परो विसर्जनीयो यथाविहितं भजते । यथा—"प्रैतु ब्रह्मणस्पत्नी वेदिम् "[7] । वे इति किं? "रेतोधाः पत्नीव इत्याह "[8] । "शुभस्पती इदमहम् "[9] । "वास्तोष्पते प्रति"[10] । "प्र च्यवस्व भुवस्पते"[11] । "वाचस्पतये पवस्व "[12] । "वाचस्पतिर्वाचमद्य "[13] । "वाचस्पतिं विश्वकर्माणम् "[14] । पत् इत्येतावतैव सिद्धे प्रतिपदपाठः[15] "दिवं गच्छ सुवः पत "[16] इत्यादिनिषेधार्थः[17] ॥ २७ ॥

---

[1] सं. ३-३-११. [2] स. ४-५-१०. [3] स. १-३-४.
[4] स. २-३-९. [5] सं. ३-३-११. [6] स. १-३-४.
[7] स. ३-५-६. [8] ,, ६-५-८. [9] ,, ३-२-१०.
[10] ,, ३-४-१०. [11] ,, १-२-९. [12] ,, १-४-२.
[13] ,, १-७-७. [14] ,, ४-६-२. [15] पाठेन किम्?
[16] ,, ४-१-१०. [17] इत्यादौ ना भूदिति.

पुनरपि विधय पवारभ्यन्ते—

पत्नीवे इत्यादिषु परतो विसर्जनीयो यथार्हमुपचारं प्रतिपद्यते। पत्नीवे—'ब्रह्मणस्पत्नी वेदिम्'[1]। 'वे' इति किम्? 'रेतोधाः पत्नीव इत्याह'[2]। पती—'उरिपपीते शुभस्पती इदमहम्'[3]। पते—'वास्तोष्पते'[4]। पतये—'नमस्सदसस्पतये'[5]। पतिः—'वायुर्वै नभसस्पतिः'[6]। पतिं—'हविषा ब्रह्मणस्पतिम्'[7]। पत् इति सामान्यरूपग्रहणे—'इन्द्रियावतः पत्नीवन्तम्'[8] 'रासभः पत्वा'[9] इत्यादावतिप्रसङ्गः ॥ २७ ॥

---

## दिवस्सहसस्परिपुत्परः ॥ २८ ॥

दिवः, सहसः इत्यनयोर्विसर्जनीयः परि, पुत् इत्येवम्परो यथाविहितं भजते। यथा—"दिवस्परि प्रथमम्"[10]। "दिवस्पुत्राय सूर्याय"[11]। "सहसस्पुत्रो अद्भुतः"[12]। अनयोरिति किं? "पृथिव्याः पर्यन्तरिक्षात्"[13]। "परुषःपरुषः परि"[14]। "पुरुषः पुत्रान्"[15]। एवम्पर इति किं? "दिवः पृथिव्याः"[13]। अनेकार्थः पुदिति पदैकदेशः ॥ २८ ॥

---

| | | |
|---|---|---|
| [1] स. ३-५-६. | [2] स. ६-१-८. | [3] सं. ३-२-१०. |
| [4] सं. ३-४-१०. | [5] ,, ३-२-४. | [6] ,, ३-३-८. |
| [7] ,, २-३-१४. | [8] ,, १-४-२७. | [9] ,, ४-१-४. |
| [10] ,, १-३-१४. | [11] ,, १-२-९. | [12] ,, ४-१-९. |
| [13] ,, ३-१-१०. | [14] ,, ४-२-९. | [15] सं. ८-६-९. |

यथासङ्ख्यमत्र नेष्यते । अपरिभाषितत्वादव्याप्तिप्रसङ्गाच्च । तदयमर्थः—दिवः, सहसः इत्यनयोर्विसर्जनीयः परि, पुत् इत्यनयोः परतो यथोचितमुपचारं प्रपद्यते । 'दिवस्परि'।[1] 'दिवस्पुत्राय सूर्याय'[2] । 'सहसस्पुत्रो अद्भुतः'[3] । एतत्पर इति किम्? 'दिवः पृष्ठं सुवर्गत्वा'[4] ॥ २८ ॥

---

## रायस्पोपरः ॥ २९ ॥

राय इत्यत्र विसर्जनीयः पो इत्येवम्परो यथाविहितं भजते। यथा—"पशवो वै रायस्पोषः"[5] । पो इति पदैकदेशो बहूपादानार्थः । 'रायस्पोषेण'[6] । "शन्तनुत्वाय रायस्पोषाय"[7] । "रायस्पोषस्य ददितारः"[8] । राय इति किं? "विभुः पोष उत त्मना"[9] । पो इत्योकारेण किं? 'रायः प्रेषे भगाय'[10] ॥

रायश्शब्दे विसर्जनीयः पोशब्दे परतः उपचारं प्रपद्यते। 'रायस्पोषम्'[11] । 'रायस्पोषाय त्वा गृह्णामि'[12] । पो इति किम्? 'एषा रायः प्रेषे'[10] ॥ २९ ॥

---

[1] सं. १-३-१४.   [2] स. १-२-९.   [3] स. ४-१-९.
[4] स. ४-६-५.   [5] स. ६-४-६.   [6] सं. १-७-९.
[7] स. ३-२-५.   [8] सं. ३-२-३.   [9] सं. ३-१-११.
[10] स. १-२-११.   [11] स. १-६-४.   [12] ,, १-६-१.

## नमस्करोपरः ॥ ३० ॥

नम इति[1] विसर्जनीयः करो इत्येवम्परो यथाविहितं भजते। यथा—"संवथ्सरेण नमस्करोमि"[2]। "उभयीभ्यो नमस्करोति"[3] नम इति किं? "एकहायनादिनः करोति"[4]। करो इति किं? "नमः कपर्दिने च"[5] ॥ ३० ॥

नम इत्यत्र विसर्जनीयः करोशब्दे परतः उपचारं प्रपद्यते। 'उभयीभ्यो नमस्करोति'[3]। 'संवथ्सरेण नमस्करोमि'[2]। करोपर इति किम्?। 'नमः कपर्दिने च'[5] ॥ ३० ॥

## वसुष्ककारपरः ॥ ३१ ॥

वसुरित्यत्र विसर्जनीयः ककारपरो यथाविहितं भजते। यथा—"स इधानो वसुष्कविः"[6]। वसुरिति किं? "विप्रश्शुचिः कविः"[7]। एवम्पर इति किं? "मयि वसुः पुरोवसुः"[8]। "विश्वावसुः पर्यमुष्णात्"[9] ॥ ३१ ॥

वसुरित्यत्र विसर्जनीयः ककारे परत उपचारं प्रपद्यते। स इधानो वसुष्कविः[6]। ककारपर इति किम्? 'मयि वसुः पुरोवसुः'[8] ॥ ३१ ॥

---

[1] इत्यत्र. [2] स. ५-५-७. [3] सं. २-६-९.
[4] स. ६-६-३. [5] स. ४-५-५. [6] स. ४-४-४.
[7] स. १-२-१४. [8] स. ३-२-१०. [9] स. ६-१-६.

## नाध्वरंविश्वतोऽन्तर्जातोविविशुःपरुःपुनः ॥

अध्वरंविश्वतः, अन्तः, जातः, विविशुःपरुः, पुनः इत्येतेषु विसर्जनीयो यथाविहितं नापद्यते । यथा—"अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि"[1] । "आविर्निरिडः" (८–२४) इति प्राप्तिः । अध्वरविशेषणान्निवृत्तिः[2] । अध्वरमिति किम् ? "इन्द्रं वो विश्वतस्परि"[3] । "महादेवमन्तःपार्श्वेन"[4] । "कखपकार" (८–२३) इति प्राप्तिः । "भूतस्य जातः पतिः"[5] । "पत्नीविपती" (८–२७) इति प्राप्तिः । "या आविविशुः परुःपरुः"[6] विविशुरिति किम् ? "परुष्परुरनुघुष्या वि शस्त"[7] । "पुनःपुनर्हास्मात्"[8] । "कखपकारपरः" (८–२३) इत्यनयोः प्राप्तिः ॥

अध्वरंविश्वत इत्यादिषु विसर्जनीयं उपचारं न प्रपद्यते । अध्वरं विश्वतः—'अध्वरं विश्वतः परिभूरसि'[1] । अध्वरमित्युपबन्धाभावे विधिप्रतिषेधयोर्विषयभेदो नावगम्येत । अन्तः—'महादेवमन्तःपार्श्वेन'[1] । जातः—'भूतस्य जातः पतिरेक आसीत्'[5] । विविशुःपरुः—'या आविविशुः परुःपरुः'[6] । विविशुरित्युपबन्धेन किम् ? 'वयुना कृणोत परुष्परुः'[7] । पुनः—'पुनःपुनर्हास्मात्'[8]॥३२॥

---

[1] सं. ४-१-११. [2] क्वचित्कोऽयं पाठः. [3] सं. १-६-१२.
[4] सं. १-४-३६. [5] सं. ४-२-८ [6] सं. ४-२-६.
[7] „ ४-६-६. [8] „ ६-६-१.

## धपवति ॥ ३३ ॥

सान्निध्यादत्र परत्र च सूत्रे नञर्थो लभ्यते धकारश्च पकारश्च धपौ तावस्मिन् स्त इति धपवत्, तस्मिन् पदे परभूते सति पूर्वो विसर्जनीयो यथाविहितं नापद्यते । यथा—" बहिःपरिधि स्कन्दात्"[1] । " पुरुषःपुरुषो निधनम् "[2] । 'उभयतःक्ष्णूर्भवति '[3] । " कखपकार " (८–२३) इति प्राप्तिः । परभूत इति किं? " अधस्पदं कृणुते "[4] । " शुक्रस्य ज्योतिषस्पते "[5–6] ॥ ३३ ॥

धकारवति पकारवति वा पदे परतः विसर्जनीय उपचारं न प्रपद्यते । यथा—' बहिःपरिधि स्कन्दात् '[1] । 'उभयतःक्ष्णुः'[3] । नन्वत्र धपवति पदे विसर्जनीय इति किं न स्यात्? 'व्याख्यानतो विशेषप्रतिपत्तिः' इति न्यायात्, समाम्नायविरोधाच्च । तथात्वे हि—' अधस्पदं तमीं कृधि '[7] । ' मधुमतीर्न इषस्कृधि '[8] इत्युपचारो न स्यात् । ' बहिःपरिधि '[1] इत्यादौ तु स्यात् ॥

---

## परिवाप्रपरः ॥ ३४ ॥

परिवा, प्र एवम्परो विसर्जनीयो यथाविहितं नापद्यते । " दिवः परि वाजेषु "[9] । वेति किं? " दिवस्परि प्रथमम् "[10] ।

---

[1] ब्रा. २-६-६. [2] ब्रा. ६-६-२. [3] ब्रा. ५-१-१.
[4] सं. ७-७-१२. [5] " ४-४-८.
[6] "तदिन्मासि निरेधि पूर्वस्य" इत्याधिकः पाठः.
[7] सं. १-६-१२. [8] सं. १-४-२. [9] सं. ४-२-११.
[10] सं. १-३-१४.

"तस्मादितःप्रदानं देवाः"[1] । प्र इति ह्रस्वग्रहणं दीर्घस्याप्युपलक्षणम् । यथा—"उदथापरश्च" (९–२४) इति दीर्घग्रहणं ह्रस्वोपलक्षणार्थम् । तर्हि "प्रापूर्वश्च" (७–७) इति सूत्रं व्यर्थम् । प्रशब्दस्यानुवृत्तस्यैव दीर्घोपलक्षकत्वादिति चेत्, उच्यते। प्रत्यक्षगृहीतस्यैवोपलक्षकत्वं नानुकृष्टस्येति विज्ञेयम् । तथाहि—"वाहन उह्यमानः" (७–६) इत्यत्र चकारेण प्रशब्दस्तत्रानुकृष्टः । अत्र तु परिवाप्रपर इति प्रत्यक्षगृहीतत्वादुपलक्षकत्वं भवति। तथासतीदमप्युदाहरणम्—"वाहिःप्राणो वै मनुष्यः"[2] ॥ ३४ ॥

परिवा, प्र इत्यनयोः परतो विसर्जनीय उपचारं न प्रपद्यते । 'दिवः परि चाजेषु'[3] । वाशब्दाग्रहणे विधिप्रतिषेधयोर्विषयभेदो न स्यात्। न च 'अश्मनस्तमसः'(८–२४) इत्येतौ प्रतिषेधविषयतामर्हतः । तद्ग्रहणवैयर्थ्यप्रसङ्गात् । प्र इत्यकारान्तग्रहणम् । 'इतःप्रदानꣳ ह्यमुष्मिन् लोके'[4] । 'वहिःप्राणो वै'[2]॥ ३४ ॥

## न निर्ण निः ॥ ३५ ॥

निरित्यत्र विसर्जनीयस्य प्रपरत्वेऽपि पत्वनिषेधो न भवति, पत्वमेव भवतीत्यर्थः । "आभूत्वा निर्णिप्याश्चो प्राश्नां निः"[5] । "आत्मना परा निष्पू शुक्रशोचिषा"[5] ॥ ३६ ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे अष्टमोऽध्यायः.

1 ■ ३-२-९. 2 सं. ६-१-१ 3 ,, ४–२११.
4 ,, १-७-३. 5 ,, ६-४-१०.

निरिति विसर्जनीयस्योपचारप्रतिषेधो न भवति । अत्र शाखान्तरीयो निष्पुरीषादिशब्द उदाहरणम् । तत्र 'अवग्रहः' (८–२३) इति प्राप्तिः । 'षपवति' (८–२३) इति प्रतिषेधः । ननु 'अपिगृह्य प्राञ्चौ निष्कामतः'[1] इत्यत्र 'प्राञ्चौ निः'[1] इति क्रमस्य जटोदाहरणं किं न स्यात्? जटाया एतच्छास्त्राविषयत्वात् । शाखान्तरं तु 'तन्नुतः' (८-८) इत्यादिसिद्ध्यर्थं 'विशाखे, स्तुतशस्त्रे' (४–११) इत्यादीनां प्रत्युदाहरणार्थं च विषयतया परिगृहीतम् । तत एव सर्वनिर्वाहात्–नासमाम्नाता जटाऽस्य शास्त्रस्य विषयतया परिकल्प्या । प्रत्युत अविषयत्वं च जटायाः एकादशाध्याये वक्ष्यत इत्यवोचाम । तस्मान्न जटोदाहरणम् । ततश्च 'प्राञ्चौ निर्णिः प्राञ्चौ प्राञ्चौ निः'[1] इत्येव जटा वक्तव्या । यदप्युदाहृतं कैश्चित् 'आत्मना पवा निष्ष शुक्रशोचिषा'[1] इति तदप्यनुदाहरणम् । पदसङ्ख्याबोधकस्य पञ्चाशत्पदानुक्रमणवाक्यस्य लक्षणरूपतया वेदत्वाभावात्त्रिविधसमाम्नायानन्तर्भूतत्वाद्विप्रतिपन्न[2]संहितापाठत्वाच्च । तस्मादुचितोदाहरणापरिज्ञाननिबन्धनोऽयं विषयपरिग्रह इत्यलमनेन ॥ १२ ॥

इत्याचार्यगार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये प्रातिशाख्यव्याख्याने अष्टमोऽध्यायः.

[1] स. ६-८-१०.  [2] द्विग्रहणपद.

# अथ नवमोऽध्यायः

## ऊष्मपरोऽघोषपरो लुप्यते काण्डमायनस्य ॥ १ ॥

ऊष्मपरो विसर्जनीयः काण्डमायनस्य मते लुप्यते तस्मिन्नूष्मण्यघोषपरे सति । यथा—"चतुस्तनां करोति"[1] । "वायवस्थोपायवस्थ"[2] । काण्डमायनग्रहणं विकल्पार्थं । अन्येषां मते घोषवत्परेऽपि ऊष्मणि विसर्जनीयो लुप्यते । यथा—"अह्नचस्वाहा"[3] "ये शुक्रास्युस्तम्"[4] । "यो हतमनास्स्वयंपाप इव स्यात्"[5] "दानकामा मे प्रजास्युः"[3] । एवञ्च विकल्पाश्रयणे सति लक्षणान्तरगतं "येषु पदेषु लुप्यते तानि पदानि प्रवक्ष्यामः"[6] इति वचनं सरलं भवति । ऊष्मा परो यस्मात् स ऊष्मपरः । न घोषवानघोषः । असौ परो यस्मात् स तथोक्तः, तस्मिन्नघोषपरे ॥ १ ॥

विसर्जनीयस्याधिकारोऽनुवर्तते । ऊष्मण्यघोषे वा परत इत्यर्थो न घटते । ऊष्मग्रहणवैयर्थ्यप्रसङ्गात् । हकाराघोषपर इति सिद्धेः, परशब्दाभ्यासवैयर्थ्यं च स्यात् । तस्मात्पाठक-

---

[1] सं. ६-१-६. [2] सं. १-१-१. [3] सं. १-८-१३.
[4] सं. २-३-१. [5] सं. २-२-८.

[6] "अथ यजुस्संहितायामाकारप्लुतपूर्वो घोषवद्यकारोत्तरयकारपरो विसर्जनीयो येषु पदेषु लुप्यते तानि पदानि वक्ष्यामः" इति समानसन्धिनामकग्रन्थस्य प्रथमवचनम्.

मेण ऊष्मणस्साक्षात्परत्वमघोपस्य तु तद्व्यवधानतश्च परत्वमिहाभिमतं वेदितव्यम् । तदयमर्थः—अघोपपर ऊष्मणि परतो विसर्जनीयो लुप्यते । 'अभ्वनस्कभ्नीत'[1] । 'मा वस्तेन ईशत'[2] । 'वायवस्थ'[2] । 'निष्टनिहि'[3] । काण्डमायनस्य ग्रहणं पूजार्थम् । न तु विकल्पार्थम् । केचिद्विकल्पार्थमिच्छन्तो घोपवत्परेऽपि ऊष्मणि परतो लोपमाहुः । 'अत्र वा एतर्हि थक्षश्रितः'[4] । 'स्योनस्योनम्'[5] । तन्न । विकल्पार्थत्वे 'लोपश्शाकल्यस्य'[6] इतिवत्पक्षान्तरे लोपाभावो हि स्यात् । न तु विपयान्तरे लोपः । उत्तरसूत्रापवादोऽयम् ॥ १ ॥

—o—

## अघोपपरस्तस्य सस्थानमूष्माणम् ॥ २ ॥

अघोपपरो विसर्जनीयस्तस्याघोपस्य सस्थानमूष्माणं भजते । यथा—'यः कामयेत'[7] । 'अग्निश्च मे'[8] । 'उलूकश्शशः'[9] । 'अग्निस्ते तेजः'[10] । 'यः पाप्मना गृहीतः'[11] ॥ २ ॥

अघोपेपु परतः विसर्जनीयस्तस्याघोपस्य समानस्थानमूष्माणमादेशं याति । 'अनपगाᳲ कुरुते'[12] । 'वाजश्च प्रसवश्च'[13] । 'शुनं नः फालाः'[14] । 'अग्निश्शुचिव्रततमः'[15] । 'कृष्णश्श्वा चतुरक्षः'[16] । 'रोचना दिवश्श्वथद्व्रम्'[17] । 'पोडशिनष्पोडशित्वम्'[18] ।

[1] सं. १-७-८.
[2] स. १-१-१.
[3] सं. ४-६-६.
[4] स. २-६-९.
[5] सं. १-२-७.
[6] पा. ८-३-१९.
[7] स. २-२-२.
[8] सं. ४-७-६.
[9] सं. ५-५-२८.
[10] सं. १-१-१०.
[11] सं. २-१-३.
[12] सं. १-५-८.
[13] स. १-७-९.
[14] स. ४-२-५.
[15] स. १-३-१४.
[16] सं. ५-६-१९.
[17] सं. ४-३-१३.
[18] स. ६-६-११...

यथा नस्सर्वमिज्जगदयक्ष्मम्[1] । 'तेभ्यस्स्वाहा[2] । 'विप्रियास्स्मः[3] । अघोपपर इति किम्? 'नमो रथिभ्यः[4] ॥ २ ॥

---

## न क्षपरः ॥ ३ ॥

क्षपरो विसर्जनीयः पूर्वविधिं न भजते । यथा—'मनः क्षेमे[5]। 'उभयतःक्ष्णूर्भवति[6] । 'घनाघनः क्षोभणः[7] । 'पूर्वोऽर्धुः क्षीयते[8] । 'द्यौः क्षामा रेरिहत्[9] । क्षकार*स्याघोषत्वात् प्राप्तिः ॥ ३ ॥

क्षपर इत्यकारान्तग्रहणम् । न तु केवलम् । तथा 'शर्परे विसर्जनीयः[10] इति च मूलशास्त्रे स्मर्यते । तदयमर्थः—क्षपरो† विसर्जनीयः परस्य सस्थानमूष्माणं न याति । 'वर्चः क्षत्रियाय[11] । 'द्यौः क्षामा रेरिहत्[9] । 'घनाघनः क्षोभणः[7] । 'मृत्योः क्षेत्राणि[12] । 'उभयतःक्ष्णूर्भवति[6] ॥ ३ ॥



## कपवर्गपरश्चाग्निवेश्यवाल्मीक्योः ॥ ४ ॥

चकारो निषेधाकर्षकः[13] । अग्निवेश्यवाल्मीक्योश्शाखिनोराचार्ययोर्मते कवर्गपरः पवर्गपरो वा पूर्वविधिं नापद्यते । 'यः कामयेत[14] । 'अग्निः पशुरासीत्[15] । ककारश्च पकारश्च कपौ त-

---

1 सं. ४-५-१. 2 सं. १-८-७. 3 सं. ६-२-२.
4 सं. १-५-४. 5 सं. ५-२-१. 6 सं. ५-१-१.
7 सं. ४-६-४. 8 सं. ३-१-७. 9 सं. १-३-१४.
10 पा. ८-३-३५. 11 सं. १-८-१२. 12 सं. ७-२-७.
13 निषेधमाकर्षति. 14 सं. २-१-२. 15 सं. ५-७-२६.
*ककार. †पकारपरे ककारे परतः.

योर्वर्गौ कपवर्गौ तौ परौ यस्मात् स तथोक्तः । एवम्पर इति किं? 'मधुश्च माधवश्च'[1] । 'नमस्तल्प्याय'[2] । 'आशुश्शिशानः'[3] । 'यस्सोमं वमिति'[4] ॥ ४ ॥

कपयोर्वर्गौ कपवर्गौ । तयोः परतो विसर्जनीयः तत्समानस्थानमूष्माणं न याति आग्निवेश्यवाल्मीक्योर्मते । 'यः कामयेत'[5] । 'वायुः पूतः'[6] । आग्निवेश्यादिग्रहणं विकल्पार्थम् ॥४॥

## ऊष्मपर एवैकेषामाचार्याणाम् ॥ ५ ॥

एकेषामाचार्याणां मते ऊष्मपर एव विसर्जनीयः पूर्वविधिं न भजते । यथा—'आशुः शिशानः'[3] । एवकारेण किं? 'मनस्तत्वाय'[7] । 'यः कामयेत'[5] ॥ ५ ॥

केषांचिदाचार्याणां मते ऊष्मण्येव परतो विसर्जनीय स्तन्तमूष्माणं याति । तेन 'पयश्छन्दः'[8], 'शुनं नः फालाः'[9], 'अनपगाः कुरुते'[10] इत्यादौ ऊष्मादेशो न भवति ॥ ५ ॥

## न प्लाक्षिप्लाक्षायणयोः ॥ ६ ॥

कपवर्गपर ऊष्मपरश्च विसर्जनीयः प्लाक्षिप्लाक्षायणयोः शाखिनोः पक्षे न खलु पूर्वविधिं भजते । यथा—'यः कामयेत'[5] । 'यः

[1] सं. १-४-१४. [2] सं. ४-५-९. [3] सं. ४-६-४.
[4] सं. २-३-२. [5] सं. २-१-२. [6] सं. १-८-२१.
[7] सं. ४-३-१. [8] सं. ४-३-१२. [9] सं. ४-२-५.
[10] सं. १-५-८.

पाप्मना[1] । 'आशुः शिशानः'[2] । एक्मपर इति किं ? 'मनस्तत्त्वाय'[3] कपवर्गादिसूत्रत्रयमनिष्टम् ॥ ६ ॥

प्लाक्षिप्लाक्षायणयोर्मते ऊष्मपरो विसर्जनीय ऊष्माणं न याति । किन्तु प्रथमद्वितीयपर एव । नेदं सूत्रत्रयमिष्टम् ॥ ६ ॥

---

## ओकारमस्सर्वोऽकारपरः ॥ ७ ॥

अः सर्वो विसर्जनीयः ओत्वं भजते, अकारपरः । अःसर्व इत्यकारेण सहेत्यर्थः* । 'भेद्धो अग्ने'[4] । 'समिद्धो अञ्जन्'[5] । 'सोऽब्रवीत्'[6] । अः सर्व इति किं ? अन्यथा 'समिद्धो अञ्जन्'[5] इति न सिद्ध्येत् । किन्तु 'वर्णस्य विकारलोपौ' (१–१६) इति विसर्जनीयमात्रस्य स्यादोत्वम् । ततः 'ओकारोकारपरः' इत्योकारे कृते 'औकार आवम्' (९-१९) इत्यावादेशः । तथासति 'समिद्धावञ्जन्'[5] इति स्यात् । किञ्च—'अथ स्वरपरो यकारम्' (९–१०) इति यत्वं वा भवति । तस्मिंश्च 'लुप्येते त्ववर्णपूर्वौ यवकारौ' (१०–१९) इति लुप्ते 'परश्च परश्च' (१०–२९) इति कार्यान्तराप्रसक्तेः 'समिद्ध अञ्जन्'[5] इति स्यात् । तन्मा भूदिति अः सर्व इत्युक्तम् ॥७॥

अःकारस्सर्वः ओकारमादेशं याति अकारे परतः । सर्वग्रहणादकारविसर्जनीययोरयमेकादेशः । 'रेफमेतेषु' (८-६) इत्यस्यापवादः । 'अथ स्वरपरो यकारम्' (९-१०) इत्यस्य च ।

---

[1] सं. २-१-३. [2] सं. ४-६-४. [3] सं. ४-१-१.
[4] सं. ४-६-२. [5] सं. ५-१-११. [6] सं. २-१-२.

*इत्यकारेण सहितो विसर्जनीय इत्यर्थः.

'योऽस्मान्धूर्वति'[1]। 'युष्मानिन्द्रोऽवृणीत'[2]। 'कामेन कृतो अभि'[3]। 'पाथो अपोहि'[4]। अकारपर इति किम्? 'स आऽगच्छत्'[5]। 'यः कामयेत'[6]॥



## घोषवत्परश्च ॥ ८ ॥

चकार ओकारमः सर्वं चान्वादिशति । अः सर्वो घोषवत्परश्च विसर्जनीय ओत्वं भजते । यथा—'मा नो मित्रो वरुणः'[7]। ननु विधौ समाने पृथक्करणमनर्थकमिति चेत्, उत्तरसूत्रे तुशब्दव्याख्यानेन स्फुटीकरिष्यत इति परिहारः ॥ ८ ॥

चशब्देन 'ओकारमस्सर्वः' (९-७) इत्यन्वादिश्यते । अःकारस्सर्व ओकारं याति घोषवत्सु परतः। 'ग्रामण्यो गृहे'[8]। 'अहोरात्रे'[9]। 'सुवो रोहाय'[10]। *अयं 'रेफमेतेषु' (८-६) इत्यस्य, 'अवर्णपूर्वस्तु लुप्यते' (९-९) इत्यस्य चापवादः । 'अकारघोषवत्परः' इत्येकसूत्रे कर्तव्ये पृथक्करणं उत्तरार्थम् ॥ ८ ॥

---

## अवर्णपूर्वस्तु लुप्यते ॥ ९ ॥

अवर्णपूर्वो घोषवत्परस्तु विसर्जनीयो लुप्यते । ह्रस्वपूर्वस्य विकार[11] एव । दीर्घपूर्वस्य प्लुतपूर्वस्य च लोपः । यथा—'देवा गातु-

---

[1] सं. १-१-८. [2] सं. १-१-६. [3] सं. १-१-१४.
[4] सं. ३-३-३. [5] ,, ३-१-५. [6] ,, २-१-२.
[7] ,, ४-६-८. [8] ,, १-८-५. [9] ,, १-३-११.
[10] सं. १-७-९. [11] ओकार.

*घोषवत्पर इति किम्? 'यः कामयेत' (सं. ३-१-२.)

विदः[1] । 'विचित्यस्सोमा३ न विचित्या३ इति'[2] । 'ओकारमः सर्वोऽकारपरः' (९–७) इति अकारपरत्वं प्रत्यक्षं तुशब्देन निवर्त्य आनुमानिकं घोषवत्परत्वं परिगृह्यते, सान्निध्यात् । अस्यानुवर्तनमेवाभीष्टमत्रेति पूर्वसूत्रद्वयस्य पृथक्करणम् ॥ ९ ॥

अत्राकारपर इति नानुवर्तते । किन्तु घोषवत्पर इत्येव । तस्य पृथक्करणसामर्थ्यात् । विसर्जनीयस्त्वधिकृत एव । तदयमर्थः—अवर्णपूर्वो विसर्जनीयो लुप्यते घोषवत्सु परतः । ह्रस्वपूर्वकस्य, *ओत्वविधानाद्दीर्घप्लुतपूर्वकस्य चैष विधिः* । 'अग्निया गर्भम्'[3] । 'या रुचः'[4] । 'सोमा३ न विचित्या३ इति'[2] । मूलशास्त्रे तु 'हलि सर्वेषाम्'[5] इति, 'भो भगो अघो अपूर्वस्य योऽशि'[6] इति च लोपस्स्मर्यते । स इह तुशब्देन निवर्त्यते । न ह्यसाविह विधेयः । अस्मच्छाखादौ तथाविधविषयाभावात् ॥ ९ ॥

---

## अथ स्वरपरो यकारम् ॥ १० ॥

अथशब्दोऽधिकारार्थः[7] । स्वरः परो यस्मात् सोऽयं स्वरपरः । इत उत्तरं यदुच्यते. स्वरपर इत्येवं तत्र निमित्तत्वेनाधिकृतं ज्ञातव्यं सान्निध्यादवर्णपूर्व इति लभ्यते । स्वरपरो विसर्जनीयः अवर्णपूर्वो यकारमापद्यते । यथा—[8]आप उन्दन्तु[16] ।

---

[1] सं. १-१-१३. [2] सं. ६-१-९. [3] सं. ६-६-१.
[4] स. ४-२-९. [5] पा. ८-३-२२. [6] पा. ८-३-१७.
[7] अथेत्ययमधिकारः. [8] स. १-२-१.

'ता अब्रुवन्'[1] । 'नान्वारम्या३ इति'[2] । स्वरपर इति किं? 'आपो वरुणस्य'[3] । अवर्णपूर्व इति किं? 'अग्निरेकाक्षरेण'[4] ॥१०॥

अथ स्वरपर इति स्वरः परनिमित्तत्वेनाधिक्रियते । अवर्णपूर्वस्त्वित्यनुवर्तते । अवर्णपूर्वो विसर्जनीयः स्वरे परतो यकारादेशं याति । 'रेफमेतेषु' (८-६) इत्यस्यापवादः । 'व्रतपा असि देव आ मर्त्येष्वा'[5] । 'विचित्यस्सोमा३ न विचित्या३ इति'[6] । 'इन्द्र एवाजायत'[7] । स्वाप*वादविषये तु न भवति। स्वरपर इति किम्? 'देवो वस्सविता'[8] । 'देवा वसव्याः'[9] । अवर्णपूर्व इति किम्? 'इह बर्हिरासदे'[10] । तुशब्देन 'ओतो गार्ग्यस्य[11]' इति मूलशास्त्रोक्तो विषयो निवर्त्यते । न ह्यत्र यत्वं विधेयम् । अस्मच्छाखादौ तथाविधोदाहरणाभावात् ॥१०॥

---

## एकारोऽयम् ॥ ११ ॥

विसृष्टो विसर्गः[12] । इदमिदानीमुच्यते—स्वरपरः पदान्त एकारः अयमिति विकारमापद्यते । यथा—'इम एवास्मे'[13] 'त एनं भिषज्यन्ति'[14] ॥ ११ ॥

विसर्जनीयाधिकारो निवृत्तः । अन्यस्य कार्यभाजोऽभिधानात् । एकारः अय् इत्येतमादेशं याति स्वरे पदादौ प-

[1] सं. २-३-५. [2] सं. ६-३-८. [3] सं. ५-५-४.
[4] सं. १-७-११. [5] सं. १-२-१४. [6] सं. ६-१-९..
[7] सं. ६-१-२. [8] सं. १-१-१. [9] सं. २-४-८.
[10] सं. २-१-२. [11] पा. ८-३-२०. [12] विसर्गो निवृत्तः.
[13] सं. २-४-१०. [14] सं. २-३-११. *सु ᳚

रतः । 'त आ वहन्ति'[1] । 'नियुत्वत आ लभेत'[2] । स्वरपर इति किम्? 'इषे त्वोर्जे त्वा'[3] ॥ ११ ॥

---

## ओकारोऽवम् ॥ १२ ॥

स्वरपरः पदान्त ओकारः, अवं विकारमापद्यते । यथा—'विष्णवेहीदम्'[4] ॥ १२ ॥

ओकार अव् इत्येतमादेशं याति स्वरे पदादौ परतः । 'वायविष्टये'[5] । 'विष्णवुरुक्रम'[6] । स्वरपर इति किम्? 'विष्णो हव्यꣳ रक्षस्व'[7] ॥ १२ ॥

---

## नाकारपरौ ॥ १३ ॥

द्विवचनसामर्थ्य[8]गृहीतौ सन्निहितावेकारौकारौ अकारपरौ पूर्वविधिं न प्राप्नुतः । यथा—'मा ते अस्याम्'[9] । 'समिद्धो अञ्जन्'[10] । 'तेऽब्रुवन्'[11] इत्यादौ 'एकारोयं,' (९–११) 'लुप्यते त्वकार एकारौकार*पूर्वः' (११–१) इति सूत्रद्वयं प्रसक्तम् । तत्रापि पूर्वत्वात् प्रबलं यत्वविधिं निषेद्धुमय[12]मारम्भः । अकारः परो याभ्यां तावकारपरौ ॥ १३ ॥

---

[1] सं. १-३-२. [2] स. २-१-१. [3] सं. १-१-१.
[4] सं. २-४-१२. [5] सं. २-२-१२. [6] सं. ३-२-१०.
[7] स. १-१-३. [8] सामर्थ्यात्. [9] स. १-६-१२.
[10] स. ५-१-११. [11] स. २-५-१. [12] प्रबलयत्वविधिनिषेधार्थोऽय.

* 'एकारओकार' इति वैदिकाभरणपाठः.

अकारपराविति पदच्छेदः । 'व्याख्यानतो विशेषप्रतिपत्तिः' इति न्यायात् । तदयमर्थः—द्विवचननिर्दिष्टावासन्नावेकारौकारौ अकारे परतः यथोक्तावादेशौ न यातः । 'अपाग्नेऽग्निम्'[1] । 'आरे अस्मे च शृण्वते'[2] । 'ध्रुवोऽसि'[3] । 'प्रियं पाथो अपीहि'[4] । 'अगोअर्यम्'[5] । अकारपराविति किम्? 'वषट् ते विष्णवासः'[6] । 'अग्न इमम्'[7] ॥ १३ ॥

—o—

## ऐकार आयम् ॥ १४ ॥

स्वरपरः पदान्त ऐकारः आयं विकारमापद्यते । यथा— 'आसामहा एवेमो द्वादशौ मासौ'[8] ॥ १४ ॥

ऐकारः आय् इत्यादेशं याति—स्वरे पदादौ परतः ॥ 'हन्तया उ'[9] । 'अन्तरितस्तस्या आ वृश्चेते'[10] । स्वरपर इति किम्? 'यस्मै कं पुने'[11] ॥ १४ ॥

—o—

## औकार आवम् ॥ १५ ॥

औकारः पदान्तः स्वरपर आवं विकारमापद्यते । यथा— 'अहावनदता हते'[12] ॥ १५ ॥

---

[1] सं. १-१-७. [2] तं. १-५-५. [3] सं. १-६-२.
[4] „ १-२-३. [5] „ ६-१-१०. [6] „ २-२-१२.
[7] सं. १-२-८. [8] „ ७-५-२. [9] „ १-२-१४.
[10] सं. १-३-८. [11] सं. १-२-१. [12] सं. २-६-१.

औकारः आव् इत्यादेशं याति—स्वरे पदादौ परतः। 'उभादातारविषा॰ रयीणाम्'[1] । 'तावब्रूताम्'[2] । स्वरपर इति किम्? 'तौ देवा अब्रुवन्'[3] ॥ १५ ॥

---

## उकारोऽपृक्तः प्रकृत्या वकारोऽन्तरे ॥ १६ ॥

अपृक्तसंज्ञक उकारः स्वरपरः प्रकृत्याऽवतिष्ठते । अविकृतो भवतीत्यर्थः । उकारस्वरयोरन्तरे मध्ये वकारश्चागमो भवति । यथा—'स उवेकविंश॰शवर्तनिः'[4] । 'अदन्त्युवेवास्य मनुष्याः'[5]। अपृक्त इति किं? 'स्वपत्याय देव'[6] । उकार इति किं? 'भक्षेहि'[7] ॥ १६ ॥

अपृक्तसंज्ञ उकारः स्वरे पदादौ परतः प्रकृत्या भवति। न तु वक्ष्यमाणं विकारं याति। किञ्च—तस्योकारस्य परस्वरस्य च मध्ये वकार आगमो भवति । 'अदन्त्युवेवास्य'[5]। 'उविरयु'[5] । उकार इति किम्? 'उपभृदेहि'[8]। अपृक्त इति किम्? 'यन्मध्वग्नौ जुहोति'[9]। 'उकारः[10] प्रकृत्या वकारोऽन्तरे' इति वक्ष्यामि । एवं च शब्दलाघवं भवति । पदग्रहणपरिभाषया अतिप्रसङ्गश्च निवार्यते । किमपृक्तसंज्ञया? अत्रोच्यते। 'उकारः प्रकृत्या' इत्युक्तेऽपि 'अन्वह मासा अन्विद्वनानि'[11]

---

[1] स. १-२-१८. [2] सं २-६-७. [3] स. ६-४-९. [4] सं. ४-३-१.
[5] स. २-३-२. [6] ,, ५-५-४. [7] ,, ३-२-५. [8] १-१-१२.
[9] ,, २-३-२. [10] यदेव 'उकारः [11] ,, १-७-१३.

इत्यादावतिव्याप्तिः 'अन्कारादि च' (१-६३) इति वचनात् । तस्मादपृक्तसंज्ञया भाव्यम् । सा तु वर्णस्यैवेति न तत्र 'अन्कारादि च' (१-६३) इति परिभाषा प्रवर्तते । नन्वयमागमः 'त्रपुमिधुपूर्वः' (५-४) इत्याद्यागमसमीपे किं नोक्तः, 'अपृक्तोकारपूर्वो वकारस्स्वरपरः' इति? तदुच्यते परस्वरनिमित्तकस्यादेशस्यायमपवाद इति आदेशप्रकरण एवोचितो वक्तुमिति ॥ १६ ॥

## न तत्तस्मात्सा१ंहितः ॥ १७ ॥

तत्, तस्मात् इत्येताभ्यां सांहित उकारोऽपृक्तः पूर्वविधिं न प्राप्नोति । प्रकृत्या अवस्थानं, वकारागमश्च न भवतीत्यर्थः । 'तद्वाहुरुत्सृज्यम्'[1] । 'तस्माद्वाश्यम्'[2] । 'इवर्णोकारौ यवकारौ' (१०-१५) इति दशमेऽस्य विधिर्वक्ष्यते । तत् तस्मात् सा१ंहित इति किं? 'तत, उ, आहुः—तदु । उवाहुः'[1] । 'तस्मात्, उ, आश्यम्—तस्मादु । उवाश्यम्'[2] ॥ १७ ॥

संहितः कृतसन्धानः । स एव सांहितः । तत् तस्मात् इत्येताभ्यां द्वाभ्यां पदाभ्यां सांहित उकारोऽपृक्तः स्वरे परतः प्रकृतिभावं वकारागमं च न याति । 'तद्वाहुः'[1] । 'तस्माद्वाश्यम्'[2] । तत्तस्मादिति किम्? 'स उवेकविंशवर्तनिः'[3] । सांहित इति किम्? तत्तस्मात्पूर्व इत्युक्ते तयोरुपबन्धत्वात्पृथग्भावेऽपि निषेधः स्यात् । यथा क्रमाध्याये—'तदु—उवाहुः'[1] । 'तस्मादु—उवाश्यम्'[2] । संहितावस्थायामेवेष्यतेऽयं प्रतिषेधः । तदर्थं सांहितवचनम् ॥ १७ ॥

---

[1] सं. ७-५-७. [2] सं. ६-२-११. [3] सं. ४-३-३.

## ह्रस्वपूर्वो ङकारो द्विवर्णम् ॥ १८ ॥

स्वरपरो ङकारः पदान्तवर्ती ह्रस्वपूर्वो द्विवर्णो द्वित्वं भजते । यथा—'न्यङ्ङग्निः'[1] । 'त्वा दध्यङ्ङृषिः'[2] । ह्रस्वपूर्व इति किं? 'पराङावर्तते'[3] । स्वरपर इति किं? 'सध्रयङ्समानैः'[4] । 'प्रत्यङुपडहः'[5] । ह्रस्वः पूर्वो यस्मादसौ ह्रस्वपूर्वः । द्वयोर्वर्णयोः समाहारः, द्विवर्णम् ॥ १८ ॥

ह्रस्वपूर्व इति कार्यभाज एवायं निर्देशः । न निमित्तस्य; परस्वरनिमित्तत्वात् । न चोपबन्धस्य; तस्य पृथग्भावायोगात् । तदयमर्थः—ह्रस्वात्परो ङकारो द्विवर्णं याति, स्वरूपद्वित्वं याति स्वरे पदादौ परतः । 'प्रत्यङ्ङुपतिष्ठते'[6] । 'त्वा दध्यङ्ङृषिः'[2] । 'युङ्ङसि'[7] । 'प्रतिदङ्ङिति प्रति-दङ्ङ'[8] । ह्रस्वपूर्व इति किम् । 'अवाङपानः'[9] । ङकार इति किम्? 'शुगसि तमभि'[10] । स्वरपर इति किम्? 'प्रत्यङ्क्सोमो अतिद्रुतः'[11] ॥ १८ ॥

---

## नकारश्च ॥ १९ ॥

नकारः पूर्वनिमित्तं द्वित्वं चान्वादिशति । ह्रस्वपूर्वो नकारो द्विवर्णं भजते स्वरपरः । यथा—'निरवपन्निन्द्राय'[12] ।

---

[1] स. ६-५-३. [2] सं. ४-१-३. [3] स. ३-२-९. [4] सं. २-२-८.
[5] ,, ७-४-२. [6] ,, १-५-९. [7] ,, १-८-१६. [8] स. १-८-१३.
[9] स. ६-३-१. [10] स. १-३-११. [11] स. १-८-२१. [12] सं २-४-२.

'अन्नुवन्नभ्रवत्'[1] । एवम्पर इति किं? 'निरवपन् यान्येव पुरस्तात्'[2] । 'ओमन्वती ते'[3] । एवम्पूर्व इति किं? 'यानग्नयोऽन्वतप्यन्त'[4] । 'विद्वानेतमग्निं चिनुते'[5] ॥ १९ ॥

नकारः 'ह्रस्वपूर्वो द्विवर्णम्' (९–१८) इत्यन्वादिशति । ह्रस्वात्परो नकारः स्वरे पदादौ परतः स्वरूपाद्वित्वं याति । 'दक्षिणमुद्यमुद्यन्तम्'[6] । 'अस्मिन्नेव लोके'[7] । ह्रस्वपूर्व इति किम्? 'ताननुहोत्'[8] । नकार इति किम्? 'उशिगसि'[9] । स्वरे परतः इति किम्? 'अस्मिन् योनौ'[10] । पदादाविति किम्? 'प्रजावतीरनमीवाः'[11] । पृथक्सूत्रकरणमुत्तरार्थम् ॥ १९ ॥

---

## अनितिपरो ग्रहोख्ययाज्यापृष्ठ्यहिरण्यवर्णीयेष्वीकारोकार*पूर्वो रेफमाकारपूर्वश्च यकारम् ॥ २० ॥

ग्रहोक्थ्यादिषु विषयेषु ईकारपूर्व ऊकारपूर्वो वा नकाराकृष्टो नकारः अनितिपरः इतोप्येऽ§तस्मादन्यस्वरपरो रेफमापद्यते, आकारपूर्वश्चेद्यकारमापद्यते । ग्रहो नाम चतुरोऽन्त्याननुवाकान् वर्जयित्वा 'आददे ग्रावा'[12] इति प्रश्नः । अग्निकाण्ड[13]स्याद्यं प्रश्नद्वयं

[1] सं. १-५-१. [2] सं. २-४-१. [3] सं. २-६-९.
[4] सं. ३-२-८. [5] सं. ५-६-६. [6] सं. १-२-७.
[7] ,, २-६-२. [8] ,, ३-४-४. [9] ,, १-३-१.
[10] सं. १-५-६. [11] सं. १-१-१. [12] सं. १-४-१.
[13] चतुर्थकाण्ड. § इतोऽत्ये. * 'प्यांकारऊकार' इति वैदिकाभरणपाठः.

उत्तमानुवाकवर्जं, उक्थ्यं, इत्याख्यायते । उक्ता याज्याः[1] । 'समिद्दिशाम्,'[2] 'जीमूतस्य,'[3] 'यदक्रन्दः,'[3] 'मा नो मित्रः,'[3] 'ये वाजिनम्,'[3] 'अग्नेर्मन्वे,'[4] 'समिद्धो अञ्जन्,'[5] 'गायत्री,'[6] 'कस्त्वा'[6] इत्यनुवाकनवकं पृष्ठ्यामिति पठ्यते । 'हिरण्यवर्णाः'[7] इत्यनुवाकः हिरण्यवर्णीयः । ग्रहे यथा—'जहि शत्रूꣳरपमृधः'[8] । 'मरुत्वाꣳइन्द्र'[9] । उक्थ्ये यथा—'ये वा वनस्पतीꣳरनु'[10] । 'मधुमाꣳअस्तु सूर्यः'[11] । याज्यासु यथा—'ऋतूꣳरृतुपते'[12] । 'अमवाꣳइभेन'[13] । पृष्ठ्ये यथा—'शत्रूꣳरनपव्ययन्तः'[14] । 'जवनाꣳउप जिघ्नते'[14] । हिरण्यवर्णीये यथा—'अग्नीꣳरप्सुषदः'[7] । 'सर्वाꣳअग्नीन्'[7] । अनितिपर इति किं? 'अभ्यवर्तन्त दस्यून्, दस्यूनिति दस्यून्'[15] । 'इडावानितीडा—वान्'[16] । ग्रहादिष्विति किं? 'त्रीनिमाँल्लोकानिति'[17] । 'पशूनेवाव रुन्धे'[18] । 'तानिन्द्रोऽन्तर्यामेणान्तरधत्त'[19] । इतिः परो यस्मादसावितिपरः, न इतिपरः, अनितिपरः ॥ २० ॥

इतिपरादन्योऽनितिपरः । ग्रहा नाम 'आददे ग्रावाऽसि'[20]

---

[1] अध्या ३ सू. ९. [2] सं. ४-४-१२. [3] सं. ४,६,६-९.

[4] स. ४-७-१६. [5] स. ६-१-११. [6] सं. ५,२,११-१२.

[7] स. ५-६-१. [8] स. १-४-४२. [9] सं. १-४-१९.

[10] स. ४-२-८. [11] ,, ४-२-९. [12] स. २-३-१३.

[13] स. १-२-१८. [14] ,, ४-६-६. [15] स. १-६-२२.

[16] ,, ३-२-१२. [17] ,, ७-३-२. [18] ,, ५-१-१.

[19] ,, ६-४-६. [20] ,, १-३-१.

इत्यादयः षट्त्रिंशदनुवाकाः । एषामन्त्यः 'सजोषा इन्द्र'[1] इत्यनुवाकः । उख्यं नाम अग्निकाण्डस्यादितः प्रश्नद्वयं याज्यानुवाकव्यतिरिक्तम्—'युञ्जानः प्रथमम्'[2] इत्यादिदशानुवाकाः, 'विष्णोः क्रमोऽसि'[3] इत्यादिदश च, एषामन्त्यः 'आदित्यं गर्भम्'[4] इत्यनुवाकः । याज्या उक्ताः[5] । पृष्ठ्यं अश्वमेधकाण्डस्य आदितो नवानुवाकाः—'समिद्दिशाम्'[6] इत्येषः, 'जीमूतस्य'[7] इति चत्वारः, 'अग्नेर्मन्वे'[8] 'समिद्धो अञ्जन्'[9] इत्येतौ, 'गायत्री त्रिष्टुप्'[10] 'कस्त्वा छ्यति'[10] इति द्वौ चेति । 'हिरण्यवर्णाश्शुचयः पावकाः'[11] इत्यनुवाको हिरण्यवर्णीयः । 'अध्यायानुवाकयोर्लुक्'[12] इति लुक इहाभावश्छान्दसः । सूक्तं वा त्रयोदशर्चं हिरण्यवर्णीयम् । ईकार ऊकारपूर्व इति कार्यभाज एव निर्देशः । आकार पूर्व इति च । प्रकृतिभावस्तु छान्दसः असन्देहार्थः, चशब्द इह यकारादेशसमुच्चयार्थः । ग्रहोख्यादिषु ईकारादूकाराच्च परो नकारोऽनितिपरो रेफमादेशं याति, आकारपूर्वश्च यकारं स्वरे पदादौ परतः । ग्रहेषु यथा—'शत्रूꣳरपमृध'[1] । 'घृष्टिमाꣳ इव'[13] । उख्ये यथा—'पुष्टिमाꣳ असि'[14] । 'ये वा वनस्पतीꣳरनु'[15] । याज्यासु यथा—'येभिर्देयाꣳ ऋतुभिः कल्पयाति'[16] । 'स त्रीꣳरेकादशाꣳ इह'[17] । पृष्ठ्येषु यथा—'क्षिणन्ति शत्रूꣳरनपव्ययन्तः'[7] । 'अस्माꣳरदितेरनागाः'[8] । हिरण्यवर्णीयेषु यथा—'सर्वाꣳ अग्नीꣳरप्सुषदः'[11] ।

[1] सं. १-४-४२. [2] सं. ४-१-१. [3] सं. ४-२-१.
[4] सं. ४-२-१०. [5] अध्या ३ सू. ९. [6] ,, ४-४-१२.
[7] सं. ४-६-६. [8] ,, ४-७-१५. [9] सं ५-१-११.
[10] ,, ६,२,११-१२. [11] सं. ५-६-१. [12] ,, पा. ६-२-६०.
[13] सं. १-४-२०. [14] ,, ४-२-५. [15] सं. ४-२-८.
[16] सं. १-१-१४. [17] सं. ३-२-११.

अनितिपर इति किम्? 'वृष्टिमानिति वृष्टि—मान्'[1]। 'सुवाति तान्। तानिति तान्'[2]। 'अपयानिति'[3]। अहोख्यादिष्विति किम्? 'तद्यतीनपावपत्'[4]। 'पशूनेवाव रुन्धे'[5]। 'तानजुहोत्'[6]। एतत्पूर्व इति किम्? 'उत्तिष्ठोजसा'[7] ॥ २० ॥

—o—

## मर्त्यानुदयानमृतान्दुर्यानसो[8]मपूर्वः सोऽस्मानविमान्गोमान्मधुमान्हविष्मान्हूतमानार्षेचिकित्वानिडावान्कक्षीवान्वाणवान्हिपयस्वान्वशान्विदत्रानमित्रानरान्पोषान्महांश्च ॥ २१ ॥

मर्त्यान्, उदयान्, अमृतान्, दुर्यान् असोमपूर्वः, सो अस्मान्, अविमान्, गोमान्, मधुमान्, हविष्मान्, हूतमानार्षे, चिकित्वान्, इडावान्, कक्षीवान्, वाणवान्, हि पयस्वान्, वशान्, विदत्रान्, अमित्रान्, अरान्, पोषान्, महान् एतेषु ग्रहणेषु नकारोऽनितिपरो यकारमापद्यते । अनितिपरत्वाकर्षकोऽयं चकारः । *विषयाननादृत्य सर्वार्थोऽयमितःपरमारम्भः* । *यथा*—'मर्त्याँ आ विवेश'[9] । 'उदयाँ अजस्रम्'[10] । उदिति किं? 'वयोभिरेवायानव रुन्धे'[11] । 'उदस्थाममृताँ अनु'[12] । 'भद्रान्दुर्याँ अभ्येहि'[13] । न सोमपूर्वः दुर्यान् इत्यत्र नकारः सोमपूर्वो यत्वं

[1] सं. १-४-२०. [2] स. ४-१-१. [3] स. ४-२-६. [4] स. ३-२-७.
[5] स. ५-२-२. [6] स. ३-४-४. [7] स. २-४-३०. [8] न्दुर्यानसो.
[9] स. ५-७-६. [10] स. ४-६-३ [11] सं. ५-२-१०. [12] स. १-२-८.
[13] स. १-६-३.

नापद्यते । 'प्र चरा सोम दुर्यानदित्याः'[1] । 'सो अस्माꣳ अधिपतीन्करोतु'[2] । मो इति किं? 'इन्द्रो अस्मानस्मिन्'[3] । 'अविमाꣳ अश्वी'[12] । 'गोमाꣳ अग्ने'[12] । 'मधुमाꣳ इन्द्रियावान्[4]' । अविगोमध्विति किं? 'पशुमानिव भवति'[5] । 'हविष्माꣳ आ विवासति'[6] । हूतमानार्षे, हूतमानित्यत्र नकार आर्षे स्वरपरः यत्वं भजते । 'देवहूतमाꣳ इत्युखायाम्'[7] । आर्ष इति किं? 'देवहूतमानिति देव-हूतमान्'[7] । आर्षग्रहणसामर्थ्यादितिपरत्वेऽपि यत्वं भवति । आर्ष इति काकाक्षिवदुभयत्र सम्बध्यते, ग्रहेष्वादि-महान्पर्यन्तम् । आर्षः स्वयम्पाठ इत्यर्थः । 'चिकित्वाꣳ अनुमन्यताम्'[9] । 'इडावाꣳ एषः'[2] । 'कक्षीवाꣳ औशिजः'[10] । 'विशल्यो बाणवाꣳ उत'[11] । इडाकक्षीवाणेति किं? 'करोति रसवानिव भवति'[12] । 'असृक्ष्महि । पयस्वाꣳ अग्ने'[13] । हीति किं? 'ऊर्जस्वान्पयस्वानित्याह'[14] । आर्षे इतिपरत्वान् 'देवहूतमाꣳ इत्युखायां जुहोति'[7] इतिवद्यत्वप्राप्तिर्हिग्रहणेन प्रतिषिद्ध्यते 'स्तुतो यासि वशाꣳ अनु'[15] । 'सुविदत्राꣳ अपि'[15] । 'अमित्राꣳ अपबाधमानः'[16] । 'अराꣳ इवाग्ने'[17] । 'पोपाꣳ अपुष्यत्'[18] । 'अग्ने महाꣳ असि'[17] ॥

---

[1] स. ५-२-१०. [2] स. १-६-६. [3] स. ३-१-९. [4] स. ३-१-१०.
[5] ,, ६-२-६. [6] स. १-३-१२. [7] स. ६-५-३. [8] काकाक्षिन्यायेनो.
[9] सं. ३-१-४. [10] सं. ५-६-५. [11] ,, ४-५-१. [12] सं. २-२-४.
[13] सं. १-४-४६. [14] सं. १-७-३. [15] सं. १-८-५. [16] सं. ४-६-४.
[17] सं. ३-२-५. [18] सं. ७-१-५.

'मर्त्यान्' इत्यादिषु आकारात्परो नकारोऽनितिपरः स्वरे पदादौ परतो यकारं याति । ग्रहोब्ध्यादिव्यतिरिक्तदेशार्थमिदं सूत्रं परं च । मर्त्यान्—'मर्त्यां॑ आविवेश'[1] । उदयान्—'उदयां॑ अजस्रम्'[2] । उदिति किम्? 'वयोभिरेवायानव रुन्धे'[3] । अमृतान्—'उदस्थाममृतां॑ अनु'[4] । दुर्यांश्च सोमपूर्वः—'सुवाग्देव दुर्यां॑ आ वद'[5] । सोमपूर्वस्तु नायं यकारं याति । 'प्र चरा सोम दुर्यानदित्याः'[6] । सो अस्मान्—'वयं मा सो अस्मां॑ अवहाय'[7] । सो इति किम्? 'प्रदातारस्सोऽस्मानमुत्र'[7] । अविमान्—'अविमां॑ अश्वी'[8] । गोमान्—'गोमां॑ अग्ने'[8] । मधुमान्—'मधुमां॑ इन्द्रियावान्'[9] । अविगोमध्वित्युपबन्धैः किम्? 'पशुमानेव भवति'[10] । हविष्मान्—'हविष्मां॑ आ विवासति'[11] । हुतमानार्थे—'देवहूतमां॑ इत्युख्यायां जुहोति'[12] । 'युक्ष्वा हि देवहूतमां॑ अश्वां॑ अग्ने'[13] इत्यत्र तुल्ययाज्यान्तर्भावात्सिद्धम् । अग्न्युपानुवाक्ये तु न सिद्ध्यतीत्यप्राप्तप्रापणार्थं हुतमान्ग्रहणम् । तत्र यथा त्रैशिके भवति, एवं पदकाल[14]प्रक्षिप्तेऽपीति-शब्दे परतः स्यात्, तन्निवारणार्थमिहार्षग्रहणम् । ऋषिर्वेदः । यथा अग्न्युपानुवाक्ये समाम्नायते—'एतं॑ ह वाव तदविरभ्यनूवाचेन्द्रो दधीचो अस्थभिरिति'[15] इति । महाभाष्येऽप्युक्तम् । "ऋषिर्वेदः पठति—'शृणोत ग्रावाणः'[16] इति" इति । ऋषौ भवः सन्धिरार्षो वैदिकः अपौरुषेयसन्धिरित्यर्थः । तत्रैवाप्राप्तप्रापणं

[1] स. ५-७-९. [2] स. ४-६-३. [3] सं. ५-२-१०.
[4] सं. १-२-८. [5] ,, १-२-१३. [6] सं. १-२-१०.
[7] स. ६-६-१. [8] सं. १-६-६. [9] सं. ३-१-१०.
[10] सं. ६-२-६. [11] स. १-३-१२. [12] ,, ६-५-३.
[13] स. २-६-११. [14] पदकार. [15] ,, ५-६-६.
[16] स. १-३-१३.

हूतमान्ग्रहणेन क्रियते, न सर्वत्र । ततः—'देवहूतमानिति देव—हूतमान्'[1] इति विभज्यानुवादार्थे इतिशब्दे परतः न यकारादेशः । ये तु विभक्तपदात्मको वेद इत्याहुः, तेषां सर्वेऽपि पदसन्धयः पौरुषेयास्स्युः । ततश्च आर्ष इति निर्विषयं स्यात् । ऋषिभिः कृतस्सन्धिरार्ष इति व्युत्पत्त्याश्रयणे तु विभज्यानुवादार्थेऽपि तथात्वमस्तीति व्यावर्त्याभावादार्षग्रहणमनर्थकं स्यात्, अनिष्टं च न निवर्ततेत्यास्तामेतत् ॥ चिकित्वान्—'चिकित्वा२ अनु मन्यताम्'[2] । इडावान्—'इडावा२ एषो असुर'[3] । कक्षीवान्—'कक्षीवा२ औशिजः'[4] । वाणवान्—'वाणवा२ उत'[5] । इडाकक्षीवाणेति किम्? 'स्ववानेव भवति'[6] अत्र मान् वान् इत्यनयोः प्रत्युपबन्धपाठः वैचित्र्यात्मको विस्पष्टार्थः । हि पयस्वान्—'असृक्ष्महि । पयस्वा२ अग्ने'[7] । हीत्युपबन्धस्य व्यावर्त्यं शाखान्तरे । 'ऊर्जस्वान्पयस्वानित्याह'[8] इति तु न प्रत्युदाहरणम्, इतिपरत्वात् । न च 'अनितिपरः'(९-२०) इत्यनेन पौरुषेयस्यैवेतिकरणस्य पर्युदासः, अविशेषनिर्देशात् । 'हूतमानार्षे' इत्यार्षग्रहणस्य वैयर्थ्यप्रसङ्गाच्च । वशान्—'वशा२ अनु'[9] । विद्वान्—'सुविद्वा२ अर्पित'[9] । अमित्रान्—'अमित्रा२ अपबाधमानः'[10] । अरान्—'अरा२ इवाग्ने'[11] । पोषान्—'पोषा२ अपुष्यत्'[12] । महान्—'अग्ने महा२ असि'[13] । आकारपूर्वं इत्येतदुत्तरार्थमिहानुवर्तते ॥ २१ ॥

---

[1]सं. २-६-११. [2]सं. ३-१-४. [3]सं. १-६-६.
[4]सं. ५-६-५. [5]सं. ४-५-१. [6]स. ३-१-२.
[7]सं. १-४-४५. [8]सं. १-७-३. [9]सं. १-८-५.
[10]सं. ४-६-४. [11]सं. २-५-९. [12]ब्रा ७-१-९.

## इन्द्रोमेऽकरूद्धमिहाऽप्येत्वगन्मेडेन्यानायजिष्ठआचर्त्वकुर्वतादुहददितिरग्रेऽधरान्थ्सपत्नानलम्परश्च ॥ २२ ॥

इन्द्रो मे, अकः, ऊर्द्धं, इहा, अप्येतु, अगन्म, ईडेन्यान्, आयजिष्ठः, आच, ऋतु, अकुर्वत, अदुहत्, अदितिः, अग्रे, अधरान्थ्सपत्नान्, अलं इत्येवम्परो नकार आकारपूर्वो यकारमापद्यते। चकार आकारपूर्वत्वाकर्षकः। यथा—"सपत्नाँ इन्द्रो मे"[1]। मे इति किम्? 'युष्मानिन्द्रोऽवृणीत'[2]। 'निग्राभेणाधराँ अकः'[1]। 'यूयं देवाँ ऊर्द्धम्'[3]। 'अग्ने देवाँ इहा वह'[4]। दीर्घेण किम्? 'यज्ञियानिह यान् हवामहे'[5]। 'घर्मो देवाँ अप्येतु'[5]। एत्विति किम्? 'विद्वानपि जन्येषु'[6]। 'सुवर्देवाँ अगन्म'[7]। 'ईडामहे देवाँ ईडेन्यान्'[8]। 'देवाँ आयजिष्ठस्स्वस्ति'[9]। 'देवाँ आ च वक्षत्'[10]। यजिष्ठश्चेति किम्? 'यानाऽवह उशतः'[11]। 'वाजो देवाँ ऋतुभिः'[12]। 'विता कामाँ अकुर्वत'[13]। 'यज्ञोऽसुराँ अदुहत्'[14]। 'विवस्वाँ अदितिः'[15]। 'अग्निस्ताँ अग्रे'[16]।

---

[1] सं. १-३-१३. [2] सं. १-१-५. [3] सं. १-३-८.
[4] सं. १-३-१४. [5] स १-६-१०. [6] सं. ६-१-६.
[7] स. १-७-९. [8] सं. २-६-९. [9] स. ४-३-१३.
[10] सं. ४-६-३. [11] सं. १-४-४४. [12] .. ४-७-१२.
[13] .. १-५-९. [14] .. १-७-१. [15] सं. १-६-३.
[16] ,, ३-१-४.

'अन्याꣳ अधरान्त्सपत्नान्'[1] । सपत्नानिति किम्? 'भ्रातृव्यानधरान्पादयामि'[2] । 'पुरोडाशाꣳ अलङ्कुर्विति'[3] । अन्वादेशः किमर्थः? 'परिधीनकुर्वत'[4] । तत्तत्पदग्रहणे कर्तव्ये परपदग्रहणम्, अनार्षेऽपि संहिताविधावग्रहणस्य च यत्वं स्यात् इति, नैमित्तिकस्य च निमित्तापेक्षत्वात् । ग्रहणस्य यथा—'अमर्त्यो मर्त्याꣳ आ विवेश—मर्त्याꣳ अमर्त्यः'[5] । 'उदस्थाममृताꣳ अनु—अमृताꣳ अस्थाम्'[6] । एवं नैमित्तिकस्य ग्रहणस्य—'अग्नेऽविमाꣳ अश्वी—अविमाꣳ अविमाꣳ अग्ने'[7] । 'उदयाꣳ अजस्रं—उदयाꣳ अयाꣳ उदुदयान्'[8] । एवमग्रहणस्य नैमित्तिकस्य—'अग्निस्ताꣳ अग्ने—ताꣳ अग्निः'[9] । 'अन्याꣳ अधरान्त्सपत्नान्—अन्याꣳ अधरानधरानन्याꣳ अन्याꣳ अधरान्'[11] । एवं सर्वत्र नकारस्य यकारोत्पत्तिर्द्रष्टव्या ॥ २२ ॥

इन्द्रो मे इत्यादिषु स्वरेषु पदादिषु परतः आकारपूर्वो नकारो यकारं याति । इन्द्रो मे—'सपत्नाꣳ इन्द्रो मे'[10] । स इति किम्? 'वृद्धानिन्द्रः'[11] । अक—'अधराꣳ अकः'[10] । ऊढ्वम्—'देवाꣳ ऊढ्वम्'[12] । इहा इत्यस्योदाहरणं शाखान्तरे । आ इत्युपबन्धेन किम्? 'यज्ञियानिह यान् हवामहे'[13] । अप्येतु—'ते-

---

[1] सं. ३-२-८. [2] स. ३-५-३. [3] सं. ६-३-१.
[4] सं. ६-२-१. [5] स. ६-७-६. [6] सं. १-२-८.
[7] स. १-६-६. [8] सं. ४-६-३. [9] सं. ३-१-४.
[10] सं. १-१-१३. [11] स. २-३-२. [12] ,, १-३-८.
[13] ,, १-६-१०.

न यज्ञो देवाँ अप्येतु[1]। एत्विति किम्? 'वल्यज्ञानपीध्मे'[2] अगन्म—'सुवर्देवाँ अगन्म'[3]। ईडेन्यान्—'देवाँ ईडेन्यान्'[4]। आयजिष्ठः इत्यस्योदाहरणं शाखान्तरे। आ च—'देवाँ आ च वक्षत्'[5] यजिष्ठः, च, इत्युपबन्धाभ्यां किम्? 'यानाऽवह उशतः'[6]। क्रतु—'देवाँ क्रतुभिः'[7]। अकुर्वत—'कामाँ अकुर्वत'[8]। अदुहत्—'यज्ञोऽसुराँ अदुहत्'[9]। अदितिः—'विवस्वाँ अदितिः'[10]। अग्रे—'अग्निस्ताँ अग्रे'[11]। अधरांथ्सपत्नान्—'अन्याँ अधरान्थ्सपत्नान्'[12]। सपत्नानिति किम्? 'भ्रातृव्यानधरान्'[13]। अलम्—'पुरोडाशाँ अलङ्कुर्विति'[14]। आकारपूर्व इत्यनुवृत्त्या किम्? 'ते कार्ष्मर्यमयान्परिधीनकुर्वत'[15]। अत्र 'मर्त्यानुदयान्' (९–२१) इत्यादिवत्कार्यभाजां ग्रहणे कर्तव्ये निमित्तानां ग्रहणं ग्रन्थलाघवार्थम्। तथाहि—यत्र निमित्तविशेषग्रहणाभावेऽपि कार्यं सिद्ध्यति, तत्र कार्यभाजश्चैव पदानि निरुपबन्धानि सोपबन्धानि वा गृह्यन्ते, न तु निमित्तविशेषाः, यथा—'मर्त्यानुदयान्' (९–२१) इति। यत्र तु कार्यभाजां अग्रहणेऽपि कार्यं सिध्यति, तत्र निमित्तविशेषा एव निरुपबन्धाः सोपबन्धा वा गृह्यन्ते। यथा—'कृधिपिन्वपथेपरः' (८–२५) 'न सकपकारपरे' (८–२६) इति। एवं कार्यभाङ्गिमित्तयोरन्यतरस्य ग्रहाणाद्ग्रन्थलाघवं भवति। तद्यथा—कार्यभाग्भ्याग्रहणे निमित्ताग्रहणाल्लाघवं स्यात्। निमित्तभेदेऽपि कार्यसिद्धिश्च।

| | | |
|---|---|---|
| 1 सं. १–६–२. | 2 सं. २–२–८. | 3 सं. १–७–९. |
| 4 ,, २–६–९. | 5 ,, ४–६–३. | 6 ,, १–४–४४. |
| 7 ,, १–१–१४. | 8 ,, १–५–९. | 9 ,, १–७–१. |
| 10 ,, १–६ ३. | 11 ,, ३–१–४. | 12 ,, ३–२–८. |
| 13 ,, ३–५–३. | 14 ,, ६–३–१. | 15 ,, ६–२–१. |

यथा दुर्यानिति—'दुर्यां२ आ वद'[1]। 'दुर्यां२ अभ्येहि'[2]। निमित्तमात्रग्रहणेऽपि कार्यभाजोऽनुपादानाल्लाघवं कार्यभाग्भेदेऽपि कार्यसिद्धिश्च। यथा आवृत्पर इति—'जिन्वरावृत्स्वाहा'[3]। 'उग्ररावृत्स्वाहा'[3]। यत्र तु कार्यभाङ्मात्रग्रहणे निमित्तभेदो न सम्भवति, निमित्तमात्रग्रहणे च कार्यभाग्भेदः, तत्रेतराप्रयोगकृतमेव लाघवं लभ्यते नान्यत्। यथा—'देवते, मेध्ये, तृण्णे, तृचे' (४–११) इति, 'द्वारौ...चरावः...परः' (४–३८) इति च। ततश्च येषां पदानां त्रिविधेऽपि समाम्नाये निमित्तभेदः कार्यभाग्भेदो वा न सम्भवति, तेष्वपीतराप्रयोगकृतस्य ग्रन्थलाघवस्यास्तित्वध्रौव्यात्, जटायां निमित्तभेदकार्यभाग्भेदयोरपि छान्दसं कार्यं नापादनीयम्। अन्यथोपपन्नत्वात्। ततश्च 'मर्त्यान्' (९–२१) इत्यादेः पूर्वपदेन व्युत्क्रमणसन्धौ यकारादेशो न भवति। 'अमर्त्यो मर्त्यान्मर्त्यानमर्त्योऽमर्त्यो मर्त्यान्'[4]। 'इन्द्रो मे' (९–२२) इत्यादेश्च परपदेन व्युत्क्रमणसन्धौ यत्वं न भवति। 'अकुर्वत वरुणप्रघासा-न्वरुणप्रघासानकुर्वताकुर्वत वरुणप्रघासान्'[5]। न ह्यसमाम्नातेषु सन्धिषु युक्तं छान्दसं कार्यं, समाम्नानबललभ्यं हि तदित्युक्तमेव[6]। न हि तत् शास्त्रतात्पर्यविदो विपहन्ते। तथा हि—'अशान्तावास्तां ते देवाः'[7] इत्यत्र—'आस्तां ते त आस्तामास्तां ते'[7] इत्यस्यां जटायां तेशब्दे प्रग्रहसंज्ञाप्रकृतिभावावपक्षोऽपि नानुमन्यते। किमुत शास्त्रतात्पर्यविदास्तिकः? तस्मादेवंजातीयके वालिशभावितं छान्दसकार्यं जटायां अभ्यु-

---

[1] सं. १-२-१३. [2] सं. १-६-३. [3] सं. २-४-७.
[4] सं. ५-७-९. [5] सं. १-२-२. [6] समाम्नानबलविहितमेव.
[7] सं. २-५-८.

पगच्छन्तो बाल्दे*ष्टिका अल्पज्ञास्तत्त्वविद्भिः सम्यक्प्रतिबोधयितव्या इत्येवमर्थमिहास्माभिः प्रपञ्चितम् ॥ २२ ॥

---

## न रश्मीन्नपयान्यमान्पतङ्गान्त्समानानर्चान्यजीयान् ॥ २३ ॥

रश्मीन्, अपयान्, यमान्, पतङ्गान्, समानान्, अर्चान्, यजीयान् एषु ग्रहणेषु नकारः स्वरपरोऽपि न खलु रेफं यकारं वा भजते । यथा—‘पुरुत्रा च रश्मीननु’[1] । ‘अदितिश्श्रपयानिति’-उक्थ्यत्वादनयोः प्राप्तिः । ननु ‘अदितिश्श्रपयान्’[2] इत्यस्य इतिपर[2]त्वादेव निषेधे सति ग्रहणमनर्थकमिति चेत् । आर्षे इतिपरत्वात् पुनः प्राप्तिः । तन्मा भूदिति ब्रूमः । ‘सुयमानूतये’[3] पृष्ठ्यत्वात् प्राप्तिः । ‘पतङ्गानसन्दितः’[4] याज्यात्वात् प्राप्तिः । ‘समानानुशन्नग्ने’[5] । ‘अर्चानिन्द्र ग्रावाणः’[6] । ‘यजीयानुपस्थे मातुः’[7] । एषामपि याज्यात्वात् प्राप्तिः ॥ २३ ॥

रश्मीनित्यादिषु नकारो यथाविहितं रेफं यकारं वा न याति स्वरे पदादौ परतः । रश्मीन्—‘पुरुत्रा च रश्मीननु’[1]। अपयानित्यस्योदाहरणं शाखान्तरीये ग्रहोक्थ्यादौ द्रष्टव्यम् ।

---

[1] सं. ४-१-२. [2] सं. ४-१-५. [3] सं. ४-७-१५.
[4] सं. १-२-१४. [5] सं. ४-३-१३. [6] ,, १-६-१२.
[7] ,, १-३-१४. * बाल्वदे.

'अदितिश्चयानिति'[1] इत्यत्र त्वितिपरत्वान्नास्ति प्राप्तिः। न च व्युत्क्रमस्य जटायामनिति[2]शब्दपरतयाऽस्ति प्राप्तिः, अनाम्नातसन्धौ छान्दसकार्याभावस्योक्तत्वात्। यमान्—'सुयमानूतये'[3]। पतङ्गान्—'पतङ्गानसन्दितः'[4]। समानान्—'समानानुशाम्ने'[5]। अर्चान्—'अर्कमर्चानिन्द्र ग्रावाणः'[6]। यजीयान्—'यजीयानुपस्थे मातुः'[7] ॥ २३ ॥

---o---

## उदथापरश्चोदथापरश्च ॥ २४ ॥

उत्, अथा इत्येवम्परो नकारो यथाविहितं रेफं यकारं वा नापद्यते। चकारो निषेधाकर्षकः। यथा—'अमित्रानुन्नयामि'[8]। उदिति किम्? 'श्रीꣳरुत द्यून्'[9]। 'विद्वानथा भव'[10]। दीर्घोऽत्र ह्रस्वोपलक्षणमपि। यथा—'विद्वानथ। अथा भव'[10]। यथासंहितास्थमेव निमित्तमत्र स्वकार्यं करोति निषेधरूपम्। यथा—'अमित्रानुदमित्रानमित्रानुत्'[8]। विनिरप्येवं यथासंहितास्थनिमित्त एवं* सर्वत्र भवतीत्यवोचाम। यथा—'सो अस्माꣳ अस्मान्थ्स सो अस्मान्।

---

[1] सं. ४-१-५. [2] न चास्य क्रमस्य जटायामदिति. [3] सं. ४-७-१५.
[4] सं. १-२-१४. [5] सं. ४-३-१३. [6] सं. १-६-१२.
[7] सं. १-३-१४. [8] सं. ४-१-१०. [9] सं. २-१-११.
[10] सं. ३-२-११. * निमित्तेरेव.

अस्मा॰ अवहायावहायास्मा॰ अस्मा॰ अवहाय'[1] । एवमादि वेदितव्यम् ॥ २४ ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे नवमोऽध्यायः.

उत्, अथा इत्यनयोः परतो नकारो यथाविहितमन्तस्थादेशं न याति । 'ब्रह्मणाऽमित्राननुनयामि'[2] । 'विद्वानथा भव'[3] । 'अपि विकृतम' (१-५१) इति वचनाद्विकृतयोरपि भवत्ययं निषेधः । 'अमित्राननुनयामि'[2] । 'विद्वानथा भव'[3] ॥२४॥

इत्याचार्यगार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये प्रातिशाख्यव्याख्याने नवमोऽध्यायः.



1 सं. ५-७-१. 2 सं. ४-१-१०. 3 सं. १-२-१२.

# अथ दशमोऽध्यायः

## अथैकमुभे ॥ १ ॥

'अथ' इत्ययमधिकारः । उभे अक्षरे एकं रूपं[1] सजातीयमापद्येते इत्येतदधिकृतं वेदितव्यं, इत उत्तरं यद्वक्ष्यामः ॥ १ ॥

उभे इति सामान्यविवक्षया नपुंसकलिङ्गनिर्देशः । ते तु वर्णात्मके । 'वर्णस्य विकारलोपौ' (१–५६) इति परिभाषणात् । अक्षरापेक्षया वा नपुंसकनिर्देशः । पदान्तश्च पदादिश्चेत्युभौ वर्णावेकं विकारं गच्छत इत्येतदधिकृतं वेदितव्यम् । स्वरपराधिकारश्च वर्तते ॥ १ ॥

---

## दीर्घं समानाक्षरे सवर्णपरे ॥ २ ॥

समानाक्षरे आत्मनः सवर्णपरे सति पूर्वपरीभूते एते उभे दीर्घमेकमाप्नुतः । यथा—'गृह्णीष्वान्तरितम्'[2] । 'रास्नाऽसीन्द्राण्यै'[3] 'सूपस्था देवः'[4] । सवर्णः परः यस्मा दसौ सवर्णपरः, तस्मिन् ॥२॥

समानाक्षरे सवर्णपरे[5] सति उभे एकं दीर्घमादेशं गच्छतः । यं प्रति सावर्ण्यमस्ति । 'अन्तरिक्षमिवाग्नीद्ध्रम्'[6] । 'यथा वा आयतां प्रतीक्षते'[7] । 'तदेवावरुन्धे'[8] । 'अथ मे पुन-

---

[1] एकरूपं. [2] स. १-१-८. [3] सं. १-१-२.
[4] स. १-२-२. [5] सवर्णस्वरपरे. [6] सं. ६-४-६.
[7] ,, ३-३-९. [8] ,, ५-७-३.

देहीति'[1] । 'दधतृखे'[2] । 'यदपतूलयाशीत'[3] । समानाक्षर इति किम्? 'एत एतान्ग्रहानपश्यन्'[4] । 'भूत्या ऐन्ध'[5] । सवर्णपर इति किम्? 'अपेन्द्र द्विपतो मनः'[6] ॥ २ ॥

## अथावर्णपूर्वे ॥ ३ ॥

'अथ' इत्ययमधिकारः । अवर्णपूर्वे सतीत्येतदधिकृतं वेदितव्यं, इत उत्तरं यद्वक्ष्यामः । इदमधिकारान्तरम्, 'उपसर्गपूर्व आरम्' (१०–९) इतिपर्यन्तम् । अवर्णश्चासौ पूर्वश्च अवर्णपूर्वः, तस्मिन् ॥३॥

अवर्णः पूर्वो यस्मिन् सन्धौ तस्मिन्निति विषयतया सन्धिरधिक्रियते ॥ ३ ॥

## इवर्णपर एकारम् ॥ ४ ॥

अवर्णपूर्वे इवर्णपरे च सति, ते उभे अक्षरे एकारमाप्नुतः । यथा—'नेष्टिर्भवति'[7] । 'महेन्द्राय'[8] । इवर्णश्चासौ परश्च इवर्णपरः, तस्मिन् ॥

अवर्णपूर्वे इवर्णपरे सन्धौ उभे एकमेकारं गच्छतः । 'नेष्टिर्भवति'[9] ॥ ४ ॥

---

[1] स. २-१-२. [2] सं. ४-१-६. [3] सं. ६-१-१.
[4] सं. ६-६-८. [5] स. २-२-८. [6] स. ३-६-८.
[7] स. २-५-५. [8] स. ६-६-२१.

[9] 'नेष्टिर्भवति.' (२–५–६) 'प्रेयमगात.' (१–१–२) 'चक्षुषा प्रेक्षे.' (१–१–४) 'पुनरेत्य निः.' (२–३–१२) 'दक्षिणार्धं परेक्षेत.' (३–२–४) इवर्णपर इति किम्? 'मुमुष्टिनाऽवोक्षति.' (५–४–५) इत्यपि क्वचित्कः पाठः.

## उवर्णपर ओकारम् ॥ ५ ॥

अवर्णपूर्वे उवर्णपरे च सति, ते उभे[1] ओकारमाप्नुतः । यथा—
'इषे त्वोर्जे त्वा'[2] ॥ ९ ॥

अवर्णपूर्वे उवर्णपरे सन्धावुभे एकमोकारं गच्छतः । 'इध्मार्बर्हिः प्रोक्षति'[3] । 'इषे त्वोर्जे त्वा'[2] । 'इषे त्वोपवीः'[4] । 'इन्द्रस्योरुमा विश'[5] । उवर्णपर इति किम्? 'अभिदर्दि कृत्वाऽवेक्षेत'[6]। ये त्वस्मिन्नध्यायेऽक्षरसंहितैव विधीयत इत्याहुः, तेषां 'प्रउगचितं चिन्वीत'[7] इत्यादावपि ओकार एकादेशस्स्यात् । नन्वेवं सति 'प्रोगचितं चिन्वीत'[7] इति रूपापत्तेः अवर्णोवर्णप्रकृतित्वं न संविज्ञायेत । सत्यम् । अयं हि सर्वासामक्षरवर्णसंहितानां स्वभावः यद्विधित एव प्रकृतिरवगम्यते प्रायशो न त्वध्ययनात् । न हि 'पितृणा१ सदनमसि'[8] इत्यादिषु णकारस्य नकारः प्रकृतिरित्यध्ययनादवगम्यते । अपि तर्हि विधित एव ॥ ९ ॥



## एकारैकारपर ऐकारम् ॥ ६ ॥

अवर्णपूर्वे एकारैकारपरे च सति ते उभे[1] पूर्वापरीभूते ऐकारमाप्नुतः । यथा—'सं ब्रह्मणा पृच्यस्वैकताय'[9] । 'सोमैन्द्रा बभ्रुललामास्तूपराः'[10] । एकारश्च ऐकारश्च एकारैकारौ, तयोः समाहारः,

---

[1] उभे अक्षरे. [2] सं. १-१-१. [3] सं. २-६-५.
[4] सं. १-३-७. [5] ,, १-२-७. [6] सं. ६-६-७.
[7] सं. ५-४-११. [8] सं. १-३-२. [9] स. १-१-८.
[10] सं. १-६-१९.

एकारैकारम् । समाहारे द्वन्द्वः । तच्च तत् परं च एकारैकारपरं, कर्मधारयः । तस्मिन्, एकारैकारपरे । एवमुपरितनेऽपि सूत्रे समासः ॥ ६ ॥

अवर्णपूर्वे एकारपरे ऐकारपरे च सन्धावुभे ऐकारमेकादेशं गच्छतः । 'अथैता आहुतीः'* । 'सैतं मन्त्रमपश्यत्'[1] । 'वाचमेवै-न्द्रीमारभन्त्'[2] । 'एषाहैन्द्रः प्राणः'[3] । एतत्पर इति किम्? 'अथा-रुन्धौषधीः'[4] ॥

## ओकारौकारपर औकारम् ॥ ७ ॥

अवर्णपूर्वे ओकारौकारपरे च सति, ते उभे औकारमाप्नुतः । यथा—'ब्रह्मौदनं पचेत्'[5] । 'दाम्नाऽपौम्भन्'[6] ॥ ७ ॥

अवर्णपूर्वे ओकारपरे औकारपरे च सन्धौ उभे औकारमेकादेशं गच्छतः । 'अथौषधीरन्तगता दहति'[7] । 'पिता जनितौषधी-नाम्'[8] । 'अथारुन्धौषधीः'[9] । 'अरुणो ह स्माहौपवेशिः'[10] । 'यज-मानेन सम्मितौदुम्बरी'[10] । एतत्पर इति किम् । 'तेनैव प्रजा-स्सृजते'[11] ॥ ७ ॥

1 सं. १-६-४. 2 सं. १-६-१०. 3 सं. १-२-१०.
4 सं. ७-४-३. 5 सं. ५-७-३. 6 सं. २-४-१३.
7 सं. ६-५-९. 8 सं. ४-६-२. 9 सं. ६-१-९.
10 सं. ६-२-१०. 11 सं. ६-७-४. * सं. २-४-६.

## अरमृकारपरे ॥ ८ ॥

अवर्णपूर्वे ऋकारपरे च सति ते उभे[1] अरमिति विकारमाप्नुतः। यथा—'अर्द्धर्च एकाम्'[2]। 'अग्निय्यर्चाऽऽग्नीध्रम्'[3] ॥ ८ ॥

अवर्णपूर्वे ऋकारपरे सन्धौ उभे अर् इत्यादेशं गच्छतः। 'पवर्णयात्'[4]। 'ग्रावसर्तप्रजात'[5]। ऋकारपर इति किम्? 'यत्रैव यज्ञमदशान्'[6] ॥ ८ ॥

---

## उपसर्गपूर्व आरम् ॥ ९ ॥

'अवर्णपूर्वे' (१०—२) इत्यनुवर्तते। तस्मादुपसर्गपूर्व इत्यविशेषो-क्तावप्य[7]वर्णान्तो य उपसर्गस्तस्यैव ग्रहणम्। ऋकारः सान्निध्याल्लभ्यते। उपसर्गपूर्वे ऋकारपरे च सति उभे[1]आरमिति विकारमाप्नुतः। यथा—'उपार्च्छति'[8]। 'अवार्च्छति'[9]। 'ऋतव्या उपोपार्त्तव्या ऋतव्या उप'[10]। अवर्णान्तोपसर्गविशेषणेन किम्। 'व्यृद्धं वा एतत्'[11]। उपसर्गश्चासौ पूर्वश्च तस्मिन्, उपसर्गपूर्वे ॥ ९ ॥

अवर्णपूर्वाधिकारादुपसर्गावर्णपूर्वे ऋकारपरे सन्धौ उभे आर् इत्यादेशं गच्छतः। 'नार्तिमार्छति'[4]। 'स इन्धे तमुपार्छति'[8]। पूर्वसूत्रस्यायमपवादः। उदायां व्युत्क्रमणसन्धौ नायं विधिः,

---

[1] उभे अक्षरे. [2] ,, १-६-१०. [3] सं. ३-१-६.
[4] सं. १-५-२. [5] सं. १-८-२२. [6] ,, ७-२-८.
[7] घोक्तोप्य. [8] ,, १-५-९. [9] सं. २-६-३.
[10] सं ५-३-१. [11] ,, ५-१-२.

अनाम्नातसन्धेरेतच्छास्त्राविषयत्वात् । 'ऋतव्या उपोपर्तव्या ऋतव्या उप'[1] । मूलशास्त्रे हि 'उपसर्गादृति धातौ'[2] इति धात्वृकार एव परतः वृद्धिर्विधीयते । यत्र तु व्युत्क्रमणवशादुपसर्गस्य धात्वृकारपरत्वं 'नेन्द्रियेण वीर्येण व्यृध्यतेऽप वा एतस्मात्'[3] इति तत्रापि नायं विधिः, 'उपसर्गाः क्रियायोगे'[4] इति स्मरणात् । कामतिक्रियायोगिनः 'अप'[3] इत्यस्य ऋद्धिक्रियां प्रत्युपसर्गत्वाभावात् । तस्मात् 'ऋध्यतेऽपापर्ध्येत ऋध्यतेऽप'[3] इत्येवमेव भवितव्यम् । अवर्णपूर्व इति किम्? 'यज्ञस्य वै समृद्धेन'[5] उपसर्गपूर्व इति किम्? 'उभाभ्यां नर्ध्येत'[6] । ऋकारपर इति किम्? 'नमो भरन्त एमसि'[7] ॥ ९ ॥

---o---

## उदात्तमुदात्तवति ॥ १० ॥

उदात्तधर्मविशिष्टे वर्णे पूर्वतः परत उभयतो वा स्थिते सति ते उभे अप्येकादेशमापन्ने उदात्तधर्ममेकमाप्नुतः उदात्तोऽस्यास्तीत्युदात्तवान्, तस्मिन् उदात्तवति । समानाक्षरमारभ्य[8] सर्वस्मिन्नेकीभावे यथाक्रममुदात्तानुदात्तस्वरितपूर्वे उभयोदात्ते[9] चोदाहरणानि दर्शयिष्यामः । यथा—'सवित प्रार्पयतु'[10] । 'ब्रह्म यच्छापाग्नेऽग्निम्'[11] । 'याज्यैवैनम्'[12] । 'पूषाऽऽधत्त'[13] । 'दिवीव चक्षुः' ।[14]

---

[1] स. ५-३-१. [2] पा. ६-१-७१. [3] सं. २-२-१.
[4] पा. १-४-७९. [5] स. १-६-१०. [6] ,, ६-६-१०.
[7] स. १-५-६. [8] उपसर्गान्त इत्यधिकम्. [9] स्वरितानां पूर्वत्वे परत्वे उभयोदात्तत्वे.- [10] स. १-२-२. [11] ,, २-२-७.
[12] ,, २-३-६. [13] ,, ६-५-२. [14] ,, २-३ ६.

'अद्य वसु वसतीतीन्द्रो हि देवानाम्'[1] । 'मैत्रावरुणीत्याह'[2] । ननु 'सूत्रीयम्'[3] इत्यत्रोदात्तेनैकादेशे सति किं न स्यात् अयं विधिः? उदात्तपूर्वाधिकारे सति 'ऊभावे च' (१०—१७) इति सूत्रेण स्वरितस्य विशेषविधानादिति ब्रूमः । 'रेतो दधातूत्सक्थ्योः'[4] । 'वनस्पतयोऽनूत्तिष्ठन्ति'[5] । 'ता दिक्षूपादधत'[6] । एवं समानाक्षरसंहितायामेकीभावोऽन्यत्रापि[7] द्रष्टव्यः । एवमवर्णपूर्वत्वेऽपि वक्ष्यते— 'सेमां नो हव्यदातिम्'[8] । 'तं घेदग्निः'[9] । 'कार्येति सवनमुखात्सवनमुखात्'[10] । 'सेदु होता'[11] । 'प्रोक्षितं गोपायत'[12] । 'ऊर्जस्स्थोर्जं वो भक्षीयेति'[13] । 'स्वायुषोदोपधीनाम्'[14] । 'इमे एवोप धत्ते'[15] । 'नेनं प्रत्योषति'[16] । 'एक एव यजेतैकः'[17] । 'अथैकमुत्थानम्'[18] । 'यत्रैकाꣳ रशनाम्'[19] । 'इन्द्रियमेवैन्द्रेण'[20] । 'वि हि तद्वैर्यतेति'[21] । 'देवेभ्य ऐन्धेन्ध देवेभ्यो देवेभ्य ऐन्ध'[22] । 'क्षत्रस्य चौजसे'[23] । 'स्वाहौषधीभ्यः'[24] । 'सौषधीरनु रुध्यसे'[25] । 'प्रौक्षीः केनाप इति'[26] । 'अरुणो ह स्माहौपवेशिः'[27] । 'आग्नेय्यर्चाऽऽग्नीध्रम्'[28] । 'सैवास्यर्द्धिः'[29] ।

1 सं. २-५-३.	2 सं. २-६-७.	3 सं. ६-२-४.
4 सं. ७-४-१९.	5 ,, ७-४-८.	6 ,, ५-६-५.
7 अत्रापि.	8 ,, ४-६-६.	9 ,, २-६-११.
10 सं. ७-५-५.	11 ,, १-१-१४.	12 ,, ७-१-१२.
13 ,, १-६-६.	14 ,, १-२-८.	15 सं. ५-२-७.
16 ,, १-५-९.	17 सं. ७-२-१०.	18 सं. ७-२-१.
19 सं. ६-६-४.	20 सं. ६-६-५.	21 सं. ७-१-५.
22 सं. २-५-९.	23 ,, ३-३-१.	24 ,, १-८-१३.
25 ,, ४-२-३.	26 ,, २-६-६.	27 ,, ६-१-९.
28 ,, १-१-६.	29 ,, ६-६-१०.

'ऐन्ध ऋषिष्टुतः'[1] । 'एव ऋषिरस्वदयत्'[2] । 'नार्त्तिमार्च्छति'[3] । 'अवार्च्छत्येवम्'[4] । एवमादि ॥ १० ॥

उक्ता एकादेशाः। तेषामिदानीं स्वरादिगुणविधिरारभ्यते—उदात्तवति सन्धौ विकारभाजोरुभयोरन्यतरस्य वोदात्तत्वे सति उभे उदात्तमेकादेशं गच्छतः । 'यज्ञमेवायरुन्ध'[5] इत्युभयोरुदात्तयोरुदात्तता[6] । 'प्रेयमगात्'[7] । 'सेतं मन्त्रम्'[8] । 'वसन्तमेवर्तूनाम्'[5] इति पूर्वस्य। 'पूतीगन्धस्यापहत्यै'[9] 'उज्जितिमनूज्जेषम्'[10] 'सम्मितौदुम्बरी भवति'[11] । 'अवार्छति'[4] । 'यथाऽक्षोऽनुपाकः'[4] इति परस्य । उदात्तवतीति किम्? 'अथाब्रवीत्'[12] । 'अथ क्वास्य'[13] ॥ १० ॥

---

## अनुनासिके अनुनासिकम् ॥ ११ ॥

'अप्रग्रहास्समानाक्षराण्यनुनासिकान्येकेषाम्' (१५–६) इति येषां मतं तानुद्दिश्यायं विधिः[14] । तस्मिन् उदात्तवत्यनुनासिके पूर्वतः परत उभयतो वा स्थिते सति ते उभे अप्यक्षरे अनुनासिकधर्ममेकमाप्नुतः । उक्तान्येवोदाहरणानि । एतदनिष्टम्[15] ॥ ११ ॥

---

[1] सं. २-५-९.
[2] सं. ५-१-१०.
[3] सं. १-६-२.
[4] सं. २-६-३.
[5] सं. २-६-१.
[6] स्वरितत्वे अनुदात्तत्वे चोदाहरणम्—इति क्वचित्.
[7] सं. १-१-२.
[8] सं. १-५-४.
[9] सं. २-२-२.
[10] स. १-६-४.
[11] पा. ६-२-१०.
[12] सं. ३-२-११.
[13] स. ५-७-४.
[14] अनुनासिकान्येकेषामित्येकेषां मतम् । तानुद्दिश्यायं विधिः.
[15] एतदनिष्टम् इति क्वाचित्कः पाठः.

एवैः'[1] । आर्षस्वरपर इति किं? 'बुभ्रिया ईरत ईरते बुभ्रियां बुभ्रियेरते'[2] । 'ज्या इयमियं ज्या ज्येयम्'[3] । 'पूषा एत्वेतु पूषा पूषेतु'[4] । 'अभिनन्त एवैरेवैरमिनन्तामिनन्तैवैः'[1] । आर्षयस्वरपर इति किम्? 'असि स्वधा स्वधाऽस्यसि स्वधा'[5] । 'असि मा माऽस्यसि मा'[6] । 'आ पूषा पूषाऽऽपूषा'[4] । 'सुपर्णा अमिनन्तामिनन्त सुपर्णास्सुपर्णा अमिनन्त'[1] । इदमेव प्रत्युदाहरणम् । न तु 'स्वधाऽसि'[5] 'प्रमाऽसि'[6] 'प्रपाऽसि'[7] 'ज्येयम्'[8] 'अमिनन्तैवैः'[1] इत्यादि । जटायामपि तृतीयपर्यायस्य प्रकृतित्वात् ॥ १२ ॥

धा, मा, पा इत्यवर्णोऽसिपरो यथोक्तमेकादेशं न गच्छति । तथा 'बुभ्रिया' इत्यादिषु अवर्ण आर्षे वैदिके सन्धौ यथोक्तमेकादेशं न गच्छति । धा—'स्वधा असि'[5] । मा—'प्रमा असि'[6] । पा—'प्रपा असि त्वमग्ने इयक्षवे'[7] । असिपर इति किम्? 'दृशाधेन्द्रियम्'[8] । 'माऽघशंस सः'[9] । बुभ्रिया—'प्र बुभ्रिया ईरते'[2] । ज्या—'ज्या इयं समने'[3] । आपूषा—'आ पूषा एत्वा वसु'[4] । आङुपबन्धेन किम्? 'तं पूषाऽऽधत्त'[10] । अमिनन्त—'अमिनन्त एवैः'[1] । आर्षे सन्धावित्यस्य व्यावर्त्यं शाखान्तरे । तत्र हि परमज्यापदस्य विभज्यानुवादार्थं पदकाले प्रक्षिप्ते[11] इतिशब्दे परतः प्रकृति-

---

[1] सं. ३-१-११. [2] सं. ४-३-१३. [3] सं. ४-६-६.
[4] सं. २-४-५. [5] „ १-१-९. [6] „ ४-४-११.
[7] „ २-५-१२. [8] „ ५-६-३. [9] „ १-१-१.
[10] सं. १-५-१.

[11] पदकारप्रक्षिप्ते इत्यपि पाठः क्वाचित्कः.

यद्भावस्स्यात्[1] । 'परमज्येति परम—ज्या'[2] इति चेष्यते । अन्ये तु जटायां पुनरनुक्रमणे यस्समाम्नातसन्धिः, तस्यैवानार्षत्वं परिकल्प्य प्रत्युदाहरन्ति—'बुभ्रिया ईरत ईरते बुभ्रिया बुभ्रियेरते'[2] इति । तदतितुच्छम् । न हि वैदिकस्य सन्धेः पुनः प्रयोगमात्रादवैदिकत्वमपैति[3] । तथा सति संहिताम्नायस्य क्रमाम्नायस्य च ग्रहणधारणार्थेषु उपाम्नातेष्वपि प्रकृतिभावो[4] न स्यात् । तस्मात् 'बुभ्रिया ईरत ईरते बुभ्रिया बुभ्रिया ईरते'[2] इत्येव[5] जटा वक्तव्या । यदप्युच्यते 'असिपरः' इत्यत्रापि आर्षग्रहणं सम्बध्यते, तेन 'धा असि स्वधा असि'[6] इत्यत्र 'असि स्वधा'[6] इति क्रमस्य जटायां धाशब्दस्य व्युत्क्रमणासिद्धमसिपरत्वमाश्रित्य प्राप्नुवन् प्रकृतिभावो व्यावर्त्यते; ततश्चानाम्नातसन्धेरपि एतच्छास्त्रविषयत्वं लभ्यत इति । तदप्यसारम् । आर्षग्रहणस्य परवाक्यान्वितस्य पूर्ववाक्यान्वये प्रबलकारणाभावात् । न च विधिद्वयस्यैकसूत्रोपदेशः एकोपाधिं विना अनुपपद्यमानः सूत्रस्यान्वयं कल्पयितुमर्हति स ह्यन्यथैवोपपद्यते[7] । अवर्णपूर्वस्यैकादेशस्य प्रतिषेध्यतया विपर्ययैक्यात्मकस्य मुख्योपाधेर्विद्यमानत्वात् । अपि च पूर्ववाक्यस्थस्य कांचिदाकांक्षायोग्यतावशादुत्तरवाक्येऽन्वय उपपद्यते अनुवृत्तिसम्भवात् । न तु विपर्ययः । अनुवृत्त्यसम्भवात् । न चैवंविधाभिः कुसृष्टिभिर्जटाया एतच्छास्त्रविषयत्वं शक्यकल्पनम् । 'रायेस इन्द्रः पूर्वश्च' (११-९) इत्यस्मिन् सूत्रे अवि-

[1] वो,न स्यात्.
[2] सं. ४-३-१३.
[3] पुनःप्रयोगमात्रादवैदिकत्वमापतति.
[4] उपाम्नातेष्वपि वाक्येषु प्रकृतिवद्भावो.
[5] इत्येवमेव.
[6] सं. १-२-९.
[7] एकोपाधिनोपपद्यमानस्सूत्रस्यान्वयं कल्पितुमर्हति न ह्येतदेवोपपद्यते.

'अप्रग्रहास्समानाक्षराणि' (१६–६) इति परमतं वक्ष्यति। तद्विषयोऽयं विधिः । तत्र पदान्तस्यैव अनुनासिक[1]विधानाद्नुनासिके पूर्वे सतीति योज्यम । तथा सति अनुनासिकमेकमादेशमुभे गच्छतः । पूर्वसूत्रोक्तान्यत्राप्युदाहरणानि ॥ ११ ॥

---

## स्वरितानुदात्तसन्निपाते स्वरितम् ॥ १२ ॥

स्वरितानुदात्तयोरसन्निपाते एकादेशे सत्युभावपि तौ स्वरितमापद्येते । यथा—'कन्येव तुन्ना'[2] । 'छर्वी -छव्योपाकृताय'[3] । 'याज्यैषा वै सप्तपदा'[4] । 'अथ कास्य'[5] । इह स्वरितस्याविशेषेण ग्रहणे नित्यस्वरित एव गृह्यते । तस्य सव्यञ्जनानामक्षराणां च[6] पदावयवानामुत्पत्तिकाल एव सम्भवात् । अन्येषां तु पदोत्पत्तिकालादूर्ध्वमक्षराणां पदानां वा संहितायां 'उदात्तात् परोऽनुदात्तः' (१४–२९) इति विधानात् । 'तस्मिन्ननुदात्ते पूर्व उदात्तः' (१२–९) इत्यादि च । तस्मान्नित्यस्यैव मुख्यत्वम् । 'सामान्योक्तौ[7] च सत्यां मुख्ये सम्प्रत्ययः' इति तस्यैव स्वीकारो युक्तः । 'अथाब्रवीत्'[8] इत्यादावेकादेशस्योदात्तानन्तरभावित्वात् 'उदात्तात्परोऽनुदात्तस्स्वरितम्' (१४–२९) इत्यनेनैव स्वरितत्वं विज्ञेयम् ॥

स्वरितानुदात्तयोः सन्निपातो यस्मिन् सन्धौ स तथोक्तः । तस्मिन्नुभे स्वरितमेकादेशं गच्छतः । 'भ्रातृव्यदेवत्योपभृत्'[9] ।

[1] आनुनासिक्य. [2] सं. ३-१-११ [3] सं. ६-७-२०. [4] सं. २-६-२. [5] सं. ५-७-४. [6] तस्य सर्वव्यञ्जनानामक्षराणां च. [7] सामान्येनोक्तौ. [8] सं. ३-२-११. [9] सं. २-५-९.

'ऋतस्य पथ्याऽसि'[1] । 'अथैता आहुतीर्जुहोति'[2] इत्यादौ न स्वरितानुदात्तसन्निपातोऽस्ति तत्र हि पूर्वसूत्रविहितत्वादेकादेशः प्रथमं भवति । ततस्स्वरितादेश इति । अन्ये तु नित्यस्वरितस्य मुख्यत्वात्तत्रैवायं विधिर्भवतीत्याहुः । तथात्वे अन्यान्यपि स्वरितकार्याणि तत्रैव स्युर्नान्यत्र ॥ १२ ॥

## न धामापासिपरो वुभ्रियाज्याऽऽपूपाऽमिनन्तार्षे ॥ १३ ॥

धा, मा, पा, एतेष्वन्त्यस्वर आर्षपाठे असिपरः, बुभ्रिया, ज्या, आपूपा, अमिनन्त एतेष्वन्त्यस्वर आर्षे पाठे स्वरपरः पूर्वविधिं न प्राप्नोति । यथा—'स्वधा अस्युर्वी'[3] । 'सहस्रस्य प्रमा असि'[4] । 'धन्वन्निव प्रपा असि'[5] । असिपर इति किं ?[6] 'स्वधेति स्व—धा'[3] । 'प्रमेति प्र—मा'[4] । 'प्रपेति प्र—पा'[5] । आर्षे इति किं ? 'स्वधा अस्यसि स्वधा स्वधाऽसि'[3] । 'प्रमा अस्यसि प्रमा प्रमाऽसि'[4] । 'प्रपा अस्यसि प्रपा प्रपाऽसि'[5] । 'प्र बुभ्रिया ईरते'[7] । 'ज्या इयम्'[8] । 'आ पूपा एत्वा वसु'[9] । आकारः किमर्थः ? 'तं पूपाऽऽधत्त'[10] । 'आ ते सुपर्णा अमिनन्त

---

[1] सं. ६-१-६.  [2] सं. २-४-६.  [3] सं. १-१-९.

[4] सं. ४-४-११.  [5] सं. २-५-१२.  [6] आसिपर इति किम् ? 'सत्वा सन्धाऽभूत्' (१-७-८.) 'माऽह तेजः' (४-२-९).

[7] सं.४-३-१३.  [8] सं. ४-६-६.  [9] सं. २-४-५.

[10] सं. १-५-२.

पयत्वस्य स्पष्टमुपदेक्ष्यमाणत्वात् ॥ १३ ॥

---

## एष्टरेतनेमन्नोम्नन्नोष्ठेवःपरो लुप्यते ॥ १४ ॥

एष्टः, एतन, एमन्, ओम्नन्, ओष्ठ, एवः इत्येवम्परं अवर्णो लुप्यते । 'अथावर्णपूर्वे' (१०—३) इत्यनुवर्तनाद्[1] वर्ण इति लभ्यते । 'अशीयेष्टा रायः'[2] । 'शमितार उपेतन'[3] । 'अपां त्वेमन्त्सादयाम्यपां त्वोद्मन्त्सादयामि'[4] । 'स्वाहोष्ठाभ्याम्'[5] । ओष्ठशब्दस्य सर्वावस्थस्य ग्रहणं भवति, 'ग्रहणस्य च' (१—२२) इति वचनात् । 'उपयामंमधरेणोष्ठेन'[6] । 'निरमिमतेवश्छन्दः'[7] । अवर्णो लुप्यत इति किं ? 'शित्योष्ठदिशितिभ्रुः'[8] । 'शित्योष्ठाय स्वाहा'[9] ॥ १४ ॥

एष्टरित्यादिषु परेषु अवर्णः पदान्तो लुप्यते । एष्टः— 'सुत्यामशीयेष्टा रायः'[10] । एतन— 'शमितार उपेतन'[11] । एमन्— 'अपां त्वेमंत्सादयामि'[12] । ओम्नन्— 'अपां त्वोम्नंत्सादयामि'[12] । ओष्ठेति पदैकदेशग्रहणम् । 'अधरेणोष्ठेन'[13] । 'स्वाहोष्ठाभ्याम्'[14] । एवः— 'निरमिमतेवश्छन्दः'[7] । अवर्ण इति किम् ? 'शित्योष्ठः'[13] । एतत्पर इति किम् ? 'इषे त्वोर्जे त्वा'[15] ॥ १४ ॥

---

[1] इत्यनुवर्तमाना. [2] सं. १-२-११. [3] सं. ३-१-४.
[4] सं. ४-३-१. [5] सं. ७-३-१६. [6] सं. ५-७-१२.
[7] सं. ६-३-५. [8] सं. ५-६-१४. [9] सं. ७-३-१७.
[10] सं. १-२-११. [11] सं. ३-१-४. [12] सं. ४-३-१.
[13] सं. ५-७-१२. [14] सं. ७-३-१६. [15] सं. १-१-१.

## इवर्णोकारौ यवकारौ ॥ १५ ॥

अवर्णपूर्वाधिकारो निवृत्तः । स्वरपराधिकारस्तु वर्तते । 'अथ स्वरपरो यकारम्' (९–१०), इति पूर्वाध्याये प्रक्रान्तः । इवर्णोकारौ पदान्तौ स्वरपरौ यथासंख्येन यवकारावापद्येते । 'अभ्यस्थात्'[1] । 'तवोम्यश्याम'[2] । 'आ पूपा एत्वा वसु'[3] । दीर्घस्य प्रग्रहत्वविधानात् प्लुतस्य सन्धिनिषेधात् उकारस्य कारोत्तरत्वं कृतं— 'इवर्णोकारौ यवकारौ' इति ॥ १५ ॥

अवर्णपूर्वाधिकारो निवृत्तः । इवर्णश्च उकारश्च यथाक्रमं यकारं वकारं चादेशं गच्छतः, स्वरे पदादौ परतः । 'अत्यन्यानगाम्'[4] । 'सरस्वत्याज्यभागा'[5] । 'जुह्वास्यः'[6] । 'अन्वह मासाः'[7] । स्वरपर इति किम् ? 'दधि मधु घृतमाप'[8] ॥ १५ ॥

—o—

## उदात्तयोश्च परोऽनुदात्तस्स्वरितम् ॥ १६ ॥

चकारः पूर्वसूत्रोक्तनिमित्तिनाविवर्णोकारावन्वादिशति । उदात्तयोरिवर्णोकारयोः परोऽनुदात्तः स्वरितमापद्यते । 'व्येवैनेन'[9] । 'अप्स्वग्ने'[10] । उदात्तयोरिति किं ? 'नीचा तं वक्ष्यतसम्'[11] ।

---

| | | |
|---|---|---|
| [1] स. ४-२-८ | [2] स. १-३-१४. | [3] स. २-४-५. |
| [4] स. १-३-५. | [5] स. २-२-९. | [6] स. १-४-४६. |
| [7] स. १-७-१३. | [8] स. २-३-२. | [9] स. ६-३-११. |
| [10] स. ४-२-११. | [11] स. १-२-१४. | |

'मध्वग्नौ जुहोति'[1] । परोऽनुदात्त इति किं ? 'तद्यद्दच्यध्यक्षराणि'[2] । 'स त्वै यजेत'[3] । 'इन्वा उपस्तीर्णम्'[4] ॥ १६ ॥

चशब्द इवर्णोकारौ कार्यभाजावन्वादिशति । तयोरुदात्तयोर्यकारवकारादेशे ततःपरोऽनुदात्तः स्वरितं गच्छति । 'न्यु शीर्ष्पाणि मृड्ढ्वम्'[5] । 'इन्द्रियाव्येव भवति'[6] । 'स त्वेवेष्टापूर्ती'[7] । उदात्तयोरिति किम् ? 'अभ्यवोचदधिवक्ता'[8] । 'अधिपत्न्यसि'[9] । 'ते अवन्त्वस्मान्'[10] । परोऽनुदात्त इति किम् ? 'तुर्याद्भ्यः अभ्येहि'[5] । 'स त्वै यजेत'[3] ॥ १६ ॥

---

## ऊभावे च ॥ १७ ॥

चकारः पूर्वसूत्रस्योदात्तत्वान्वाकर्षकः, परस्य चानुदात्तत्वमन्वादिशति[11] । पूर्वेणोदात्तेन परस्यानुदात्तस्य ऊभावे क्रियमाणे स्वरितं जानीयात् । यथा—'सूत्रीयमिव'[12] । 'सून्नाता'[13] । 'मामूत्तिष्ठन्'[14] । 'दिक्षूपं दधाति'[15] । पूर्वेणोदात्तेनेति किं ? 'सूपस्था देवः'[16] । परस्यानुदात्तस्येति किं ? 'ता दिक्षूपादधत'[15] ॥

---

[1] सं. २-३-२. [2] सं. २-४-११. [3] सं. २-६-६.
[4] सं. १-६-७. [5] सं. १-६-३. [6] ,, २-३-६.
[7] सं. १-७-३. [8] सं. ४-५-१. [9] सं. ४-४-२.
[10] सं. २-६-१२. [11] चकारः उदात्तपूर्वत्वानुदात्तपरत्वाकर्षकः.
[12] सं. ६-२-४. [13] ,, ७-१-८. [14] सं. ७-५-२.
[15] ,, ५-१-६. [16] ,, १-१-२.

चशब्देन पूर्वसूत्रपदानि चशब्दव्यतिरिक्तान्यन्वादिश्यन्ते। तेषां यथोचितं विपरिणामः। उदात्तस्योकारस्य परेणानुदात्तेनोकारेण सह ऊभावे सति तावुभौ स्वरितमादेशं गच्छतः। गुणप्रधानोऽयं विधिः। गुणिस्वरस्य 'दीर्घंस्समानाक्षरे' (१०-२) इति विहितत्वात्। 'सून्नीयमिव'[1]। 'सूद्गाता'[2]। 'मासूत्तिष्ठन्'[3]। उदात्तस्येति किम्? 'दधतूखे'[4]। परेणानुदात्तेन किम्? 'ता दिक्षूपादधत'[5]। 'उदात्तमुदात्तवति' (१०-१०) इत्यस्यायमपवादः॥ १७॥



## न श्येती मिथुनी॥ १८॥

श्येती, मिथुनी इत्येतयोरन्त्यस्वरो यथाविहितं यत्वं नापद्यते। यथा—'श्येतेन श्येती अकुरुत'[6]। 'न मिथुनी अभवन्'[7]॥१८॥

श्येती मिथुनी इत्येतयोः यथोक्तं सन्धिकार्यं न भवति स्वरे परतः। 'श्येतेन श्येती अकुरुत'[6]। 'न मिथुनी अभवन्'[7]॥



## लुप्येते त्ववर्णपूर्वौ यवकारौ॥ १९॥

अवर्णपूर्वौ स्वरपरौ यकारवकारौ लुप्येते। यथा—'आप उन्दन्तु'[8]। 'भुक्त आसिन्नोपतो स्यात'[9]। 'न किञ्चिदार

[1] सं. ६-२-४. [2] सं. ७-१-८. [3] सं. ७-५-२.
[4] सं. ४-१-६. [5] सं. ५-५-५. [6] सं. ५-६-८.
[7] सं. ५-३-६. [8] सं. १-२-१. [9] सं. १-१-२.

इति’[1] । ‘इम एवास्मै’[2] । ‘आसामहा एवेमौ’[3] । ‘वायविष्टये दुरोणे’[4] । ‘अहावनदत’[5–6] । ‘मर्त्यां आविवेश’[7] । एवम्पूर्वाविति किं? ‘अभ्यस्थात्’[8] । ‘हृत्स्वसः’[9] । तुशब्द इतरौ यवकारौ निवर्तयन्नादेशप्राप्तयोरेवानयोर्लोपविषयत्वं द्योतयति । अवर्णः पूर्वो याभ्यां ताववर्णपूर्वौ ॥ १९ ॥

अवर्णपूर्वौ इति कार्यभाज एवायं निर्देशः । अवर्णादपरौ यवकारौ लुप्येते स्वरे पदादौ परतः । तुशब्देनाद्य लोपानन्तरप्रसक्तिं यत्स्वरसन्धिकार्यं ‘दीर्घं समानाक्षरे’ (१०–२) इत्यादि तद्विनिवर्त्यते । ‘तस्या इन्द्र एवाजायत’[10] । ‘त आ वहन्ति’[11] । ‘अश्विना उभये’[12] । ‘महां इन्द्रः’[13] । ‘कुविदङ्ग ना इष्टये’[14] । ‘तावभूताम्’[15] । ‘अथ स्वरपरो यकारम्’ (९–१०) इत्यादिविधिभिरेषां यथादेशः । अवर्णपूर्वाविति किम्? ‘अत्यन्यानगाम’[16] । ‘अन्वह मासाः’[17] । स्वरे परत इति किम्? ‘एतद्वुदयनं य एवं वेद’[18] । पदादाविति किम्? ‘वायवस्थ’[19] ॥ १९ ॥

---

[1] सं. ६-१-९.
[2] सं. २-४-१०.
[3] सं. ७-५-२.
[4] ,, २-२-१२.
[5] ,, ५-६-१.
[6] वाय इष्टये, अहा अनदत, इत्यश्रूयमाणयकारे एतावस्य सूत्रस्योदाहरणे भवितुमर्हतः.
[7] ,, ५-७-९.
[8] ,, ४-२-८.
[9] ,, ४-२-११.
[10] ,, ६-१-३.
[11] ,, १-१-२.
[12] ,, १-१-१३.
[13] ,, १-४-२०.
[14] ,, २-६-११.
[15] ,, २-६-७.
[16] ब्रा. १-१-६.
[17] ब्रा. १-७-११.
[18] ब्रा. १-६-१२.
[19] ,, १-१-१.

## नोखयस्य ॥ २० ॥

उख्यस्य शाखिनः पक्षे अवर्णपूर्वौ यवकारौ न लुप्येते । उक्तान्येवोदाहरणानि ॥ २० ॥

उखयस्य शाखिनः पक्षे अवर्णपूर्वौ यवकारौ न लुप्येते। उक्तान्येवोदाहरणानि ॥ 'तस्या यिन्द्र येवाजायत '[1] । 'अथ स्वरपरो यकारम्' (९–१०) इत्यादिविधिभिरेषां यवकारादेशः। अवर्णपूर्वाविति किम्? 'अत्यन्यानगाम्'[2] । 'अन्वह मासाः'[3] । स्वरपर इति किम्? 'उदयनं य एवं वेद '[4] ॥ नेदं सूत्रद्वयमुक्तमिष्टम् ॥२०॥

—o—

## वकारस्तु साङ्कृत्यस्य ॥ २१ ॥

सान्निध्यान्निषेधो लभ्यते । साङ्कृत्यस्य मते अवर्णपूर्वो वकारो न लुप्यते, यकारस्तु लुप्यत एवेत्यर्थः । 'वायविष्टये'[5] । 'अहावनद्दत'[6] । पूर्वाचार्यमतनिवर्तकः तुशब्दः । सूत्रमिदमेवेष्टम् । न तु पूर्वद्वयं परद्वयं च ॥ २१ ॥

तुशब्दो यकारं विनिवर्तयति । ततो यलोपविषये पूर्ववत्सन्धिकार्यनिवृत्तिः । साङ्कृत्यस्य मते यथोक्तो वकारो न

[1] सं. ६-१-३.
[2] सं. १-३-६.
[3] सं. १-७-१३.
[4] सं. १-६-११.
[5] सं. २-२-१२.
[6] सं. ५-६-१.

लुप्यते—उकारे ओकारे च[1]विषये न त्वेवं यकारः। लुप्यत एवेति यावत्। 'त्वमग्ने व्रतपा असि'[2]। 'त आ वहन्ति'[3]। 'गविष्टयेऽग्ने'[4]। 'तावब्रूताम्'[5] ॥ २१ ॥

---

## उकारौकारपरौ लुप्येते माचाकीयस्य॥ २२

यकारवकारावर्णपूर्वौ उकारौकारपरौ लुप्येते, यथासङ्ख्यं माचाकीयस्याचार्यस्य मतेन[6]। 'आप उन्दन्तु'[7]। 'शतक्रत उद्वँशम्'[8]। 'या जाता ओषधयः'[9]। एवम्पराविति किं? 'त एनं भिषज्यन्ति'[10]। 'वायविष्टये'[11]। लुप्येते इति इह पुनरारम्भः पूर्वसूत्रद्वयस्थितनञ्सम्बन्धशङ्कानिराकरणार्थः ॥ २२ ॥

माचाकीयस्य मते अवर्णपूर्वो वकारो लुप्यते उकारे ओकारे च[1] पदादौ परतः। यह्वचानामयं पक्षः। लुप्यत इति पुनर्वचनं प्रतिषेधनिवृत्त्यर्थम् ॥ अत्र 'वाय उक्थेभिर्जरन्तः' इत्यादि दशतय्यामुदाहरणं द्रष्टव्यम्। एवंपर इति किम्? 'वायवायाहि दर्शत'। अन्ये तु 'लुप्येते' इति द्विवचनान्तं पठन्तो यवकारयोर्यथाक्रमं निमित्तद्वयसम्बन्धमाहुः ॥ २२ ॥

---

[1] ओकारे औकारे च. [2] सं. १-२-३. [3] सं. १-१-२.
[4] सं. २-६-११. [5] ,, २-६-७. [6] मते.
[7] सं. १-२-१. [8] सं. १-६-१२. [9] सं. ४-२-६.
[10] ,, २-३-११. [11] ,, २-२-१२.

## लेशो वात्सप्रस्यैतयोः ॥ २३ ॥

वात्सप्रस्य मते यकारवकारयोः अवर्णपूर्वयोर्लेशः स्यात् । लेशो नाम लुप्तवदुच्चारणम् । एतयोरित्युकारौकारपरौ निर्दिशति । उक्तान्येवोदाहरणानि ॥ २३ ॥

लुप्यत इत्यन्वयः । वात्सप्रस्य मते एतयोर्यवकारयोः लेशः एकदेशः यथोक्तविषये लुप्यते । एकदेशस्तु श्रूयते । तान्येवोदाहरणानि । न चेदं सूत्रद्वयमिष्टम् ॥ २३ ॥

## न प्लुतप्रग्रहौ ॥ २४ ॥

न खलु प्लुतः प्रग्रहश्च सान्धिविधिं भजेते[1] यथा—'अस्तु ही३ इत्यब्रूताम्'[2] । 'ते एनमभि'[3] । इत्यादिविधौ निषिद्धे अन्यस्मिंश्चानारभ्यमाणे प्रकृतिवद्भवति ॥ २४ ॥

प्लुतश्च प्रग्रहश्च यथोक्तं सन्धिकार्यं न गच्छतः स्वरे पदादौ परतः । प्लुतः—'छिनत्ती३' इति'[4] । 'सुश्लोकां४ इति सु—श्लोकां४'[5] । प्रग्रहः—'इन्द्रवायू इमे सुताः'[6] । 'सो एवैतस्य'[7] । 'अच्छिद्रे इति'[8] । 'बहुले इति'[8] । 'उभे इति'[8] ॥ २४ ॥

---

[1] न खलु प्लुतप्रग्रहौ सन्धिविधिं भजेते.

[2] स. ७-१-६. [3] सं. २-५-६. [4] स. १-७-२, [5] सं. १-८-१६. [6] सं. १-४-४. [7] स. २-५-५. [8] सं. ४-१-३.

## परश्चं परश्च ॥ २५ ॥

चकाराकृष्टयोर्यकारवकारयोर्लोपे सति परः सन्धिर्न भवति । यथा—'आप उन्दन्तु'[1] । 'अग्न इमम्'[2] । सान्निध्यान्निषेधो लभ्यते । ननु लोपे सतीत्येतावतैवालं, यकारवकारयोरिति किं? 'सेदु होता'[3] । 'सेनाऽनीकेन'[4] । 'सौषधीरनु'[5] इत्यादि ॥ २५ ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे दशमोऽध्यायः.

चशब्देन प्रतिषेधः अन्वादिश्यते । अनन्तरोक्तात्प्लुतात्परस्स्वरो यथोक्तं सन्धिकार्यं न गच्छति स्वरे पदादौ परतः । 'अग्ना३ इ इत्याह'[6] । 'यज्ञपता३ उ इति'[7] । प्लुतादिति किम्? 'नार्तिमार्छति'[8] । नेदं सूत्रमिष्टम् । अन्ये तु यवलोपात्परस्य स्वरस्य सन्धिकार्यमनेन सूत्रेण निषिध्यत इति इष्टार्थविपर्यं व्याचक्षते । तदविचारितरमणीयम् । तथाहि—यवलोपस्थानविषयस्य स्वरसंधेस्तद्विधायैव तुशब्देन निवर्तितत्वात् न तदर्थमिदं सूत्रमारम्भणीयम् । न चानेन तत्रत्यस्वरसन्धिः शक्यो निवारयितुम् । न्यायविरुद्धं हि व्यवहितस्य यवलोपस्यावधित्वाश्रयणम् । ग्रन्थच्छायाविरुद्धं च । यदीह यवलोप-

---

[1] सं. १-२-१. [2] सं. १-१-५. [3] सं. १-१-१४.
[4] सं. ४-३-१३. [5] सं. ४-२-३. [6] सं. ६-६-८.
[7] „ ६-६-२. [8] „ २-५-२.

स्यावधित्वमैष्यदाचार्यस्तदा तद्विध्यनन्तरमेव "नपरः" इति ब्रूयात्* । दोषवच्च तस्यावधित्वाश्रयणम् । 'एतत्ते अग्ने राध ऐति'[1] । 'इड एह्यदित एहि'[2] इत्यादावाङः प्रकृतिभावप्रसङ्गात् । इष्टार्थविषयं हीदं सूत्रं परैरिष्यते । न हि दोषवन्तं विधिं सूत्रकारा वदन्ति । ततो यवलोपमवधिमिच्छन् सूत्रकारः 'पूर्वश्च' इत्येव ब्रूयात् । एवं हि स्वरपराधिकारान्नातिप्रसङ्गः । तस्मान्नायमर्थोऽभिमतः सूत्रकारस्य इत्यलमतिप्रपञ्चेन ॥ २९ ॥

इत्याचार्यगार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये
प्रातिशाख्यव्याख्याने दशमोऽध्यायः.

—०:०:—

*इत्यस्यत्.

[1] सं. १-४-४३.

[2] सं. १-६-३.

# अथैकादशोऽध्यायः

## लुप्यते त्वकार एकारओकारपूर्वः ॥ १ ॥

एकारपूर्व ओकारपूर्वो वा अकारो लुप्यते । यथा—'तेऽब्रुवन्'[1] । 'सोऽब्रवीत्'[2] । तुशब्दो 'न प्लुतप्रग्रहौ' (१०–२४) इति निषेधसम्बन्धं निवर्तयतीति केचित् । स्वरपराधिकारं निवारयतीत्यपरे सङ्गिरन्ते । एकारोकारौ[3] पूर्वौ यस्मात् सः, तथोक्तः ॥ १ ॥

एकारओकारेति प्रकृतिभावश्छान्दसोऽसन्देहार्थः । एकारे ओकारे च पूर्वे सति अकारः पदादिर्लुप्यते । 'प्रयुजेऽग्नये'[4] । 'घर्मोऽसि'[5] । एतत्पूर्वं इति किम्? 'तमस्या अजाऽभ्यरुन्ध'[6] । तुशब्देन मूलशास्त्रोक्त एकादेशपक्षो विनिवर्त्यते । तत्र हि लघुतरमस्थायि लोपमनाश्रित्य 'अमिपूर्वः'[7] 'एङि पररूपम्'[8] इत्यादिना प्रतिपत्तिगौरवयुक्तमपि स्थायिरूपस्यैकादेशत्वमाश्रीयते । तन्निबन्धनमन्तादिवद्भावादि यथा स्यादिति । इह तु तदभावाल्लघुतरमाश्रित्य इतरः पक्षो निवर्त्यते ॥ १ ॥

---

## अथाल्लोपः ॥ २ ॥

'अथ' इत्ययमधिकारः । अल्लो। उच्यते, इत्येतदधिकृतं

---

[1] शु. २-५-१.  [2] सं. २-१-२.  [3] एकारओकारौ.
[4] „ १-२-२.  [5] स. १-१-८.  [6] स. ६-१-६.
[7] पा. ६-१-१०७.  [8] पा. ६-१-९४.

वेदितव्यम्, इत उत्तरं यद्वक्ष्यामः । न लोपः, अलोपः, लोपाभाव इत्यर्थः ॥ २ ॥

अलोप इति लोपाभाव उच्यते । स इहानन्तरोक्तस्याकारस्य अधिक्रियते । अत्र चतस्रः कक्ष्या भवन्ति । पूर्वसूत्रं प्रथमकक्ष्या । तदपवादभूतं 'धातारातिरुप' (११-३) इत्यादिकमलोपविधानं द्वितीया । तदपवादभूतमनन्तराध्यायस्थं लोपविधानं तृतीया । तदपवादभूतमस्मिन्नध्याये अलोपविधानं चतुर्थीति ॥ २ ॥

---

**धातारातिरुपवाजपेयजुष्टश्येनायोऽध्यध्रुवक्षितिरियमेवसायाऽग्नि*मूर्द्धारुःप्रथमोपेत्तमविकर्पविहव्यहिरण्यवर्णा(?)ग्र्याज्या महापृष्ठ्ये ॥ ३ ॥**

धातारातिरित्यादिष्वनुवाकेषु एकारपूर्व ओकारपूर्वो वा अकारो न लुप्यते । 'धाता रातिः'[1] इत्यत्र यथा—'निधिपतिर्नो अग्निः'[1] । रातिरिति किं? 'धाता देवेभ्योऽसुरान्' इति शाखान्तरे । 'उपप्रयन्तो अध्वरम्'[2] इत्यत्र यथा—'आरे अस्मे च'[2] । 'देव सवितः प्रसुव'[3] इत्यादिषडनुवाकानां वाजपेयसंज्ञा । अत्र यथा—'ते नो अर्वन्तः'[3] । 'ते अग्रे अश्वम्'[3] । 'जुष्टो वाचः'[4]

---

* 'मेवेयुरग्नि' इति वैदिकाभरणपाठः.

[1] स. १-४-४४. [2] स. १-५-५. [3] स. १-७-७, ८. [4] सं. ३-१-१०.

इत्यत्र यथा—'यस्ते अꣳशुः'[1] । 'यो द्रप्सो अꣳशुः'[1] । 'श्येनाय पत्वने'[2] इत्यत्र यथा—'नमः पितृभ्यो अभि'[2] । 'विश्वे अरपा एधते'[2] । उक्थ्ये यथा—'शृण्वन्ति विश्वे अमृतस्य'[3] । 'नमो अस्तु सर्पेभ्यः'[4] । 'ध्रुवक्षितिः'[5] इत्यत्र यथा—'विश्वे अभि गृणन्तु'[5] । 'ऊर्मिर्द्रप्सो अपाम्'[5] । क्षितिरिति किं? ध्रुवेत्यकारान्तस्यं यदि ग्रहणं स्यात् । 'ध्रुवोसि ध्रुवोऽहम्'[6] इत्यत्रापि भवेदिति । 'इयमेव सा या'[7] इत्यत्र यथा—'केतुं कृण्वाने अजरे'[7] । 'त्रयो घर्मासो अनु'[7] । इयमित्येतावतैवालं किमन्यैः? 'इयं ते शुक्र तनूः'[8] इत्यत्र 'सगर्भ्योऽनु सखा'[8] इति मा भूदिति । सा येति पदद्वयं मन्दधियां प्रतिपत्त्यर्थमिति केचित् । अन्ये त्वन्यथाऽपि कथयन्ति । अस्यानुवाकस्य शेषभूता या ऋगन्यत्र स्थिता साऽपि स्वीकर्तव्येति । यथा—'ये अपरीषु पश्यान्'[9] । 'अग्निर्मूर्द्धा दिवः'[10] इत्यत्र यथा—'स योजते अरुषः'[10] । 'एना वो अग्निम्'[10] । मूर्द्धेति किं? 'अग्निर्मा दुरिष्टात्'[11] इत्यत्र 'यो मेऽन्ति दूरे रातीयति'[11] इति माभूदिति । रुद्रप्रश्नस्य प्रथमोपोत्तमानुवाकयोर्यथा—'नमो अस्तु नीलग्रीवाय'[12–13]

[1] सं. ३-१-१०. [2] सं. ३-२-८. [3] सं. ४-१-१.
[4] ,, ४-२-८. [5] सं. ४-३-४. [6] ,, १-६-२.
[7] सं. ४ ३-११. [8] सं. १-२-४. [9] सं. १-४-३३.
[10] सं. ४-४-४. [11] सं. १-६-३. [12] सं. ४-५-१.
[13] 'यस्ताम्रो अरुणः' (सं.४-५-१.) 'द्रापे अन्धसस्पते' (सं.४-५-१०.) इत्यपि क्वाचित्कमुदाहरणान्तरम्.

'उत मा नो अर्भकम्'[1] । उत्तमस्य पूर्वतः सन्निकृष्टः उपोत्तमः । 'अश्मन्नूर्जम्'[2] इत्याद्यनुवाकपञ्चकस्य विकर्षसंज्ञा । तत्र यथा—'अन्यं ते अस्मत्'[3] । 'पावको अस्मभ्यम्'[3] । 'यो नस्ततो अभि'[4] । 'रायस्पोषे अधियज्ञो अस्थात्'[4] । 'वाजो नस्सप्त'[5] इत्याद्यनुवाकत्रयस्य विहव्यसंज्ञा—तत्र यथा—'विश्वे अद्य मरुतः'[5] । 'देवासो अधि वोचत'[6] । हिरण्यवर्णीये यथा—'एको देवो अप्यतिष्ठत्'[7] । याज्यासु यथा—'सुपथा राये अस्मान्'[8] । 'कामेन कृतो अभि'[8] । 'समिद्दिशाम्,'[9] 'जीमूतस्य,'[10] 'यदक्रन्दः,'[10] 'मा नो मित्रः'[10] 'ये वाजिनम्,'[10] 'अग्नेर्मन्वे'[11] षण्णामेषामनुवाकानां महापृष्ठ्यसंज्ञा । तत्र यथा—'विवस्वद्वाते अभि नः'[12] । 'सोमो अधि ब्रवीतु'[12] । महेति किं? 'पृथिवी तेऽन्तरिक्षेण'[13] ॥ ३ ॥

धातारातिरित्यादिषु पञ्च[14]सप्तत्यनुवाकेषु षकारपूर्व ओकारपूर्वश्च पदादिरकारो न लुप्यते । धातारातिः—'निधिपतिर्नो अग्निः'[15] । उपप्रयन्तः—'आरे अस्मे च'[16] । 'देव सवितः प्र सुव यज्ञम्'[17] इत्यादयः षडनुवाका वाजपेयसंज्ञाः—'ते अग्ने अश्वमायुञ्जन्ते अस्मिन्'[17] । 'ते नो अर्वन्तः'[17] । 'सुपुवे अग्ने'[18] ।

| | | |
|---|---|---|
| [1] सं. ४-६-१०. | [2] सं. ४-६-१. | [3] सं. ४-६-२. |
| [4] सं. ४-६-३. | [5] सं. ४-७-१२. | [6] सं. ४-७-१४. |
| [7] सं. ५-६-१. | [8] सं. १-१-१४. | [9] सं. २-४-१२. |
| [10] सं. ४,६,६-९. | [11] ,, २-५-१९. | [12] सं. २-६-६. |
| [13] सं. ५-२-१२. | [14] चतुः. | [15] सं. १-४-४४. |
| [16] ,, १-२-५. | [17] ,, १-७-७,८. | [18] ,, १-७-१०. |

'मध्वो अग्रम्'[1] । जुष्टो वाचो भूयासम्—'यस्ते अꣳशुः'[2] । 'यो द्रप्सो अꣳशुः'[2] । श्येनाय पत्वने—'पितृभ्यो अभि ये नः'[3] । उल्ब्ये—'विश्वे अमृतस्य'[4] । 'यो अग्निरग्नेः'[5] । ध्रुवक्षितिः—'तं त्वा विश्वे अभि गृणन्तु'[6] । इयमेव सा या–'चतुष्टोमो अभवत्'[7] । ईयुष्टे ये—'ये अपरीषु'[8] । अन्ये त्वियमेव सा येति पठन्तः तत्सहचारित्वादुत्तरानुवाकेऽपि कार्यं भवतीत्याहुः । तत्र स्फुटोऽतिप्रसङ्गः । न च सहोपयोगलक्षणं सहचारित्वनियामकम् । तत्रापि 'सम्पश्यामि'[9] इति पञ्चमन्त्रानुवाकेष्वतिप्रसङ्गात् । अग्निर्मूर्धा—'त्वामग्ने अङ्गिरसो गुहा'[10] । 'नमस्ते रुद्र मन्यवे'[11] इत्याद्येकादशानुवाकाः रुद्रसंज्ञाः । तेषु प्रथमोपोत्तमयोरनुवाकयोः 'नमस्ते रुद्र मन्यवे'[11] इत्यनुवाकः प्रथमः । उपोत्तम उपान्त्यो 'द्रापे अन्धसस्पते'[12] इति । आद्ये—'नमस्ते अस्तु धन्वने'[11] । उपान्त्ये–'द्रापे अन्धसस्पते'[12] । 'अश्मन्नूर्जम्'[13] इत्यादयः पञ्चानुवाकाः विकर्षसंज्ञाः—'न तत्पाणो अजरः'[13] । 'पुरो अग्निर्भवेह'[14] । 'वाजो नस्सप्त'[15] इत्यादयः त्रयोऽनुवाकाः विहव्यसंज्ञाः—'विश्वे अद्य मरुतः'[15] । 'वाजो अस्मे'[15] । 'देवासो अधिवोचता मे'[16] । 'हिरण्यवर्णाः'[17] इत्यनुवाको हिरण्यवर्णीयः–'सत्यानृते अवपश्यन् जनानाम्'[17] । 'उभा वामिन्द्राग्नी'[18] प्रभृति 'अग्निसूत्राणि'[19] पर्यन्तं प्रश्नोत्तमानुवाका याज्यासंज्ञास्स्युः, 'युक्ष्वा हि'[20] इत्यनुवाकश्च । तेषु यथा–

[1] सं. १-७-१२. [2] सं. ३-१-१०. [3] सं. ३-२-८.
[4] „ ४-२-१. [5] „ ४-२-१०. [6] „ ४-३-४.
[7] सं. ४-३-११. [8] „ १-४-३३. [9] „ १-३-६.
[10] सं. ४-४-४. [11] सं. ४-५-१. [12] सं. ४-५-१०.
[13] सं. ४-६-१. [14] सं. ४-६-५ [15] सं. ४-७-१२.
[16] सं. ४-७-१४. [17] सं. ५-६-१. [18] सं. १-१-१४.
[19] „ ४-२-१३. [20] „ ३-६-११.

'पयो अस्मासु धुक्ष्व'[1] । 'सुपथा राये अस्मान्'[1] । 'विशो अस्या अदब्धः'[2] । 'यो नो दूरे अघशꣳसः'[2] । 'रुद्रो असुरः'[3] । 'यशो अस्मासु धेहि'[4] । 'पृष्टो अग्निः'[5] । 'इन्द्रस्य घर्मो अतिथिः'[6] । 'वाचशाने अन्वापो अजिहत'[7] । 'बृहस्पते अति यदर्यो अर्हात्'[8] 'वसुभिर्नो अव्यात्'[9] । 'नमस्ते अग्न ओजसे'[10] । 'इश आरूपे अन्नम्'[11] । 'सुविदत्रो अस्मे'[11] ॥ 'समिद्दिशाम्'[12] 'जीमूतस्य'[13] 'यदक्रन्दः'[13] 'मा नो मित्रः'[13] 'ये वाजिनम्'[13] 'अग्नेर्मन्वे'[11] इति षण्णामनुवाकानां महापृष्ठ्यसंज्ञा—'विवस्वद्वाते अभि नः'[12] । 'धर्मे आस्थरम्'[14] ॥ ३ ॥

—⊂○⊃—

## अꣳहसोऽꣳहतिरनिष्टृतोऽवन्त्वस्मानवद्यादहनि च ॥ ४ ॥

चकारो 'धातारातिः' (११—३) इत्यादिविषयान्वादेशकः । अꣳहसः, अꣳहतिः, अनिष्टृतः, अवन्त्वस्मान्, अवद्यात्, अहनि इत्येतेषु ग्रहणेषु 'धातारातिः' (११-३) इत्यादिस्थलान्तर्वर्तिष्वेकारपूर्वं ओकारपूर्वो वा अकारो न लुप्यते । यथा—'प्रमुञ्चन्तो नो अꣳहसः'[11] । 'परिद्वेषसो अꣳहतिः'[10] । 'वर्द्धतां ते अनिष्टृतः'[15] । 'ते अवन्त्व-

[1] स. १-१-१४. [2] सं. १-२-१४. [3] सं. १-३-१४.
[4] स. १-४-४६. [5] स. १-५-११. [6] पा. १-६-१२.
[7] सं. १-७-१३. [8] स. १-८-२२. [9] सं. २-१-११.
[10] सं. २-६-११. [11] सं. ४-३-१३. [12] सं. ४-४-१२.
[13] सं. ४,६,६-५. [14] सं. ४-७-१५. [15] सं. ४-१-७.

स्मान्'[1] अस्मानिति किं? 'ते नोऽवन्तु पितरः'[1]। 'मित्रमहो अवद्यात्'[2]। 'शुचिश्शुक्रे अहनि'[3]। 'यवनह' (१२-४) परत्वादेषु प्राप्यमाणलोपेषु अलोपोऽयं विहितः। अन्वादेशः किमर्थः? 'स एवैनं पाप्मनोऽꣳहसो मुञ्चति'[4]॥ ४॥

चशब्दो 'धाताराति:' (११-३) इत्यादीननुवाकानन्वादिशति। तत्र 'यवनहस्वरपरेषु' (१२-४) इत्यस्यापवादार्थ[5] एष पुनर्विधिश्चतुर्थकक्ष्या। अनुस्वारस्य तु विधास्यमानत्वेन अव्यवधायकत्वं पुरस्ताद्दर्शितम्। तस्मादꣳहसोऽꣳहतिरित्यनयोर्ग्रहणम्। अꣳहसः—'प्रमुञ्चन्तो नो अꣳहसः'[6]। अꣳहतिः—'परिद्वेषसो अꣳहतिः'[7]। अनिष्टृतः—'वर्धतां ते अनिष्टृतः'[8]। अवन्त्वस्मान्—'अधिब्रुवन्तु ते अवन्त्वस्मान्'[1]। अस्मानित्युपबन्धेन किम्? 'ते नोऽवन्तु पितरः'[1]। अवद्यात्—'मित्रमहो अवद्यात्'[2]। अहनि—'शुचिश्शुक्रे अहन्योजसीना'[3]। अन्वादेशाभावे द्वितीयकक्ष्या विज्ञायेत तथाच—'स एवैनं पाप्मनोऽꣳहसो मुञ्चति'[4] इत्यत्र अलोपस्स्यात्॥ ४॥

---

## अनुघर्मासआपोमर्तोरथस्त्वोदंत्तेवातःपूर्वः॥

अत्र विसर्गान्तानामोत्वमापन्नानां पूर्वनिमित्तत्वमिति विज्ञेयम्। घर्मासः, आपः, मर्तः, रथः, त्वः, दत्ते, वातः इत्येवम्पूर्वः अन्वि-

---

[1] स. २-६-१२. [2] स. १-२ १८. [3] स. ४-४-१२.
[4] स. २-२-७. [5] इत्यपवादस्बाधनार्थः. [6] स. ४-३-१३.
[7] सं. २-६-११. [8] सं. ४-१-७.

त्यत्र अकारो न लुप्यते । यथा—'त्रयो घर्मासो अनु'[1] । 'तस्मादापो अनु'[2] । 'यदा ते मर्तो अनु'[3] । 'अनु त्वा रथो अनु'[3] । 'पीयति त्वो अनु'[4] । 'शुक्रमादत्ते अनुहाय'[5] । 'धनुस्तद्वातो अनु'[6] । अन्विति किं? 'वातोऽभिपवते'[7] । एवम्पूर्व इति किं? 'अनु गावोऽनु भगः'[3] 'यवनह' (१२–४) स्वरपरत्वनिषेधार्थोऽयमारम्भः ॥ ५ ॥

घर्मास इत्यादिषु पदेषु पूर्वेष्वनुशब्दस्याकारो न लुप्यते अत्रान्वादेशकाभावेऽपि सामर्थ्यादादितः पञ्चानां चतुर्थकक्ष्यात्वं वेदितव्यम् । घर्मासः—'घर्मासो अनुज्योतिषागुः'[1] । आपः—'तस्मादापो अनु स्थन'[2] । मर्तः—'यदा ते मर्तो अनु'[3] । रथः—'अनु त्वा रथो अनु'[3] । त्वः—'पीयति त्वो अनु त्वो गृणाति'[4] । दत्ते वात इत्येते तु द्वितीयकक्ष्याविषये । दत्ते—'शुक्रमादत्ते अनुहाय'[5] । वातः—'वातो अनु वातु वे'[6] । एतत्पूर्व इति किम्? 'अनु गावोऽनु भगः'[3] । 'सोऽनु ध्यायति'[8] ॥ ५ ॥

---

## अभिवात्वपश्च ॥ ६ ॥

चकारो वात इत्यन्वादिशति । अभिवातु, अपः इत्येतयो रकारो वातःपूर्वो न लुप्यते । यथा—'मयोभूर्वातो अभिवातु'[9].

---

[1] सं. ४-३-११.  [2] सं. ५-६-१.  [3] सं. ४-६-७.
[4] सं. ४-२-३.  [5] सं. ३-२-२.  [6] सं. ५-६-७.
[7] सं. ५-४-९.  [8] सं. ३-१-३.  [9] सं. ७-४-१७.

वात्विति किं? 'वातोऽभिपवते'[1] । 'यद्वातो अपो अगमत्'[2] । अन्वादेशेन किं? 'अव रुन्धेऽपोऽग्रेऽभि व्याहरति'[3] ॥ ६ ॥

चशब्देन वातःपूर्व इत्यन्वादिश्यते । वात इत्यस्मिन् पूर्वे अभिवातु, अप इत्येतयोरकारो न लुप्यते । द्वितीयकक्ष्येयम् । अभिवातु — 'मयोभूर्वातो अभिवातु'[4] । वात्विति किम्? 'वातोऽभि पवते'[1] । अपः — 'यद्वातो अपो अगमत्'[2] अन्वादेशेन किम्? 'सोऽपः प्राविशत्'[5] ॥ ६ ॥

---

## अन्वगमञ्च ॥ ७ ॥

अप इति चकारोऽन्वादिशति । अनु, अगमत् इत्येतयोरकारो न खल्वपःपूर्वो लुप्यते । यथा—'अपो अन्वचारिषम्'[6] । 'अपो अगमदिन्द्रस्य'[2] । एवम्पूर्वं इति किं? 'पशवोऽनूदायन्'[7] ॥ ७ ॥

चशब्देनाप इत्यन्वादिश्यते । पूर्वं इति च । अप इत्यस्मिन् पूर्वं अनु, अगमत् इत्येतयोरकारो न लुप्यते । अत्रानुग्रहणं द्वितीयचतुर्थकक्ष्ययोः भवति । 'अपो अन्वचारिषम्'[6] इत्यवभृथानुवाके याज्याकाण्डे च ग्रहणात् । अगमदिति तु द्वितीयस्या-

[1] सं. ६-४-९.
[2] सं. ७-४-२०.
[3] ,, ६-४-३.
[4] ,, ७-४-१७.
[5] सं. २-६-६.
[6] ,, १-४-४५.
[7] सं. २-१-६.

मेव । 'यद्वातो अपो अगमत्'[1] । अन्वादेशव्यावर्त्यमनुशब्द एव । तत्पूर्वतरसूत्रे दर्शितम् ॥ ७ ॥

## आपःपूर्वोऽद्भिरपांनपादस्मान् ॥ ८ ॥

अद्भिः, अपांनपात्, अस्मान् एतेषु अकार आपःपूर्वो न लुप्यते । यथा—'समापो अद्भिरग्मत'[2] । 'देवीरापो अपां नपात्'[3] । नपादिति किं? 'वारुणीरापोपां च'[4] । 'आपो अस्मान्मातरः'[5] । एवम्पूर्व इति किं? 'सोऽस्मान्पातु'[6] ॥ ८ ॥

आप इत्यस्मिन् पूर्वे अद्भिरित्यादिषु अकारो न लुप्यते । द्वितीयकक्ष्येयम् । अद्भिः—'समापो अद्भिरग्मत'[2] । अपां नपात्—'देवीरापो अपां नपात्'[3] । नपादिति किम्? 'वारुणीरापोऽपाम्'[4] अस्मान्—'आपो अस्मान्मातरः'[5] । आपः पूर्व इति किम्? 'यथा वरुणोऽद्भिः'[7] । 'वयमिह प्रदातारस्स्मोऽस्मानमुत्र'[8] ॥ ८ ॥

---

## रायेसइन्द्रःपूर्वश्चाकारपरे ॥ ९ ॥

चकाराकृष्टे अस्मान्ग्रहणे अकारपरे वर्तमानोऽकारो रायेसः, इन्द्रः एवम्पूर्वो न लुप्यते । रायेपूर्वस्योदाहरणं शाखान्तरे । अथवा जटायां भवति यथा—'राये अस्मानस्माद्राये

---

[1] सं. ७-४-२०. [2] सं १-१-८. [3] सं. १-२-३.
[4] सं. २-२-६. [5] ,, १-२-१. [6] ,, ५-५-५.
[7] ,, ७-५-२३. [8] सं. ६-६-१.

राये अस्मान्"[1] । संहितायां[2] तु नोदाहरणम्, अकारपरत्वाभावात्, तर्हि तत्र कथमलोप इति चेत् । 'त्रिपद्प्रभृति' (१–६१) पुनरुक्तत्वादिति ब्रूमः । 'मा सो अस्मा<sup></sup>ऽ अवहाय'[3] । 'इन्द्रो अस्मानस्मिन्'[4] । अकारपर इति किं? 'सोऽस्मान्पातु'[5] । एवम्पूर्व इति किं? 'स्मोऽस्मानमुत्र'[6] । अकारः परो यस्मात् असौ अकारपरः तस्मिन् ॥ ९ ॥

चशब्दोऽस्मान्शब्दमन्वादिशति । अकारपर इत्युपबन्धनिर्देशः । राये, सः, इन्द्रः इत्येतेषु पूर्वेषु अकारपरे अस्मान्शब्दे अकारो न लुप्यते । उपबन्धः सःपूर्वमात्रार्थः । तत्र हि सम्भवव्यभिचाराभ्यामेपाऽर्थवान् भवति । रायेपूर्वे तु न सम्भवः इन्द्रःपूर्वे तु न व्यभिचारः । रायेपूर्वस्योदाहरणं शाखान्तरे 'धातारातिः' (११–३) इत्यादिव्यतिरिक्तदेशे द्रष्टव्यम्, यत्रान्यतः प्राप्तिर्न विद्यते । सःपूर्वः–'सो अस्मा<sup></sup>ऽ अधिपतीन् करोतु'[7] । अकारपर इति किम्? 'सोऽस्मान्पातु'[5] । इन्द्रःपूर्वः–'मरुत इन्द्रो अस्मानस्मिन्'[4] । ननु रायेपूर्वस्स्वशाखायामस्ति—'अग्ने नय सुपथा राये अस्मान्'[1] इति । सत्यम् । अन्यतस्सिद्धत्वान्नास्योदाहरणं भवितुमर्हति । याज्याकाण्डस्थस्य "धातारातिः' (११–३) इत्यादिसूत्रेण अलोपस्सिद्धः । दाक्षिणकाण्डस्थस्य च 'यथोक्तं पुनरुक्तं त्रिपद्प्रभृति' (१–६१) इति । तस्मात् सुष्ठूक्तम् 'शाखान्तरेऽस्योदाहरणम्' इति । ननु च अकारपरत्वमस्य न सम्भव-

[1] सं. १-१-१४. [2] यथा ंहिता, यथासंहितायां इति पाठान्तरे.
[3] सं. ५-७-९. [4] सं. ३-१-′. [5] सं. ५-५-६.
[6] सं. ६-६-१. [7] सं, १-६-६.

तीत्युक्तं नोपपद्यते, जटायां तत्सम्भवात्, 'राये अस्मानस्माद्राये राये अस्मान्'[1] इति । तस्मात्सःपूर्ववद्रायेपूर्वेऽपि सम्भवव्यभिचाराभ्यां अकारपर इत्युपबन्धोऽर्थवानेव भवति । ततश्च रायेग्रहणं स्वशाखायामेव 'अग्ने नय सुपथा'[1]इत्यस्मिन् पादे 'धातारातिः'(११-२) इत्यादिसूत्रप्राप्तस्य अलोपस्य विषयनियमार्थतया लब्धावकाशमेव भवति । अतः नास्य शाखान्तरविषयत्वं कल्पयितव्यम् । स्वशाखायामलब्धावकाशो हि विधिः शाखान्तरविषयत्वकल्पनयोपपादयितव्यः । यथा—'अहारहस्सुवरानिङ्घान्तः' (८-१३) इत्यत्र अहास्सुवर्ग्रहणं 'ह्वारभार्' (८-८) इत्यादिसूत्रप्राप्तस्य विषयनियमार्थम्, अहर्ग्रहणं त्वप्राप्तप्रापणार्थम्, एवं अत्रापि रायेग्रहणं प्राप्तनियमार्थम्, सइन्द्रोग्रहणं तु अप्राप्तप्रापणार्थमित्यापद्यते । तथा च सति संहिताम्नाये कथमलोपः प्राप्नोति? 'राये अस्मान् विश्वानि देव'[1] इत्यकारपरत्वाभावात् । अत्रोच्यते -जटायाश्शास्त्रविषयत्वाभ्युपगमादेवायं दुष्परिहारोऽनर्थ आपद्यते । न तु तत्सूत्रकारस्याभिमतम् । यद्यसौ तदैपिष्यत् 'रायेसइन्द्रःपूर्वश्चाकारपरे' इति न ब्रूयात्, किन्तु 'राये पूर्वश्च' 'सइन्द्रःपूर्वश्चाकारपरे' इति सूत्रद्वयमेव कुर्यात् । अपि च शास्त्रान्ते 'पदक्रमविशेषज्ञः' (२४-६) इति संहितापदक्रमरूपस्य त्रिविधस्यैव समाम्नायस्य विषयतां वक्ष्यति । तस्माज्जटा नास्य शास्त्रस्य विषय इति सिद्धम् । तथा सत्यकारपर इत्येतद्रायेपूर्वस्य न संभवतीति । रायेग्रहणं न प्राप्तस्य नियमार्थं भवति अपितर्ह्यप्राप्तप्रापणार्थमेव । एवं सति स्वशाखायां अवकाशाभावादस्य शाखान्तरविषयत्वं कल्प्यते । अतो न कश्चिद्दोषः ।

[1] सं. १-१-१४.

ननु यदि जटा प्रातिशाख्यस्याविषयः तदा 'प्रातिशाख्यादिशास्त्रज्ञः सर्वशिक्षाविशारदः । बुद्धिशक्तिसमेतो यः स जटां वक्तुमर्हति' इति शिक्षाविरोधस्स्यात् ॥ नैतदस्ति । न ह्यत्र प्रातिशाख्यमात्रेण जटा निर्वहतीत्युच्यते । अपि तु तेन तदादिशास्त्रैः शिक्षादिभिश्चेति । तस्माच्छिक्षाव्याकरणान्यपि जटायामुपयुज्यन्त एव । तत्र समाम्नातांशेषु प्रातिशाख्यमुपयुज्यते । असमाम्नातांशेषु तु शिक्षाव्याकरणानीति विवेकः । तथा हि शाखाविशेषवर्तिकार्यविशेषप्रधानं हि प्रातिशाख्यम् । कार्यविशेषाश्च ते समाम्नानैकमूलाः शिक्षाव्याकरणानि तु सर्ववेदलोकसाधारणत्वाद्वैशेषिकस्य प्रातिशाख्यस्य विषयं परिहृत्य प्रवर्तन्त इति । ननु यदि प्रातिशाख्यमपि जटायामुपयुज्यते कथं तर्हि प्रातिशाख्यस्याविषयो जटेत्युच्यते ? श्रूयताम्—क्रमो हि जटायाः प्रकृतिः, "संहिता प्रकृतिः प्रोक्ता पदस्यैतत्क्रमस्य तु । जटायाः प्रकृतिस्त्वेष एवं नित्यं निबोधत" इति शिक्षावचनात् । क्रमस्तु तत्तज्जटाया आद्यन्तयोर्वर्तते । तत्र जटायाश्शास्त्राविषयत्वेऽपि तत्प्रकृतिभूतस्य क्रमस्य शास्त्रविषयत्वात् जटायामपि क्रमांशे प्रातिशाख्यमुपयुज्यत इत्यविरोधः। ननु—यद्यनाम्नातसन्धौ प्रातिशाख्यं न प्रवर्तते, तदा जटायां कम्पस्वरो न स्यात् । न ह्यसौ व्याकरणे स्मर्यते । सत्यम्। शिक्षायां तु स्मर्यत एव । साऽपि जटायामुपयुज्यत एवेति तद्विहितः कम्पस्वरो भवत्येव । तस्माज्जटायामनाम्नातांशे शिक्षाव्याकरणोक्तमेव कार्यं भवतीति सिद्धम् । यानि तु वैकल्पिकानि सन्धिकार्याणि यथा 'यरोऽनुनासिकेऽनुनासिको वा'[1] 'वा पदान्तस्य'[2] इत्यादीनि, तत्र तत्र यतरदस्मच्छाखायां दृष्टं तत-

[1] पा. ८-४-४५. [2] पा. ८-४-५९.

रदेव जटायामुपादीयते । छान्दसकार्याणि तु सर्वाणि नोपादेयानीत्येवं सर्वत्रानुसन्धेयम् ॥ ९ ॥

---

## तेपूर्वोऽद्यान्धोऽ२शुरग्ने ॥ १० ॥

अद्य, अन्धः, अ२शुः, अग्ने एतेष्वकारः, ते इत्येवम्पूर्वो न लुप्यते । यथा—'पशुं पशुपते ते अद्य'[1] । 'उपो ते अन्धः'[2]। 'अ२शुना ते अ२शुः'[3] । 'यत्ते अग्ने तेजस्तेनाहम्'[4] । एतेष्विति किं? 'तेऽग्नये प्रवते'[5] । तेपूर्व इति किं? 'प्रथमोऽ२शु स्कन्दति'[6] । 'तेन त्वां दधेऽग्ने अङ्गिरः'[7] ॥ १० ॥

तेशब्दे पूर्वे अद्य, अन्धः, अ२शुः, अग्ने इत्येतेषामादिरकारो न लुप्यते । यथा—'पशुपते ते अद्य बध्नामि'[1] । 'उपो ते अन्धः'[2] । 'अ२शुना ते अ२शुः'[3] । 'यत्ते अग्ने तेजः'[4] । तेपूर्व इति किम्? 'अमा वै नोऽद्य'[8] । द्वितीयकस्येयम् ॥१० ॥

---

## मेपूर्वश्च ॥ ११ ॥

चकाराकृष्टे अग्ने इत्यस्मिन्[9] अकारो मे इत्येवम्पूर्वो न लुप्यते । यथा—'यन्मे अग्ने अस्य'[10] । 'इमा मे अग्न इष्ट-

1 सं. ३-१-४. 2 सं. २-४-४. 3 सं. १-२-६.
4 सं. ३-५-२. 5 ,, २-४-१. 6 ,, ३-१-८.
7 सं. १-२-१२. 8 ,, २-५-३. 9 इत्यस्मिन्ग्रहणे.
10 ,, १-६-२.

काः[11]। मेपूर्व इति किम्? 'तेन त्वा दधेऽग्ने अङ्गिरः'[12]। अन्वादेशेन किं? 'प्राणश्च मेऽपानश्च मे'[13]। 'तद्दशाकं तन्मेऽराधि'[14]॥ ११॥

चशब्देनाग्नेशब्दोऽन्वादिश्यते। मेशब्दे पूर्वे अग्नेशब्दस्यादिरकारो न लुप्यते। 'यन्मे अग्ने अस्य'[15] मेपूर्व इति किम्? 'तेन त्वा दधेऽग्ने अङ्गिरः'[12]। अन्वादेशेन किम्? 'तद्दशाकं तन्मेऽराधि'[14]। द्वितीयकक्ष्येयमपि। तस्मात् 'अकारग्नपर उदात्तः' (१२-६) इत्यनेनास्य न विरोधः। तस्य 'धाता रातिः' (११-२) इत्यादिसूत्रविषयत्वात्। ततश्च 'अग्ने अङ्गिरः'[12] इत्यग्नेशब्दः प्रत्युदाहरणं भवत्येव॥ ११॥

---

## अस्याश्विनाऽपरा च॥ १२॥

मेपूर्वे इति चकारोऽन्वादिशति। अस्य, अश्विना, अपरा एतेष्वकारो मेपूर्वो न लुप्यते। 'वियन्तु देवा हविषो मे अस्य'[16]। 'पुनर्मे अश्विना युवम्'[17]। 'यद्वा मे अपरागतम्'[18]॥ १२॥

चशब्देन मेपूर्व इत्यन्वादिश्यते। मेशब्दे पूर्वे अस्येत्यादीनामादिरकारो न लुप्यते। अस्य—'हविषो मे अस्य'[16]। अ-

[1] सं. ४-४-११. [2] सं. १-२-१२. [3] सं. ४-७-१.
[4] ,, १-६-६. [5] ,, १-६-२. [6] ,, १-५-१०.
[7] सं. ३-३-९. [8] सं. ६-६-७.

श्विना–'पुनर्मे अश्विना युवम्'[1] । अपरा–'यद्वामे अपरागतम्'[3] । अन्वादेशेन किम् ? 'कोऽस्येश्वरः'[3]॥ १२ ॥

---

## नःपूर्वोऽसदग्निरघान्तमोऽभ्यस्मिन्नद्यपथि ॥

असत्, अग्नि, अघ, अन्तमः, अभि, अस्मिन्, अद्यपथि एतेष्वकारो नः इत्येवम्पूर्वो न लुप्यते । यथा—'सुपारा नो असद्वशे'[4] । 'अयं नो अग्निर्वरिवः'[5] । 'रक्षा माकिर्नो अघशंस ईशत'[6] । 'अग्ने त्वं नो अन्तमः'[7] । 'स्विष्टिं नो अभि'[8] । 'शिक्षा नो अस्मिन्'[9] । 'तेभिर्नो अद्य पथिभिः'[10] । पथीति किं ? 'नोऽद्य वसु वसतीति'[11] । नःपूर्व इति किं ? 'तस्मादश्वाद्दर्भोऽसत्तरः'[12] । 'सोऽग्निर्जातः'[13] । 'उत्तरतोऽघायुरभि दासति'[14] । 'तेऽस्मिन्नैच्छन्त'[15]। एतेष्विति किं ? 'ते नः पान्तु ते नोऽवन्तु'[16] ॥ १३ ॥

नश्शब्दे पूर्वे असत् इत्यादीनामादिरकारो न लुप्यते। असत्–'सुपारा नो असद्वशे'[4] । अग्निः–'अयं नो अग्निर्वरिवः'[5] इत्यध्वरकाण्डे । अघ–'रक्षा माकिर्नो अघशंस ईशत'[6] इति ग्रहकाण्डे । अन्तमः—'अग्ने त्वं नो अन्तमः'[7] । अभि—'स्विष्टिं नो अभि'[8] । अस्मिन्–'शिक्षा नो अस्मिन्'[9] । अद्यपथि–'तेभिर्नो अद्य

---

[1] स. ३-२-५.   [2] सं. ६-१-७.   [3] स. २-६-७.
[4] स. १-२-३.   [5] स. १-३-४.   [6] स. १-४-२४.
[7] सं. १-५-६.   [8] सं ३-१-९.   [9] ,, ७-५-७.
[10] ,, ७-६-२४.   [11] ,, २-५-३.   [12] ,, ५-१-२.
[13] ,, ६-१-४.   [14] ,, ५-७-३.   [15] ,, ७-२-१०.

पथिभिः[1] । प्रथीति किम्? 'अमा वै नोऽद्य'[2] । नःपूर्व इति किम्? 'ओषधयोऽसत्पुरुषः'[3] ॥ १३ ॥

---

## नमःपूर्वोऽग्रेऽश्वेभ्योऽग्रियाय ॥ १४ ॥

अग्रे, अश्वेभ्यः, अग्रियाय एतेष्वकारो नमःपूर्वो न लुप्यते । 'नमो अग्रेवधाय च'[4] । 'नमो अश्वेभ्योऽश्वपतिभ्यः'[5] । 'नमो अग्रियाय च'[6] । नमःपूर्व इति किं? 'अपोऽग्रेऽपि व्याहरति'[7] । एतेष्विति किं? 'नमोऽग्रयेऽप्रतिविद्धाय'[8] ॥ १४ ॥

नमश्शब्दे पूर्वे अग्र इत्यादीनां आदिरकारो न लुप्यते । अग्रे—'नमो अग्रेवधाय च'[4] । अश्वेभ्यः—'नमो अश्वेभ्यः'[5] । अग्रियाय—'नमो अग्रियाय च'[6] । नमःपूर्व इति किम्? 'अग्रे गुवोऽग्र इमम्'[9] ॥ १४ ॥

---

## आविन्नस्सोमःपूर्वो ग्निपरः ॥ १५ ॥

आविन्नः, सोमः एवम्पूर्वोऽकारो ग्निपरो न लुप्यते । ग्नीतिपदैकदेशः शाखान्तरे बहूपादानार्थः । 'आविन्नो अग्निर्गृहपतिः'[10] ।

---

1 सं. १-५-२४. 2 सं. २-५-२. 3 स. २-१-५.
4 „ ४-५-८. 5 „ ४-५-२. 6 „ ४-५-५.
7 „ ६-४-२. 8 „ १-५-१०. 9 १-१-५.
10 „ १-८-१२.

'सोमो अग्निरुप देवाः'[1] । एवम्पूर्वं इति किं? 'सोऽग्निर्जातः'[2] । एवम्पर इति किं? 'आविन्नोऽयमसौ'[3] ॥ १९ ॥

आविन्नरसोम इत्यनयोः पूर्वयोः अग्नि'शब्दपरोऽकारो न लुप्यते। 'आविन्नो अग्निः'[3]। 'सोमो अग्निः'[1]। एतत्पूर्वं इति किम्? 'संवत्सरोऽग्निश्चित्यः'[5] । अग्नि'पर इति किम्? 'आविन्नोऽयमसौ'[3] ॥ १९ ॥



धीरासोऽदब्धासएकादशासऋषीणांपुत्रश्शार्यातेऽपाढःपितारःपृथिवीयज्ञआसतेये – गृह्णाम्यग्रेवाश्शएषजज्ञेसङ्स्फानोयुवयो– र्यःपृष्ठपतिर्वोगोशुष्मःपुवस्समिद्धऋषभः पाथोवचोवर्षिष्ठेजुपाणोयोरुद्रोवृष्णःपूर्वः

धीरासः, अदब्धासः, एकादशासः, ऋषीणां पुत्रः, शार्याते, अपाढः, पितारः, पृथिवीयज्ञे, आसतेये, गृह्णाम्यग्रे, वाश्शएषः, जज्ञे, सङ्स्फानः, युवयोर्यः, पृष्ठे, पतिर्वः, गो, शुष्मः, पुवः, समिद्धः, ऋषभः, पाथः, वचः, वर्षिष्ठे, जुषाणः, योरुद्रः, वृष्णः एवम्पूर्वो न खल्वकारो लुप्यते । यथा—'धीरासो अनु-

[1]सं. ३-२४. [2]सं. ५-१-४. [3]सं. १-८-१२.
[4]अग्नि. [5] „ ५-६-७.

दृश्य यजन्ते '[1] । 'अदब्धासो अदाभ्यम् '[2] । 'एकादशासो अप्सुषदः '[3] । 'ऋषीणां पुत्रो अधिराज एषः '[4] । ऋषीणामिति किं ? 'यस्य पुत्रोऽजातः '[5] । 'यथा शायींते अपिवः '[6] । 'अपाद्वो अग्निः '[7] । 'त्वत्पितारो अग्ने देवाः '[7] । 'पृथिवी यज्ञे अस्मिन् '[8] । पृथिवीति किं ? 'ते माऽस्मिन् यज्ञे'[9] इत्यत्र जटायां—'अस्मिन् यज्ञे यज्ञेऽस्मिन्नस्मिन् यज्ञे '[9] । 'अध्यासते ये अन्तरिक्षे '[10] । आसत इति किं ? 'पृथिव्यां येऽन्तरिक्षे '[11] । 'मयि गृह्णाम्यग्रे अग्निम् '[12] । गृह्णामीति किं ? 'अष्टाकृत्वोऽग्रेऽभिघुणोति '[13] । 'इडावाँ एषो असुर '[14] । वानिति किं ? 'शुक्र एषोऽन्तोऽन्तं मनुष्यः '[15] । 'प्रथमं जज्ञे अग्निः '[16] । 'सꣳस्फानो अभि रक्षतु '[17] । सामिति किं ? 'गयस्फानोऽग्निषु ' इति शाखान्तरे । 'युवयोर्यो अस्ति '[10] । युवयोरिति किं ? 'योऽप्सु भस्म '[18] । 'नाकस्य पृष्ठे अधि '[19] । 'यज्ञपतिर्वो अत्र '[20] । पतिरिति किं ? 'न वोऽभागानि हव्यम् '[21] । 'गोअर्घमेव सोमं करोति '[22] । 'अप्यकारादि ' (१–५२) इति वचनात् 'अगो-

---

[1] सं. २-१-९. [2] सं. १-१-१०. [3] सं. १-४-११.
[4] ,, १-३-७. [5] ,, १-५-८. [6] ,, १-४-१८.
[7] ,, १-५-१०. [8] ,, १-६-५. [9] ,, ३-२-५.
[10] ,, ३-५-४. [11] ,, ४-६-११. [12] ,, ५-७-९.
[13] ,, ६-४-५. [14] ,, १-६-६. [15] ,, ७-२-२.
[16] ,, २-२-४. [17] ,, ३-१-८. [18] ,, ५-२-२.
[19] ,, ३-५-५. [20] ,, ५-७-७. [21] ,, ५-१-१.
[22] ,, ६-१-१०.

अर्धम्’[1] इति चोदाहरणम् । ‘उच्छुष्मो अग्नें यजमनाय’[2] । ‘अग्रे पुवो अग्रे गुवः’[3] । ‘समिद्धो अञ्जन्’[4] । ‘द्यामृष-भो अन्तारिक्षम्’[5] । ‘प्रियं पाथो अपीहि’[6] । ‘उग्रं वचो अ-पावधीम्’[7] । ‘वर्षिष्ठे अधि नाके’[8] । ‘जुषाणो अप्तुराज्यस्य वेतु’[9] । ‘यो रुद्रो अग्नौ यः’[10] । य इति किं ? ‘यदुपतृन्द्या-द्रुद्रोऽस्य’[11] । ‘वृष्णो अश्वस्य सन्दानम्’[12] ॥ १६ ॥

धीरास इत्यादिषु पूर्वेषु पदादिरकारो न लुप्यते । धीरा-सः—‘तां धीरासो अनुदृश्य यजन्ते’[13] । अदब्धासः—‘अद-ब्धासो अदाभ्यम्’[14] । एकादशासः—‘एकादशासो अप्सुषदः’[15] । ऋषीणां पुत्रः—‘ऋषीणां पुत्रो अधिराज एषः’[16] । ऋषीणामि-ति किम् ? ‘यस्य पुत्रोऽजातस्स्यात्’[17] । शार्याते—‘यथा शा-र्याते अपिबस्सुतस्य’[18] । अषाढः—‘अषाढो अग्निः’[19] । पिता-रः—‘स्वरपितारो अग्ने’[19] । पृथिवी यज्ञे—‘उरुधारा पृथिवी यज्ञे अस्मिन्’[20] । पृथिवीत्युपबन्धव्यावर्त्यं शाखान्तरे । जटायां तु अलोपप्राप्त्यभावान्न तत्र प्रत्युदाहरणं युक्तम् । आसते ये—‘अध्यासते ये अन्तरिक्षे’[21] । आसत इति किम् ? ‘ये पृथि-व्यां येऽन्तरिक्षे’[22] । गृह्णाम्यग्रे—‘मयि गृह्णाम्यग्रे अग्निम्’[23] ।

[1] स. ६-१-१०. [2] सं. १-६-२. [3] स. १-१-६.
[4] ,, ५-१-११. [5] ,, १-२-८. [6] ,, ३-३-३.
[7] ,, १-२-११. [8] ,, १-१-८. [9] ,, १-३-४.
[10] ,, ५-५-९. [11] ,, ६-३-९. [12] ,, २-४-७.
[13] ,, १-१-९. [14] ,, ७-१-१०. [15] ,, १-४-११.
[16] ,, १-३-७. [17] ,, १-५-८. [18] ,, १-४-१८.
[19] ,, १-६-१०. [20] ,, १-६-५. [21] ,, ३-५-४.
[22] ,, ४-६-११. [23] ,, ५-७-९.

गृह्णामीति किम्? 'अपोऽग्नेऽभि व्याहरति'[1]। वाऽएषः—'इडा-वाऽ एषो असुर प्रजावान्'[2] इति याजमाने। वानिति किम्? 'ध्रुवो वा एषोऽग्नेः'[3]। जज्ञे—'इतः प्रथमं जज्ञे अग्निः'[4]। सꣳस्फानः—'सꣳस्फानो अभि रक्षतु'[5]। सामित्युपबन्धव्यावर्त्यं शाखान्तरे। युवयोर्यः—'युवयोर्यो अस्ति'[6]। युवयोरिति किम्? 'योऽग्निꣳ होतारमवृथाः'[7]। पृष्ठे—'नाकस्य पृष्ठे अधि रोचने'[8]। पतिर्वः—'यज्ञपतिर्वो अत्र'[9]। पतिरिति किम्? 'आवोऽर्वाची सुमतिः'[10]। गो—'पशवो गो अश्वानेव'[11]। 'अप्यकारादि' (१–५२) इति वचनात् 'अगो अर्घम्'[12] इत्यपि भवति। शुष्मः—'उच्छुष्मो अग्ने'[13]। युवः—'अग्ने युवो अग्ने युवः'[14]। समिद्धः—'समिद्धो अग्ने मे दीदिहि'[2]। ऋषभः—'द्यामृषभो अन्तरिक्षम्'[15]। पाथः—'प्रियं पाथो अपीहि'[16]। वचः—'उग्रं वचो अपावधीम्'[17]। द्वितीयकक्ष्येयमिति कृत्वा—'मोचचोद्धान' (१२–६) इत्यनेन न विरोधः। तस्य 'धातारातिः' (११–३) इत्यादिसूत्रविषयत्वात्। वर्षिष्ठे—'वर्षिष्ठे अधि नाके'[18] जुषाणः—'जुषाणो अप्तुराज्यस्य वेतु'[19]। योरुद्रः—'यो रुद्रो अग्नौ यो अप्सु'[20]। य इति किम्? 'ताꣳ रुद्रोऽवासृजत्'[21]। वृष्णः—'वृष्णो अꣳशुभ्याम्'[22] ॥ १६ ॥

---

| | | |
|---|---|---|
| 1 सं. ६-४-३. | 2 सं. १-६-६. | 3 सं. ६-३-१०. |
| 4 ,, २-२-४. | 5 ,, ३-३-८. | 6 ,, ३-६-४. |
| 7 ,, २-५-९. | 8 ,, ३-६-५. | 9 ,, ६-७-७. |
| 10 ,, १-४-२२. | 11 ,, ६-२-९. | 12 ,, ६-१-१०. |
| 13 ,, १-६-२. | 14 ,, १-१-५. | 15 ,, १-२-८. |
| 16 ,, २-३-३. | 17 ,, १-२-११. | 18 ,, १-१-८. |
| 19 ,, १-३-४. | 20 ,, ५-६-९. | 21 ,, ६-२-३. |
| 22 ,, १-४-२. | | |

अरतिमस्ययज्ञस्यातिद्रुतोऽतियन्त्यनृणोऽविष्यन्ननमीवोऽन्नेष्वर्चिरजीतानज्यानिमह्रियाअम्वाल्यर्वन्तमस्त्वकृणोदङ्गिरोऽप्सुयोअस्कभायदच्युतोऽश्वसानिरस्थभिरशिश्रेदङ्गेऽग्निय[1] ॥ १७ ॥

अरतिम्, अस्ययज्ञस्य, अतिद्रुतः, अतियन्ति, अनृणः, अविष्यन्, अनमीवः, अन्नेषु, अर्चिः, अजीतान्, अज्यानिम्, अह्रियाः, अम्वालि, अर्वन्तं, अस्तु, अकृणोत्, अङ्गिरः, अप्सुयः, अस्कभायत्, अच्युतः, अश्वसानिः, अस्थभिः, अशिश्रेत्, अङ्गे, अग्निय एतेष्वकारो न खल्वेकारपूर्व ओकारपूर्वो वा लुप्यते। यथा—'मूर्द्धानं दिवो अरतिम्'[2]। 'यन्मे अग्ने अस्य यज्ञस्य'[3]। यज्ञस्येति किं? 'एतेऽस्यामुष्मिन्'[4]। 'प्रत्यङ्ख्सोमो अतिद्रुतः'[5]। 'पश्यन्तो अतियन्ति'[6]। द्रुतोयन्तीत्याभ्यां किं? 'नैनꣳ सोमोऽति पवते'[7]। 'तदग्ने अनृणो भवामि'[8]। 'नयवसे अविष्यन्'[9]। 'स्वावेशो अनमीवः'[10]। 'ये अन्नेषु विविध्यन्ति'[11]। 'जातवेदो यो अर्चिः'[12]। 'शरदो अजीतान्'[13]। 'तेषां यो अज्यानिम्'[13]। 'तिरो अह्रिया मा सुहुताः'[14]। 'अम्बे अम्बा-

[1] दङ्गेऽग्नि इति पाठान्तरम्.
[2] सं. १-४-१३.
[3] स. १-६-२.
[4] सं. ६-१-१०.
[5] ,, १-८-२१.
[6] ,, ३-२-२.
[7] ,, ६-६-११.
[8] ,, ३-३-८.
[9] ,, ४-४-३.
[10] ,, ३-४-१०.
[11] ,, ४-५-११
[12] ,, ५-७-८.
[13] ,, १-७-२.
[14] ,, ७-३-१३.

लि'[1]। 'यो अर्वन्तं जिघांसति'[2]। 'बर्हिस्ते अस्तु बाल्लिति'[3]। 'इत इन्द्रो अकृणोत्'[4]। 'अग्ने अङ्गिरो योऽस्याम्'[5]। 'यो अप्सु य ओषधीषु'[6]। य इति किं? 'अश्वोऽप्सुजो वेतसः'[7]। 'यो अस्कभायदुत्तरम्' (१-२-१३) 'मदाय रसो अच्युतः' (१-२-६) 'यो भक्षो अश्वसनिः'[8]। सनिरिति किं? 'अश्वेभ्योऽश्वपतिभ्यः'[9]। 'इन्द्रो दधीचो अस्थभिः'[10]। भिरिति किं? 'शमस्थभ्यो मज्जभ्यः'[11] इत्यत्र जटायाम्—'अस्थभ्यो मज्जभ्यो मज्जभ्योऽस्थभ्योऽस्थभ्यो मज्जभ्यः'[11]। 'वरुणो अशिश्रेत्'[12]। 'अङ्गेअङ्गे नि देघ्यत्'[13]। अप्रियेत्य[14] कारगृहीतः पदैकदेशो बहूपादानार्थः। 'एतानि ते अघ्निये नामानि'[15]। 'यदापो अघ्निया वरुणेति'[16]। 'पयो अघ्नियासु हृत्सु'[17] ॥ १७ ॥

अरतिमित्यादीनामादिरकार एकारौकारयोः पूर्वयोर्न लुप्यते। यथा—अरतिम्—'मूर्धानं दिवो अरतिम्'[18]। अस्ययज्ञस्य—'यन्मे अग्ने अस्य यज्ञस्य'[19]। यज्ञस्येति किम्? 'सुवर्ग्योऽस्य भवति'[20]। अतिद्रुतः—'प्रत्यङ्क्सोमो अतिद्रुतः'[21]। अतियन्ति—'तयोः पश्यन्तो अतियन्त्यन्यम्'[22]। द्रुतो यन्तीति किम्?

1 सं. ७-४-१९. 2 सं. ७-४-१६. 3 सं. १-३-१०.
4 ,, १-१-१२. 5 ,, १-२-१२ 6 ,, ६-५-९.
7 ,, ५-३-१२. 8 ,, ३-२-५. 9 ,, ४-६-३.
10 ,, ५-६-६, 11 ,, ५-२-१२. 12 ,, १-८-१०.
13 ,, १-३-१०. 14 अघ्नेत्य इति पाठान्तरम्.
15 ,, ७-१-६. 16 ,, १-३-११. 17 ,, १-२-८.
18 ,, १-४-१३. 19 ,, १-६-२. 20 ,, ५-५-१
21 ,, १-८-२१. 22 ,, ३-३-२.

'परो मूजवतोऽतीहि'[1]। अनृणः—'तदग्ने अनृणो भवामि'[2]। आविष्यन्—'नयवसे आविष्यन्'[3]। अनमीवः—'स्वावेशो अनमीवो भवा नः'[4]। अत्रेषु—'ये अत्रेषु वि विध्यन्ति'[5]। अर्चिः—'जातवेदो यो अर्चिः'[6]। अजीतान्—'शरदो अजीतानिन्द्रः'[7]। अज्यानिम्—'यो अज्यानिमजीतिमावहात्'[7]। आह्वियाः—'तिरो आह्विया मा सुहुताः'[8]। अम्बालि—'अम्बे अम्बालि'[9]। अर्वन्तम्—'यो अर्वन्तम्'[10]। अस्तु—'सुमतिष्टे अस्तु'[11]। अकृणोत्—'इत इन्द्रो अकृणोत्'[12]। अङ्गिरः—'अग्ने अङ्गिरः'[13]। इत्यध्वरकाण्डे। अप्सुयः—'यो अप्सु य ओषधीषु'[14]। य इति किम्? 'योऽप्सु भस्म प्रवेशयति'[15]। अस्कभायत्—'यो अस्कभायदुत्तरम्'[16]। अच्युतः—'मदाय रसो अच्युतः'[17]। अश्वसनिः—'यो भक्षो अश्वसनिः'[18] सनिरिति किम्? 'योऽश्वमेधेन'[19]। अस्थभिः—'इन्द्रो दधीचो अस्थभिरिति'[20]। भिरित्यस्य व्यावर्त्यं शाखान्तरे॥ अशिश्रेत्—'तनुवं वरुणो अशिश्रेत्'[21]। अङ्गे—'प्राणो अङ्गेअङ्गे'[22]। अग्नियेति पदैकदेशोऽनेकग्रहणार्थः। 'यदापो अग्निया वरुणेति'[23]। 'एतानि ते अग्निये'[24]। 'पयो अग्नियासु इष्वसु'[25]॥ १७॥

—o—

[1] सं. १-८-६. [2] सं. ३-३-८. [3] सं. ४-४-३.
[4] सं. ३-४-१०. [5] ,, ४-५-११. [6] ,, ५-७-८.
[7] ,, ६-७-२. [8] ,, ७-३-११. [9] ,, ७-४-१९.
[10] सं. ७-४-१५. [11] ,, १-४-४५. [12] ,, १-१-१२.
[13] ,, १-३-१२. [14] ,, ५-५-९. [15] सं. ५-२-२.
[16] ,, १-२-१३. [17] सं. १-२-६. [18] सं. ३-२-५.
[19] स. ५-३-१२. [20] सं. ६-६-६. [21] स. १-८-१२.
[22] स. १-३-१०. [23] ,, १-३-११. [24] ,, ७-१-६.
[25] सं. १-२-८.

## अध्वर स्वरपरे ॥ १८ ॥

अध्वर इत्यस्मिन् ग्रहणे स्वरपरे वर्तमानोऽकारो न खल्वेकारौकारपूर्वो वा लुप्यते । यथा—'सत्यधर्माणो अध्वरे'[1] । 'हविष्मान्देवो अध्वरः'[2] । 'उपप्रयन्तो अध्वरमित्याह'[3] । अत्र 'त्रिपदप्रभृति' (१–६१) न्यायो न[4] प्रसरति तल्लक्षणासम्भवात्। स्वरपर इति किं ? 'शुग्वा अग्निस्सोऽध्वर्युम्'[5] ॥१८॥

अकारान्ततया निर्दिष्टे अध्वर् इत्यस्मिन् ग्रहणे स्वरपरे आदिभूतोऽकार एकारौकारपूर्वो न लुप्यते । 'सत्यधर्माणो अध्वरे'[1] । 'हविष्मान्देवो अध्वरः'[2] । 'उपप्रयन्तो अध्वरमित्याह'[3] इत्यत्र 'त्रिपदप्रभृति' (१–६१) न्यायो न[4] प्रसरति तल्लक्षणासम्भवात । स्वरपर इति किम्[6] 'शुग्वा अग्निस्सोऽध्वर्युं यजमानम्'[5] । 'अन्धोऽध्वर्युस्स्यात'[7] ॥ १८ ॥



## स पूर्वस्यार्धसदृशमेकेषामर्धसदृशमेकेषाम् ॥ १९ ॥

योऽयमकारोऽलुप्तः स पूर्वस्य एकारस्य ओकारस्य वा अर्धमात्रसदृशं कालं भजते इत्येकेषामृषीणां मतम् । अध्यर्धमात्रः

---

[1] सं. १-२-१; [2] सं. १-३-१२. [3] सं. १-५-७.
[4] न्यायेन न. [5] ,, ६-६-२.
[6] स्वरपर इति कार्यभाग्विशेषणेन किम्, [7] ,, ५-१-२.

स्यादित्यर्थः । उक्तान्येवोदाहरणानि विशेषादर्शनात् । अर्धेन सदृशः अर्धसदृशः, तं अर्धसदृशम् ॥ १९ ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे एकादशोऽध्यायः

योऽयमकार एकारौकारपूर्वो न लुप्यते, स खलु स्वस्मात्पूर्वस्य वर्णस्यार्धेन सदृशं रूपमुपागच्छति इत्येकेषामाचार्याणां मतम् । यथा—'ते ए अग्ने अश्वमायुञ्जन्'[1] इत्येकारस्यार्धेन ॥ 'यो रुद्रो ओ अग्नौ यो अप्सु'[2] इत्योकारस्य । सोऽयं छन्दोगावान्तरचरणानां सात्यमुग्रिराणायनीयानां पक्षः । अस्मच्छाखादौ तु न विद्यते । अत एवानयोर्वर्णयोः वर्णसमाम्नाये न पाठः ॥१९॥

इत्याचार्यगार्ग्यगोपालभट्ट विरचिते वैदिकाभरणाख्ये प्रातिशाख्यव्याख्याने एकादशोऽध्यायः

---

[1] सं. १-७-७. [2] सं. ५-५-९.

# अथ द्वादशोऽध्यायः

## अथ लोपः ॥ १ ॥

'अथ' इत्ययमधिकारः । अकारस्य लोप उच्यते, इत्येतदधिकृतं वेदितव्यं, इत उत्तरं यद्वक्ष्यामः । 'धातारातिः '(११–३) इत्यादिविषयोऽयमध्यायारम्भः ॥ १ ॥

अनेन 'धातारातिः' (११–३) इत्यादिसूत्रस्यापवादभूतोऽकारलोपविधिरारभ्यते ॥ १ ॥

---o---

## असि ॥ २ ॥

'असि' इत्यस्मिन् अकारो लुप्यते, एकारौकारपूर्वः[1] । यथा— 'सुपर्णोऽसि गरुत्मान्'[2] । 'प्रथोऽसि पृथिव्यसि'[3] ॥ २ ॥

असीतिपदे अकारो 'धातारातिः '(११–३) इत्यादिष्वनुवाकेषु एकारौकारपूर्वो लुप्यते । 'आयुर्दा अग्नेऽस्यायुः'[4] । 'उपयामगृहीतोऽसि नृषदम्'[5] । 'दिवोऽसि ध्रुवाऽसि'[6] । 'समुद्रोऽसि नभस्वान्'[7] ॥ २ ॥

---o---

[1] एकारपूर्वं ओकारपूर्वो वा. [2] सं. ४-१-१०.
[3] सं. ४-२-९. [4] सं. १-६-५. [5] सं. १-७-१२.
[6] सं. ४-१-६. [7] सं. ४-७-१२.

## न गर्भस्सन्नद्धोयमोभद्रःपूर्वः ॥ ३ ॥

गर्भः, सन्नद्धः, यमः, भद्रः एवम्पूर्वः सान्निध्याल्लब्धे असीत्यस्मिन् अकारो न लुप्यते । 'गर्भो अस्योषधीनाम्'[1] । 'सन्नद्धो असि वीडयस्व'[2] । सम्रिति किं? 'उपनद्धोऽसुरः'[3] इति केचिदुदाहरन्ति, तच्चिन्त्यम् । 'धातारातिः' (१,१—२) इत्याद्यन्तःपातित्वाभावात्, असिशब्दादर्शनाच्च । मुख्यं तु शाखान्तरे विज्ञेयं प्रत्युदाहरणम् । 'असि यमो अस्यादित्यः'[4] । 'त्वं भद्रो असि क्रतुः'[5] ॥ ३ ॥

किमविशेषेण? नेत्युच्यते—

तेष्वनुवाकेषु गर्भ इत्यादिषु पूर्वेषु असीत्यकारो न लुप्यते' गर्भः—'स जातो गर्भो असि'[6] । सन्नद्धः—'गोभिस्सन्नद्धो असि'[2] । समित्युपबन्धव्यावर्त्यं शाखान्तरे । यमः—'असि यमो असि'[4] । भद्रः—'त्वं भद्रो असि'[5] ॥ ३ ॥

—o—

## यवनहपरः[7] स्वरपरेषु ॥ ४ ॥

यकारवकारनकारहकारपरोऽकारो लुप्यते, तेषु यकारादिषु स्वरपरेषु सत्सु । यथा—'हिरण्यशृङ्गोऽयो अस्य पादाः'[4] । 'वनस्पतेऽव-

1 सं. ८-२-३. 2 स. ४-६-६. 3 सं. ४-४-९.
4 स. ४-६-७. 5 स. ८-३-१३. 6 ,, ४-१-४.
7 यवनह.

सृजा रराणः'[1] । 'वरेण्योऽनुप्रयाणम्'[2] । 'जम्भयन्तोऽहिम्'[3] । स्वरपरेष्विति किं? 'शुक्रं ते अन्यत्'[4] । 'अग्ने अह्नाꣳहितः'[5] ॥ ४ ॥

कार्यभाज एवायं निर्देशः । य, व, न, ह इत्येतेभ्यो व्यञ्जनेभ्यः स्वरपरेभ्यः पूर्वोऽकारः एकारैकारपूर्वस्तेष्वनुवाकेषु लुप्यते । य—'हिरण्यशृङ्गोऽयो अस्य'[6] । व—'वाजेवाजेऽवत'[7] । न—'इन्द्रꣳ सखायोऽनु'[8] । ह—'हवामहेऽꣳहोमुचम्'[9] । 'जम्भयन्तोऽहिं वृकम्' । 'रजसो विसारेऽहिः'[10] । यवनहेति किम्? 'यतो जातो अरोचथाः'[11] । स्वरपरेष्विति किम्? 'वसुभिर्नो अव्यात्'[12] । 'ये अन्तरिक्षे'[13] । 'जुहुहे अह्नयः'[14] ॥ ४ ॥

---

## जकारम्नपर उदात्तः ॥ ५ ॥

जकारपरो म्नपरश्च अकार उदात्तो लुप्यते । यथा—'ओजोऽम्नायथाः'[15] । 'शुचिः पावक वन्द्योऽग्ने'[16] । उदात्त इति किं? 'न ततृषाणो अजरः'[17] । 'निधिपतिर्नो अग्निः'[18] ॥५॥

---

[1] सं. ४-१-८. [2] सं. ४-१ १०. [3] सं. १-७-८.
[4] सं. ४-१-११. [5] सं. ४-१-३. [6] सं. ४-६-७.
[7] सं. ४-७-१९. [8] सं. ४-६-४. [9] सं. १-६-१२.
[10] सं. १-१-११. [11] सं. ४ २-४. [12] सं. २-१-११.
[13] सं. ४-२-८. [14] सं १-२-२. [15] सं. १-६-१२.
[16] ,, १-३-१४. [17] ,, ४-६-१. [18] ,, १-४-४४.

अयमपि कार्यभाक्प्रधानो निर्देशः । ञ इत्यकारान्तग्रहणम् । ञकारात् गकारनकारसंयोगाच्च पूर्वोऽकार उदात्त एकारौकारपूर्वः तेष्वनुवाकेषु लुप्यते । 'पुरो नेऽजस्रया'[1] । 'शुचिः पावक वन्द्योऽग्ने'[2] । एतत्पर- इति किम्? 'आरे अस्मे च'[3] । उदात्त इति किम्? 'धामा ह यत्ते अजर'[4] । 'त्वᳪ ह्यग्ने अग्निना'[5] ॥ ५ ॥

---o---

## मोवचोदधानस्स्थेपूर्वश्च ॥ ६ ॥

ग्नपर इति चकारो ज्ञापयति । मः, वचः, दधानः, स्थे इत्येवम्पूर्वो ग्नपरोऽकारो[6] लुप्यते । यथा—'अङ्गिरस्वदच्छेमोऽग्निम्'[7] म इत्यत्र पदैकदेशग्रहणं[8] सङ्क्षेपार्थम् । 'अङ्गिरस्वद्भरिष्यामोऽग्निम्'[7] । 'वचोऽग्नये भरता बृहत्'[9] । 'दधानोऽग्निर् होता'[10] । 'सधस्थेऽग्निं पुरीष्यम्'[10] । अन्वादेशः किमर्थः? 'सधस्थे अध्युत्तरस्मिन्'[11] । ग्नपरस्यानुदात्तार्थोऽयमारम्भः ॥ ६ ॥

चशब्देन ग्नपर इत्यन्वादिश्यते । अनुदात्तार्थोऽयमारम्भः । मः, वचः, दधानः, स्थे इत्येतेषु पूर्वेषु ग्नपरः अकारः तेष्वनुवाकेषु लुप्यते । 'अङ्गिरस्वदच्छेमोऽग्निम्'[7] । 'पूर्व्यं वचोऽग्नये'[9] । 'दमेदमे सप्तरत्ना दधानोऽग्निः'[10] । 'पृथि-

---

[1] सं. ४-६-५. [2] सं. १-३-१४. [3] सं. १-६-५.
[4] सं. ३-१-११. [5] सं. १-४-४६. [6] ग्नपरोऽनुदात्तोऽप्यकारो.
[7] सं. ४-१-२. [8] मो इत्यपदग्रहण. [9] सं. ३-२-११.
[10] सं. ४-१-३.

व्यास्सदस्थेऽग्निम्[1]। अन्वादेशेन किम्? 'नमो अस्तु सर्पेभ्यः'[2]। 'अग्निं खनिष्यन्त उपस्थे अस्याः'[3] ॥ ६ ॥

---

अभ्यावर्त्तिन्नपूपमपिदधाम्यंद्यान्वदितिश्श - र्माग्नेर्जिह्वामग्नयःपप्रयोऽस्माकमस्मेध - त्ताश्माश्वाश्रुतिरश्यामामाऽर्यमन्नस्म - त्पाशानस्मिन्यज्ञेऽस्ताऽव्यथमानाऽभि - द्रोहमधाय्यदोऽथोदुग्धाअरिष्टाअरथाअ - र्चन्त्यन्तरस्यामत्रस्थान्नायाङ्गिरस्वदक - रम् ॥ ७ ॥

अभ्यावर्त्तिन्, अपूपम्, अपिदधामि, अद्यान्, अदितिश्शर्म, अग्नेर्जिह्वाम्, अग्नयःपप्रयः, अस्माकम्, अस्मेधत्त, अश्मा, अश्वाश्रुतिः, अश्याम, अमा, अर्यमन्, अस्मत्पाशान्, अस्मिन्यज्ञे, अस्ता, अव्यथमाना, अभिद्रोहम्, अधायि, अदः, अथो, अदुग्धाः, अरिष्टाः, अरथाः, अर्चन्ति, अन्तरस्याम्, अत्रस्थ, अन्नाय, अङ्गिरस्वत्, अकरम् एतेष्वकारो लुप्यते, एकारोकारपूर्वः। यथा— 'अग्नेऽभ्यावर्त्तिन्'[4]। आवर्त्तिन्निति किं? 'कामेन कृतो अभ्या-

---

[1] सं. ४-१-३. [2] सं. ४-२-८. [3] सं. ४-१-२.
[4] „ ४-२-१.

नडर्कम्'[1]। 'भद्रशोचेऽपूपं देव'[2]। 'अग्नेऽपिदधाम्यास्ये'[3]। दधामीति किं? 'वद्धो अपि कक्ष आसनि'[4]। 'अनु नोऽद्यानुमतिः'[5]। अन्विति किं? 'प्रतत्ते अद्य शिपिविष्टनाम'[6]। 'अधि ब्रवीतु नोऽदितिश्शर्म यच्छतु'[7]। शर्मेति किं? 'यथा नो अदितिः करत्'[8]। 'अध्वरं नोऽग्नेर्जिह्वामभि गृणीतम्'[9]। जिह्वामिति किं? 'व्रताद्दन्ते अग्नेः'[9]। 'ते नोऽग्नयः पप्रयः'[10]। पप्रय इति किं? 'पुरीष्यासो अग्नयः'[11]। 'नरोऽस्माकमिन्द्र'[7]। 'विश्वेऽस्मे धत्त'[12]। धत्तेति किं; 'द्रविणं वाजो अस्मे वाजस्य प्रसवम्'[13]। 'परि वृङ्धि नोऽश्वा भवतु'[7]। अश्वाश्रुतिः अश्वा इत्यस्य यत्रयत्र श्रुतिः, तत्रतत्र लोपः। 'वृषपाणयोऽश्वा रथेभिः'[7]। श्रुतिरिति किं? 'प्रचेतसोऽश्वान्'[7]। 'भरन्तोऽश्वायेव'[3]। दीर्घग्रहणेन किं? 'चषालं ये अश्वयूपाय तक्षति'[14]। 'क्षत्रं नो अश्वो वनताम्'[15]। 'वाजयन्तोऽश्याम द्युम्नम्'[16]। 'पुनस्तेऽमैषाम्'[17]। 'ये तेऽर्यमन्'[18]। 'तेऽस्मत्पाशान्'[19]। पाशानिति किं? 'अन्यं ते अस्मत्'[20]। 'यः पिता तेऽस्मिन्

[1] सं. १-१-१६. [2] सं. ४-२-२. [3] स. ४-१-१०.
[4] सं. १-७-८. [5] सं. ३-३-११. [6] सं. २-२-१२.
[7] सं. ४-६-६. [8] स. ३-४-११. [9] स. ४-१-८.
[10] सं. १-१७-७. [11] सं. ४-२-४. [12] सं. १-४-४४.
[13] सं. ४-७-१२. [14] स. ४-६-८. [15] स. ४-६-९.
[16] सं. १-१-१४. [17] ,, ४-७-१४. [18] सं. २-३-१४.
[19] सं. ४-१-११. [20] सं. ४-६-१.

यज्ञे '[1] । यज्ञ इति किं ? 'ते अग्निमञ्जवमादधुः '[2] । '[4] प्रसितिं द्रूणानोऽस्ताऽसि '[3] । 'मा सुपर्णोऽव्यथमाना '[4] । 'जनेऽभिद्रोहं मनुष्याश्चरामसि '[5] । द्रोहमिति किं ? 'बृहस्पते अभिशस्तेः '[6] । 'सुमन्मेऽधायि मन्म '[7] । 'येऽन्दो रोचने दिवः '[8] । 'महामग्नेऽथो सीद '[9] । 'शूर नोनुमोऽदुग्धाः '[10] । 'पूर्वेऽरिष्टास्स्याम '[11] । 'पवयोऽरथाः '* । 'गायत्रिणोऽर्चन्ति '* । 'अभि शुशुचोऽन्तरस्याम् '[9] । अस्यामिति किं ? 'रुक्मो अन्तर्विभाति '[12] । 'येऽत्र स्थ पुराणाः '[13] । स्थेति किं ? 'त्वष्टा नो अत्र वरिवः '[14] 'रायस्पोषोऽन्नाय त्वा '[15] । 'पृथिव्यास्सधस्थेऽङ्गिरस्वत् '[16] । 'अहं तेभ्योऽकरं नमः '[17] ॥ ७ ॥

अभ्यावर्तिन्नित्यादीनामादिरकारः एकारौकारपूर्वः तेष्वनुवाकेषु लुप्यते । अभ्यावर्तिन्—'अग्नेऽभ्यावर्तिन् '[18] । आवर्तिन्निति किम् ? 'अभि वीरो अभि सत्वा '[19] । अपूपम्—'भद्र शोचेऽपूपम् '[20] । आपिदधामि—'अग्नेऽपि दधामि '[2] । दधामीति किम् ?

---

[1] सं. २-६-१२. [2] ,, १-७-७. [3] सं. १-२-१४.
[4] सं. ४-२-९. [5] सं. ३-४-११. [6] ,, ४-१-७.
[7] ,, ४-६-८. [8] सं. ४-२-८. [9] सं. ४-१-९.
[10] सं. २-४-१४. [11] सं. ४-७-१४. [12] सं. ४-१-१०.
[13] सं. ४-२-४. [14] ,, १-४-४४. [15] ,, १-७-९.
[16] ,, ४-१-६. [17] ,, ४-५-१. [18] ,, ४-२-१.
[19] सं. ४-६-४. [20] ,, ४-२-२. * सं. १-६-१२.

'ग्रीवायां बद्धो अपि कक्षे'[1]। अद्यानु—'अनु नोऽद्यानुमतिः'[2]। आन्विति किम्? 'यस्ते अद्य कृणवत्'[3]। अदितिश्शर्म—'अधि ब्रवीतु नोऽदितिश्शर्म यच्छतु'[4]। शर्मेति किम्? 'यथा नो अदितिः करत्'[5]। अग्नेर्जिह्वाम्—'ऊर्ध्वमध्वरं नोऽग्नेर्जिह्वाम्'[6]। जिह्वामिति किम्? 'यता दधन्ते अग्नेः'[6]। अग्नयःपप्रयः—'ते नोऽग्नयः पप्रयः पारयन्तु'[7]। पप्रय इति किम्? 'पुरीष्यासो अग्नयः'[8]। अस्माकम्—'अयुध्योऽस्माकꣳ सेनाः'[9]। अस्मेधत्त—'विश्वेऽस्मे धत्त'[10]। धत्तेति किम्? 'आरे अस्मे च शृण्वते'[11]। अश्मा 'ऋजीते परि वृङ्धि नोऽश्मा'[4]। अश्वाश्रुतिरिति श्रुतिग्रहणादपदात्मिकाऽपि गृह्यते—'वृषपाणयोऽश्वा रथेभिः'[4]। 'प्रचेतसोऽश्वान्'[4] दीर्घेण किम्? 'ते अग्ने अश्वमायुञ्जन्'[7]। अश्याम 'वाजयन्तोऽश्याम युम्नम्'[12]। अमा—'निगुतः पुनस्तेऽमैषाम्'[13]। अर्यमन् 'ये तेऽर्यमन्'[14]। अस्मत्पाशान्—'तेऽस्मत्पाशान्प्र मुञ्चन्त्वꣳहसः'[15]। पाशानिति किम्? 'तनूषु यद्धं कृतमेनो अस्मत्'[16]। अस्मिन्यज्ञे—'यः पिता तेऽस्मिन् यज्ञे'[17]। यज्ञ इति किम्? 'नव्ये देष्णे शस्ते अस्मिन्त उक्थे'[18]। अस्ता—'प्रसितिं द्रूणानोऽस्ताऽसि'[19]। *अव्यथमाना—'मा सुपर्णोऽव्यथमाना'*[20]। अभिद्रोहम्—'जनेऽभिद्रोहम्'[15]। उपबन्धस्यावर्त्यमुक्तम्। द्रोह-

[1] सं. १-७-८.   [2] सं. ३-३-११.   [3] सं. ४-२-२.
[4] सं. ४-६-६.   [5] सं. ३-४-११.   [6] ,, ४-१-८.
[7] सं. १-७-७.   [8] सं. ४-२-४.   [9] सं. ४-६-४.
[10] सं. १-४-४४.   [11] सं. १-५-५.   [12] सं. १-३-१४.
[13] ,, ४-७-१४.   [14] ,, २-३-१४.   [15] ,, ४-६-१३.
[16] सं. १-८-२२.   [17] सं. २-६-१२.   [18] सं. १-७-१३.
[19] सं. १-२-१४.   [20] सं. ४-२-९.

मिति किम्? 'बृहस्पते अभिशस्तेः'[1]। अधायि—'सुमन्मेऽधायि'[2]। अदः—'येऽदो रोचने दिवः'[3]। अथो—'महामग्नेऽथो सीद'[4]। अवुग्धाः—'शूर नोनुमोऽदुग्धाः'[5]। अरिष्टाः—'पूर्वेऽरिष्टास्स्याम'[6]। अरथाः—'ये पवयोऽरथाः'[7]। अर्चन्ति—'गायत्रिणोऽर्चन्ति'[7]। अन्तरस्याम्—'शूशुचोऽन्तरस्याम्'[4]। अस्यामिति किम्? 'विदथे अन्तरेषाम्'[8]। अत्रस्थ—'येऽत्र स्थ पुराणाः'[9]। स्थेति किम्? 'त्वं नो अत्र सुरतात्'[10]। अध्याय—'रायस्पोषोऽध्यायं त्वा'[11]। अङ्गिरस्वत्—'सधस्थेऽङ्गिरस्वत्'[12]। अकरम्—'अहं तेभ्योऽकरं नमः'[13] ॥ ७ ॥

---

## गाहमानोजायमानोहेतयोमन्यमानोवनस्पतिभ्यःपतेस्त्रिधस्तपसस्स्वधावोभामितोऽग्नयआयोऽध्वर्योक्रतोपूर्वः ॥ः ८ ॥

गाहमानः, जायमानः, हेतयः, मन्यमानः, वनस्पतिभ्यः, पते, स्त्रिधः, तपसः, स्वधावः, भामितः, अग्नयः, आयो, अध्वर्यो, क्रतो इत्येवम्पूर्वोऽकारो लुप्यते । यथा—'गाहमानोऽद्रायः'[14]। 'जायमानोऽह्नां केतुः'[6]। 'हेतयोऽन्यमस्मत्'[15]। 'मन्यमानोऽ-

[1] सं. ४-१-७. [2] सं. ४-६-८. [3] स. ४-२-८.
[4] सं. ४-१-९. [5] सं. २-४-१४. [6] सं. ४-७-१४.
[7] स. १-६-१२. [8] सं. २-१-११. [9] सं ४-२-४.
[10] सं. ४-१-११. [11] ,, १-७-९. [12] स. ४-१-६.
[13] ,, ४-६-१. [14] ,, ४-६-४. [15] सं. ४-५-१०.

मर्त्यम्[11] । 'वनस्पतिभ्योऽधिसम्भृताम्[12] । वनस्पतीति किं? 'नमः पितृभ्यो अभि[13] । 'अन्नपतेऽन्नस्य[14] । 'नि हो अति स्त्रिधोऽत्यचित्तिम्[15] । 'तपसोऽधि जातः[16] । 'देव स्वधावोऽमृतस्य धाम[17] । स्वधेति किं? 'अन्या वो अन्यामवतु[18] । 'भामितोऽमित्रस्य[9] । 'यानग्वयोऽन्वतप्यन्त[3] । उकारस्य वकारविक्रियायां व्यञ्जनपरो नकार इति 'यवनह' (१४-४) निषेधाभावाल्लोपे प्राप्ते तदपवादोऽयम् । 'अग्नेऽदब्धायोऽशीततनो[10] । 'अध्वर्योऽद्रिभिः[11] । 'शतक्रतोऽनु ते दायि[12] । अत्र 'यवनह' (१४-४) इत्यादिनैव लोपे सिद्धे पुनरस्य ग्रहणं नियमार्थम् । आयोऽध्वर्योक्रतो इत्येतत्पदत्रयपूर्वाकारस्यैव लोपः । न त्वितरत्र प्रग्रहपूर्वस्येति । यथा—'इमे अश्विना संवथ्सरः[13] ॥ ८ ॥

गाहमान इत्यादिषु पूर्वेषु अकारः पदादिस्तेष्वनुवाकेषु लुप्यते । गाहमानः—'सहसा गाहमानोऽदायः[14] । जायमानः—'जायमानोऽह्नाम्[15] । हेतयः—'यास्ते सहस्रं हेतयोऽन्यम्[16] । मन्यमानः—'मन्यमानोऽमर्त्येन[11] । वनस्पतिभ्यः—'वनस्पतिभ्योऽधि सम्भृताम्[12] । वनस्पतीति किम्? 'प्रमातृभ्यो अधि कनिक्रदत्[17] । पते—'अन्नपतेऽन्नस्य[14] । स्त्रिधः—'निहो अति स्त्रिधोऽति[15] । तपसः—

[1] सं. १-४-४६. [2] सं. ४-६-१. [3] सं. ३-२-८.
[4] सं. ४-२-३. [5] सं. ४-१-७. [6] ,, ४-२-१०.
[7] सं. ३-१-११. [8] सं. ४-२-६. [9] सं. १-६-१२.
[10] सं. १-१-१३. [11] सं. ६-४-३. [12] सं. २-६-१२.
[13] सं. ५-६-४. [14] सं. ४-६-४. [15] सं. २-४-१४.
[16] सं. ४-५-१०. [17] सं. ४-१-४.

'तपसोऽधिजातः'[1]। स्वधावः—'देव स्वधावोऽमृतस्य'[2]। स्वधेति किम्? 'शतं वो अम्ब धामानि'[3]। भामितः—'इन्द्रभामितोऽमित्रस्य'[4]। अन्नयः—'यानन्नयोऽन्वतप्यन्त'[5]। अत्रान्वित्यवग्रहस्य उत्तरखण्डसन्धानात्परमेव पूर्वपदसन्धानं भवति । तत्र तु[6] स्वरपरत्वाभावात् 'यवनह' (१२–४) इति लोपविधिर्न प्रवर्तते इति अत्र लोपो विधीयते। एतदन्तो 'धातारातिः' (११–३) इत्यादिसूत्रस्यापवादः । आयो—'अग्नेऽदब्धायोऽशीततनो'[7]। अध्वर्यो—'अध्वर्योऽवेरपा३ इत्याह'[8]। क्रतो—'शतक्रतोऽनु ते दायि'[9]। ननु, आयोऽध्वर्यो इत्येताभ्यां परस्य 'लुप्यते त्वकारः' (११–१) इत्यनेन लोपस्सिद्धः । क्रतोपूर्वस्यापि 'यवनहस्वरपरेषु' (१२–४) इति पुनर्विधानात्सिद्ध एव । न चात्र 'न प्लुतप्रग्रहौ' (१०–२४) इति निषेधः प्रवर्तते । निषेध्यस्य सन्धिकार्यस्याभावात् । न ह्यस्मिन् शास्त्रे एकादेशो विधीयते । न चान्यो विकारः । अत्रोच्यते—सिद्धे सत्यारम्भो नियमाय * भवति । इह प्रग्रहसंज्ञेभ्यः ओ[10]कारेभ्यः[11] परे ये पदादयः अकारास्तेष्वायोऽध्वर्योक्रतोपूर्वं एव लुप्यते। नान्य इति नियम्यते। ततश्च 'ते अद्रुते द्यावापृथिवी'[12]। 'उरो अन्तरिक्ष'[13] इत्यादिषु अकारलोपो न भवति । अत्र च लोपविधौ प्रायः पदादिरकारस्य लोपो विधीयते । तेन पदादिरिति लोपे

1 सं. ४-२-१०. 2 सं. ३-१-११. 3 सं. ४-२-६.
4 ,, १-६-१२. 5 ,, ३-२-८. 6 तथाच सति अत्र.
7 सं. १-१-१३. 8 सं. ६-४-३. 9 सं. २-६-१२.
10 ओ. 11 एकारौकारेभ्यः. 12 सं. २-५-२.
13 सं. १-३-८. * विधिर्नियमाय. † पादा.

विहिते शसोऽलोपविधिरल्पेनैव ग्रन्थेन निवर्तयितुमर्हति । तथाऽपि गुरुतरोऽयं ग्रन्थः प्रणीतः सूत्रकृता, पादविभागविज्ञानस्य छन्दश्शास्त्रतत्त्वावगतिसाध्यतया अस्य शास्त्रस्य तत्सापेक्षत्वापत्तेः अतिगौरव[1]प्रसङ्गाच्च 'ये[2] अप्रथेताममितेभिः'[3] इत्यादीनामृचां विभागस्तु सुगम एव । अवसानस्थौ[4] द्वौ द्वौ पाद[5]समुदायौ एकैकगीति[6] स्थूललक्षणेनापि वेद्यत्वात् ॥ ८ ॥

---

## तस्मिन्ननुदात्ते पूर्व उदात्तस्स्वरितम् ॥ ९ ॥

यमधिकृत्यायं प्रबन्ध उक्तः, तस्मिन्[7] अकारेऽनुदात्ते लुप्ते सति पूर्व एकार ओकारो वा उदात्तः स्वरितमापद्यते । यथा—'तेऽब्रुवन्'[8] । 'सोऽब्रवीत्'[9] ॥ ९ ॥

तस्मिन्[7] पदाद्यवकारेऽनुदात्ते लुप्ते सति ततः पूर्व एकार ओकारो वा प्रकृत्या उदात्तस्स्वरितमुपगच्छति । 'गोष्ठेऽस्मिन् क्षयेऽस्मिन्'[10] । 'सोऽभयत्सोऽबिभेत्'[11] । यत्र तु पूर्वोऽनुदात्तः स्वरितो वा तत्र न लोपलक्षणस्वरभेदः । यथा—'अक्ष्ध्यायोऽशीततनो'[12] । 'ता वैदेह्योऽभवन्'[13] । 'दिशां धीर्येऽग्निं चिनुते'[14] ॥ ९ ॥

---

[1] प्रतिपत्तिगौरव. [2] तेन 'ये. [3] सं. ४-७-१५.
[4] अवसानवन्तौ. [5] पद. [6] एकैकगति.
[7] अस्मिन्. [8] सं. २-५-१. [9] सं. २-१-२.
[10] सं. १-५-६. [11] सं. २-२-८. [12] सं. १-१-१३.
[13] ,, १-१-४. [14] ,, ५-१-६.

## उदात्ते चानुदात्त उदात्तम् ॥ १० ॥

तस्मिन्[1] एवाकारे उदात्ते लुप्ते पूर्व एकार ओकारो वा अनुदात्त उदात्तमापद्यते । यथा—'अवरुन्धतेऽसत्रं वै'[2] । 'अन्नपतेऽन्नस्य नः'[3] ॥ १० ॥

चशब्दः तस्मिन्' पूर्व इत्युभयमन्वादिशति । उदात्ते अकारे पदादौ लुप्ते पूर्व एकार ओकारो वा प्रकृत्याऽनुदात्त, उदात्तमुपगच्छति । 'इन्द्रियाणि शतक्रतोऽनु ते दायि'[4] । 'तेन त्वा दधेऽग्ने अङ्गिरः'[5] । यत्र तु पूर्वश्चोदात्तस्तत्र न विकारः । 'तेऽदित्याः समभ्रियन्त'[6] । 'सोऽसुरानजु यज्ञोऽपाक्रामत्'[7] ॥ १० ॥

—o—

## स्वरितश्च सर्वत्र स्वरितश्च सर्वत्र ॥ ११ ॥

उदात्त इति चशब्दो ज्ञापयति । तस्मिन्नकारे उदात्ते लुप्ते सर्वत्र एकार ओकारो वा स्वरित उदात्तमापद्यते । यथा—'भेषजं गवेऽश्वाय'[8] । 'ओजोऽजायथाः'[9] । सर्वत्रेति वचनात्रिस्थंस्वरितेष्वपि तथैव तद्विधानं स्यात् । 'उक्थ्योऽथातिरात्रः'[10] ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे द्वादशोऽध्यायः.

इति प्रथमः प्रश्नः.

---

[1]अस्मिन्. [2]सं. ७-३-८. [3] ,, ४-२-३.
[4]सं. २-५-१२. [5]सं. १-२-१३. [6]सं. ६-१-५.
[7]सं. ३-२-७. [8]सं. १-८-६. [9]सं. १-६-१२.
[10]सं. ७-१-५.

चशब्देनास्मि'न्नुदात्ते पूर्वं उदात्तमित्यन्वादिश्यते। अस्मिन्[2] पदादावकारे उदात्ते लुप्ते सति ततः पूर्वस्स्वरित उदात्तमुपगच्छति। 'अथोक्थ्योऽथातिरात्रः'[3]। 'सर्वत्रेत्युच्यते—न केवलमकारलोपविषये स्वरित उदात्तमुपगच्छति। अपि तु सवर्णदीर्घादिविषयेऽपि यत्रयत्रैतस्य स्वरितस्यैकादेशो[4] विधीयते। 'पितृदेवत्याऽतिखाता'[5]। 'न चेतव्येति रुद्रः'[6]। ननु तत्तद्विधिवशादेव तत्रतत्र स्वरितस्योदात्तत्वसिद्धेः किमर्थोऽयं सर्वत्रेति यत्नः? तदुच्यते—करिष्यति[7] ह्याचार्यः—'सयकारवकारं त्वक्षरं यत्र स्वर्यते स्थिते पदेऽनुदात्तपूर्वेऽपूर्वे वा नित्य इत्येव जानीयात्' (२०-२) इति। नित्यस्वरितस्य तु विकारो नोपपद्यते। न हि विनाशी नित्यत्वव्यपदेशमर्हति। तस्मात् 'उदात्तमुदात्तवति' (१०-१०) इत्येतन्नित्यस्वरितव्यतिरिक्तविषयं मन्तव्यम्। इह तु नित्यस्वरितव्यतिरिक्तमेवोदाहरणं अन्वेष्टव्यम्[8]। 'अग्नयेऽन्नवते'[9]। 'ओजोऽजायथाः'[10]। 'अध्वर्योऽवेरपा३ इत्याह'[11] इति। एतच्छङ्कापनोदनार्थं सर्वत्रेत्युच्यते। तत्रायमाशयः—'नित्य इत्येव जानीयात्' (२०-२) इत्यनेन विधिसाध्यत्वमेवास्य निवर्त्यते, स्वतस्सिद्धत्वात् न तु विनाशित्वमपि। तस्मान्नित्यस्वरितस्यापि 'उदात्तमुदात्तवति' (१०-१०) इत्यादिविकारो भवत्येव। न चास्मिन् सूत्रे नित्यस्वरितव्यतिरिक्तो विषयस्सम्भवति। तथाहि—

---

[1] चशब्देन तस्मि. [2] तस्मिन्. [3] सं. ७-१-६.
[4] स्वरितस्योदात्त एकादेशो, स्वरितादेशो [5] स. १-६-४.
[6] सं. ५-४-१०. [7] पठिष्यति. [8] एवेष्टव्यम्.
[9] सं. २-२-४. [10] सं. १-६-१२. [11] सं. ६-४-३.

पदान्तयोरेकारौकारयोर्नित्यस्स्वरितो भवति वा ? आहोस्वित् 'उदात्तात्परोऽनुदात्तस्स्वरितम्' (१४–२९) इत्येतद्विधिसिद्धो वा? तत्र द्वितीयस्त्विह न सम्भवति परसूत्रविहितत्वात् 'तत्र पूर्वं पूर्वं प्रथमम्' (५–३) इति हि परिभाषितम्। तस्मादेतत्सूत्रप्रवृत्तिविषये नित्य एव स्वरितस्सम्भवति। विधिबलात्तस्यैव विकारोऽभ्युपगन्तव्यः। एवं च नित्यस्यापि विधिना नित्यत्वभङ्गा[1]द्विधिसाध्यत्वराहित्यमेव नित्यत्वमिति विषयान्तरेऽपि विहितो विकारो भवत्येव। तथा चास्मिन् सूत्रे अविनाशित्वस्य भङ्गादेवान्यत्रापि तद्भज्यत इति प्रकटनार्थं सर्वत्रेति यत्नोऽस्मिन्नेव सूत्रे क्रियते यथाचैतत्सूत्रप्रवृत्तिवेळायाम्—'उदात्तात्परोऽनुदात्तस्स्वरितम्' (१४–२९) इत्येष स्वरितो न भवति, एवं 'स्वरितात्तस्ंहितायामनुदात्तानां प्रचय उदात्तश्रुतिः' (२१–१०) इति प्रचयोऽपि न भवति। ततश्च लुप्तादकारादुदात्तात्पूर्वस्य प्रचयत्वासम्भवादुदात्तस्य च विकाराभावादनुदात्तस्वरितावेवात्रोपादायोदात्तत्वं[2] विहितमित्यनुसन्धेयम् ॥ ११ ॥

इत्याचार्यगार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये प्रातिशाख्यव्याख्याने द्वादशोऽध्यायः.

प्रथमः प्रश्नस्समाप्तः.

---

[1] एवं च नित्यस्याविनाशित्वभङ्गा. नित्यस्वरितस्याविनाशित्वभङ्गा.

[2] स्वरितयोरेवात्रोपयोगात्तावेवात्रोपादाय तयोरुदात्तत्व.

# अथ त्रयोदशोऽध्यायः.

## अथ मकारलोपः ॥ १ ॥

'अथ' इत्ययमधिकारः । मकारस्य लोप उच्यते, इत्येतदधिकृतं वेदितव्यं, इत उत्तरं यद्वक्ष्यामः । मकारस्य लोपः, मकारलोपः ॥ १ ॥

अथेत्ययमधिकारः । अनेन पदान्तस्य मकारस्य लोपोऽधिक्रियते ॥ १ ॥

---

## रेफोष्मपरः ॥ २ ॥

रेफपरश्चोष्मपरश्च पदान्तो मकारो लुप्यते । यथा—"प्रत्युष्टꣳ रक्षः"[1] । "सꣳशितं मे ब्रह्म"[2] । "तꣳ षडहानि"[3] । "सꣳसमिद्युवसे"[4] । "त्वꣳह यद्यविष्ठ्य"[1] । एवम्पर इति किं? "इदं वामास्ये"[5] । पदान्त इति किं? "तस्मात्ताम्रा आपः"[6] रेफश्च ऊष्मा च रेफोष्माणौ, तौ परौ यस्मात् सः तथोक्तः ॥

रेफे ऊष्मसु च पदादिषु परतो मकारो लुप्यते । यथा—प्रत्युष्टꣳ रक्षः'[1] । 'सृकꣳसꣳशाय'[7] । 'त एतꣳ षोडशिनमपश्यन्'[8]

---

[1] स. १-१-२. [2] स. ४-१-१०. [3] स. ५-५-२.
[4] ,, २-६-११. [5] सं. ३-३-११. [6] ,, ६-४-२.
[7] स. १-६-१२. [8] स. ६-६-११.

'अग्निः॒ होतारम्'[1]। यतोऽधिति किम्? 'यं कामं कामयते'[2]। पदादिष्विति किम्? 'यद्भूम्नो भवति'[3]॥ २॥

## यवकारपरश्चैकेषामाचार्याणाम् ॥ ३ ॥

यकारपरो वकारपरो वा मकारो लुप्यते, इत्येकेषां मतम्। य एवास्य पञ्चमाध्याये सवर्णापत्तिं प्रतिषेधन्ति[4] तेषामेवैष लोपविधिः इति तानन्वादिशति चकारः सिंहावलोकनन्यायेन। यथा— "त्वः॒ यज्ञेष्वीड्यः"[5]। "तः॒ वा एतः॒ यजमानः"[6]। एवम्पर इति किं? "यं कामं कामयते"[2]। यकारश्च वकारश्च यवकारौ। तौ परो यस्मात् सः, तथोक्तः। नैतत् सूत्रमिष्टम्॥

पदाद्योर्यवकारयोश्च परतः मकारो लुप्यत[7] इत्येकेषामाचार्याणां मतम्। येषां मते मकारस्य यवपरस्य परसवर्णादेशो निषिद्धः पञ्चमाध्याये। 'अग्ने यं यज्ञम्'[8]। 'संवत्सरमुल्बम्'[9]। नैतत् सूत्रमिष्टम्॥ ३॥

## न सःसामिति[10] रापरः ॥ ४ ॥

रा इत्येवंपरः सं, सां इत्येतयोर्ग्रहणयोर्मकारः न लुप्यते।

---

[1] सं. १-५-१०. [2] सं. ७-१-१. [3] सं. २-१-१०.
[4] प्रतिषिद्धवन्तः. प्रतिषेधयन्ति. [5] सं. १-१-१४.
[6] सं. ५-६-५.
[7] पदान्तो मकारः यवकारयोश्च परतः लुप्यते इति पाठान्तरम्.
[8] सं. ४-१-११. [9] सं. ६-६-५. [10] मिति तु.

यथा—" प्र सम्राजम् "[1] । " साम्राज्याय सुक्रतुः "[2] । सꣳसा-मिति किं ? " शꣳराजन्नोषधीभ्यः "[3] । रापर इति किं ? " सꣳ-रराणः "[4] । " पदान्तश्च व्यञ्जनपरः प्राकृतः " (१४–२८) इति वक्ष्यमाणं द्वित्वनिषेधं इतिशब्दो[5] निवारयति । तस्मादत्र द्वित्व-सिद्धिः[6] ॥ ४ ॥

सं, साम्, इत्यनयोर्मकारो राशब्दे परतो न लुप्यते । यथा—'सम्राडसि'[7] । 'साम्राज्याय सुक्रतुः'[8] । सꣳसामिति किम ? 'इन्द्रꣳ राजानम्'[9] । रापर इति किम् ? 'सꣳशितं मे'[10] । दीर्घेण किम् ? 'देवा हस्तान्थसꣳरभ्यैच्छन्'[11] । मूलशास्त्रे तु 'मोराजि-समः क्वौ'[12] इति स्मर्यते । तस्यैवायं विधान्तरेण निर्देशः । तस्मात् 'तोते रायस्सं देधि'[13] इत्यत्र जटायामयं प्रतिषेधो न भव-ति, क्विबन्तत्वाभावात् । इतिकरणोऽर्थान्तरप्रतीतिनिवार-णार्थः । तदभावे त्रयाणां निमित्तत्वं विज्ञायेत । 'सꣳसां नरा-परः' इत्युक्तेऽपि संसांनरा इति निमित्तानि परमतविषयाणि स्युः निषेधश्च न स्यात् । सर्वत्र च कार्यभाजः पूर्वमेव नञ् निर्दि-श्यते[14] । अतो विपर्ययश्च न युक्तः । एवं च कार्यभाङ्निमित्त-विवेकार्थमितिकरणो मध्ये प्रयुज्यते ॥ ४ ॥

—o—

[1] सं. ५-६-१२. [2] स. १-८-१६. [3] सं. ३-२-३.
[4] सं. १-४-४४. [5] तुशब्दो.
[6] इतिशब्दः संसामित्यनयोरेवेति समर्थयति इत्यधिकं क्वचित्.
[7] स १-३-३. सं. १-८-१६. [9] सं. २-३-६.
[10] ,, ४-१-१०. [11] सं. ६-२-४. [12] पा. ८-३-२५.
[13] स. १-२-५ [14] सर्वत्र कार्यभाक् पूर्वं निर्दिश्यते.

## अथ वर्णानाम् ॥ ५ ॥

अथ इत्ययमधिकारः । वर्णानां संहिता वक्ष्यते, इत्येतदधिकृतं वेदितव्यम् । अथवा अथशब्दः पदसंहितानिषेधकः ॥ ५ ॥

इदानीं वर्णानां संहिता विषयत्वेन अधिक्रियते । सा द्विविधा—वर्णसामान्यसंहिता, वर्णविशेषसंहिता चेति । द्वितीयाऽपि द्विविधा—अक्षरसंहिता, अङ्गसंहिता चेति । एवं त्रिविधा वर्णसंहिता इह वर्तिष्यते । तेन यत्रापि नानापदीयनिमित्तः कार्यविधिः "नावग्रहपूर्वः" (१६-११) इति तत्रापि वर्णयोर्वर्णगणयोर्वा संहिता, न पूर्वोत्तरयोः पदयोः । तत्र नानापदीयस्य शब्दरूपस्य निमित्तत्वमेव भवति, न तु संहिताप्रकृतित्वमपि । अत एव स्त्रादिषु नानापदीयस्यापि निमित्तत्वमुक्तमुपपद्यते । अपिचात्र वर्णसंहिताधिकारादतःपूर्वं पदसंहितेति सिद्धम् । तत्र वर्णाश्रयं यत्कार्यं विधीयते तदपि तत्संयुक्तपदस्य निमित्तभूतपदसन्धाने भवतीति वेदितव्यम् ॥ ५ ॥

---

## ऋकारर्काररषपूर्वो नकारो णकारः समानपदे ॥ ६ ॥

समानपदे एकपदे ऋकारऋकाररेफषकारपूर्वो नकारो णकारमाप्नोति । यथा—"त्रिभिर् ऋणवा जायते"[1] । "त्वꣳ होतॄणाम्"[2] । 'एष वा ऋचो वर्णः'[3] । "कृणोमि"[4] । एव-

---

[1] सं. ६-३-१०. [2] सं. ४-३-१३. [3] ब्रा. ६-१-२. [4] सं. १-२-१२.

त्पूर्वं इति किं? "देवानां वा अन्तम्"[1] । समानपद इति किं? "एभिर्नो अर्कैः"[2] । समानं च तत् पदं च, समानपदं, तस्मिन् ॥ ६

समानपदे एकस्मिन्नेव पदे ऋकारादिवर्णेषु पूर्वेषु नकारो णत्वमाप्नोति । यथा—ऋ—'स्वधाकारो हि पितॄणाम्'[3] । ऋ—'त्वꣳ होतॄणामस्यायजिष्ठः'[4] । र—'आङ्गिरस्यूर्णम्रदाः'[5] । ष—'पूष्णो रꣳहीः'[6] । 'विष्णो हव्यम्'[7] । अत्र विध्यनुसारेण नकारः प्रकृतिरित्यवगम्यते । एतत्पूर्वं इति किम्? 'अग्निया देवभागम्'[8] समानपद इति किम्? 'सवितृनेत्राः'[9] । 'बृहस्पतिर्नो हविषा'[10]॥

—o—

## व्यवेतोऽपि ॥ ७ ॥

अपिशब्दः ऋकाराद्याकर्षकः । उक्तनिमित्तपूर्वो नकारः, अन्येन व्यवहितोऽपि णत्वमाप्नोति । यथा—"अपरशुवृकणं दहति"[11] "आ रमणं कुरुते"[12] । "अधिषवणे"[13] । "कृपमाणः प्रतिष्ठाकामः"[14] ॥ ७ ॥

समानपदे ऋकारादिषु पूर्वेषु वर्णान्तरव्यवेतोपि नकारो णत्वमाप्नोति । यथा-ऋ—'वृकणात्परा भविष्यन्तः'[15] । र—'सोमानꣳ स्वरणम्'[16] । ष—'इयक्षमाणा भृगुभिः'[17] ॥ ७ ॥

—o—

[1] सं. ७-६-८. [2] सं. ४-४-४. [3] सं. ६-३-२.
[4] सं. ४-३-१३. [5] सं. १-२-२. [6] सं. १-३-१०.
[7] सं. १-१-३. [8] सं. १-१-१. [9] सं. १-८-७.
[10] सं. १-२-२. [11] „ ५-१-१०. [12] सं. ६-५-११.
[13] सं. ४-७-८. [14] „ ३-४-३. [15] सं. २-५-१.
[16] „ १-१-६. [17] „ ४-६-५.

## हिरण्मयम् ॥ ८ ॥

हिरण्मयम् इत्यस्मिन् ग्रहणे नकरो णत्वमाप्नोति । यथा— "हिरण्मयं दाम दक्षिणा "[1] । "स्पर्शपरः" (१३–१६) इति वक्ष्यमाणप्रतिषेधस्य प्रतिप्रसवार्थमिदं सूत्रम् ॥ ८ ॥

अत्र "प्राकृताः" (१३–१४) इति वक्ष्यमाणमेतदादिसूत्रविषयम् । तदयमर्थः—हिरण्मयमित्यत्र नकारो णत्वमाप्नोति । स च णकारः प्राकृतः । 'हिरण्मयं पुरुषम्'[2] ॥ ८ ॥

---

## पाणि-गण-पुण्य-कण्व-काण-गाण-बाण-वेणु-गुण-मणि-प्रवादेषु पूर्वः ॥ ९ ॥

पाणीत्यादिशब्दानां प्रवादेषु पूर्वः प्रथमो णकारः प्रकृत्यैव वेदितव्यः । प्रकर्षेण वादः प्रवादः लिङ्गविभक्तिभेदसमासतद्धितादिभिर्निर्देश इत्यर्थः । यथा—"सुपाणिस्स्वङ्गुरिः "[3] । "वृषपाणयोऽश्वाः "[4] । "हिरण्यपाणिमूतये "[5] । "गणानां त्वा गणपतिम् "[6] । "गणा मे मा वितृषन् "[7] । "गणेन गणम्" ।[8] "दूरे अमित्रश्च गणः "[9] । "पुण्यो भवति वसन्तमृतूनाम् "[10] "सा मा सर्वान् पुण्यान् "[11] । "कण्वा अभि प्रगायत "[12] । "त-

[1] सं. २-४-१३. [2] सं. ५-२-७. [3] सं. ३-१-११.
[4] सं. ४-६-६. [5] स. १-४-२५. [6] पा. २-३-१४.
[7] सं. ३-१-८. [8] सं. ६-४-७. [9] सं. ४-६-६.
[10] सं. १-६-११. [11] सं. ७-१-७. [12] सं. ४-३-१३.

स्यै काणो या "[1] । "गाणपत्यान्मयोभूरेहि"[2] । "विशल्यो बाणवाँ उत"[3] । "वेणुर्वैणवी भवति"[4] । "वेणुना वि मिमीते"[5] । "यद्वेणोस्सुषिरम्"[4] । "यथा गुणे गुणम्"[6] । "मणिना रूपाणि"[7] । ननु गणशब्दप्रवादत्वाद्गाणग्रहणमयुक्तम् । नैवम् । गणप्रवादत्वे सति तद्भवेत् किन्तु गणपतिशब्दप्रवादोऽयम् । पूर्वे इति किं ? "गणानां त्वा"[8] । "वेणुना वि मिमीते"[5] । "मणिना रूपाणि"[7] इत्यादिपूत्तरस्य[9] णत्वं मा भूदिति ॥ ९ ॥

एतदादिषु चतुर्षु सूत्रेष्वनियतः प्रतिसम्बन्धी[10]निमित्ताभावात् । पाण्यादिशब्दानां प्रवादेषु प्रथमो नकारो णत्वमाप्नोति । स च प्राकृतः । लिङ्गसङ्ख्यातद्धितकृतरूपभेदाः प्रवादाः । यथा—पाणि 'सुपाणिस्स्वङ्गुरिः'[11] । 'हिरण्यपाणिम्'[12] । 'वृषपाणयः'[13] । गण—'दूरे अमित्रश्च गणः'[14] । 'गणेन गणम्'[15] । 'गणा मे मा'[16] । 'गणानां त्वा गणपतिम्'[8] । पुण्य—'स पुण्यो भवति'[17] । 'पुण्यान्लोकान्'[18] । कण्व—'यामस्य कण्वः'[19] । 'कण्वा अभि प्र गायत'[20] । काण—'तस्यै काणः'[1] । 'अकाणया'[21] गाण—'गाणपत्यान्मयोभूरेहि'[2] । नन्वयं गणप्रवादत्वात्पृथग्ग्रहणं नार्हति । नैतदस्ति ॥ न ह्ययं गणशब्दस्तद्धितान्तः किन्तु गण-

---

| | | |
|---|---|---|
| 1 सं. २-५-१. | 2 सं. ४-१-२. | 3 सं. ५-५-१. |
| 4 ,, ६-१-१. | 5 ,, ९-२-५. | 6 स. ७-२-४. |
| 7 स. ७-३-१४. | 8 सं. २-३-१४. | 9 उत्तरनकारस्य. |
| 10 अनियतः प्रतिसंबन्ध. | 11 सं. ३-१-११. | 12 सं. १-४-२६. |
| 13 स. ४-६-६. | 14 ,, ४-६-५. | 15 ,, ५-४-७. |
| 16 ,, ३-१-८. | 17 ,, १-६-११. | 18 ,, ७-१-७. |
| 19 ,, ४-६-९. | 20 ,, ४-३-१३. | 21 ,, ६-१-६. |

पतिशब्दस्य तद्धितान्तस्यैकदेशः । तस्मायुक्तं पृथग्ग्रहणम् । वाण—'यत्र वाणाः '[1] । 'विशल्यो वाणवाꣳ उत '[2] । वेणु—'वेणुर्वैणवी भवसि '[3] । "वेणुना वि मिमीते "[4] । गुण—'यथा गुणे गुणमन्वस्यति '[5] । 'सैतद्द्विगुणमपश्यत् '[6] । 'माणिना रूपाणि '[7] । प्रवादेष्विति किम्? 'चमसो देवपानः '[8] । 'तनूपानीः पर्यूहते '[9] । 'पुनरूर्जा '[10] । 'क्रव्येव तुम्रा '[11] । 'यदग्ने यानि कानि '[12] । 'अयं वेनश्चोदयत् '[13] । 'मन्यासे शं च नः कृधि '[14] ॥ ९ ॥



## पणिपर्णिवीयमाणऊर्ण्योः ॥ १० ॥

पणि, पर्णि, वीयमाणः, ऊर्ण्योः एषु ग्रहणेषु णकारः प्रकृत्यैव विज्ञेयः । अपवादार्थोऽयमारम्भः । "अग्ने देव पणिभिः "[15] । "पर्णि गोषु स्तरामहे "[16] । "वीयमाणः । तं त एतम् "[15] । 'ऊर्ण्योः कविक्रतुम् "[17] ॥ १० ॥

पणीरत्यादिषु नकारो णत्वमाप्नोति । स च प्राकृतः । यथा—पणि—'आग्ने देव पणिभिः '[15] । पणिम—'पर्णि गोषु '[16] । उभयग्रहणं 'यद्ध स्या ते पनीयसी '[18] इत्यादौ णत्वनिवृत्त्यर्थम् । वीयमाणः—'पणिभिर्वीयमाणः '[15] । ऊर्ण्योः—'ऊर्ण्योः कविक्रतुम् '[17] ॥ १० ॥



| | | |
|---|---|---|
| [1] स. ४-६-४. | [2] सं. ४-५-१. | [3] सं. ५-१-१. |
| [4] सं. ५-२-५. | [5] ,, ७-२-४. | [6] सं. ५-२-५. |
| [7] स. ७-३-१४. | [8] सं. २-५-९. | [9] सं. ५-७-३. |
| [10] सं. १-५-३. | [11] सं. ३-१-११. | [12] सं. ४-१-१०. |
| [13] सं. १-४-८. | [14] स. ३-३-११. | [15] ,, १-१-१३. |
| [16] ,, २-६-११. | [17] ,, १-२-६. | [18] ,, ४-४-४. |

## टवर्गपरः ॥ ११ ॥

टवर्गपरो णकारः प्रकृत्यैव वेदितव्यः । "शितिकण्ठाय च"[1] । "कण्डूयेत पामनं भावुकाः"[2] । टवर्गः परो यस्मात् सः, तथोक्तः ॥ ११ ॥

टवर्गे परतो नकारो णत्वमाप्नोति स च प्राकृतः । 'शुण्ठो दक्षिणा'[3] । 'पिण्डान् प्र यच्छति'[4] । एतत्पर इति किम् ? 'अन्या वो अन्यामवतु'[5] ॥ ११ ॥

---

## चङ्कुणफणत्स्थूणौहिणुयाद्धिणोतिकौणेयोऽणिष्ठाउल्वणमुगणाश्रुतिश्चुपुणीकावाणिजायाणवश्चाटूणारस्स्थाणुंतूणवेवीणायामश्लोणयापणेतवाणीःकल्याणीकुणपंवाणश्शतशोणाश्रुतिर्धाणिकामेणी ॥ १२ ॥

चङ्कुण, फणत्, स्थूणौ, हिणुयात्, हिणोति, कौणेयः, अणिष्ठाः, उल्वणम्, उगणाश्रुतिः, चुपुणीका, वाणिजाय, अणवश्च, आटूणारः, स्थाणुं, तूणवे, वीणायां, अश्लोणया, पणेत, वाणीः, कल्याणी, कुणपं, वाणश्शत, शोणाश्रुतिः, धाणिका, मेणी

---

[1] सं. ४-५-५. [2] सं. ६-१-३. [3] सं. १-८-१७.
[4] सं. २-३-८. [5] सं. -४-२-६.

एषु ग्रहणेषु णकारः प्रकृत्यैव वेदितव्यः । यथा—“अवभृथ नि चङ्कुण”[1] । “अन्वापनीफणत्”[2] । “अयस्स्थूणावुदितौ”[3] । “भ्रातृव्याय प्र हिणुयात्”[4] । “एवास्मै प्रहिणोति”[5] । “रज-नो वै कौणेयः”[6] । “येऽणिष्ठास्तान्”[7] । “यज्ञ उल्वणं क्रियते”[8] । यत्रयत्र श्रुतिः उगणाग्रहणस्य तत्रतत्र णत्वं करणीयम् । यथा—“आव्याधिनीरुगणा उत”[9] । “उगणाभ्य-स्तृꣳहतीभ्यः”[10] । “चुपुणीका नामासि”[11] । “वाणिजाय कक्षा-णां पतये”[12] । “प्रियङ्गवश्च मेऽणवश्च मे”[13] । चेति किं ? “अनवस्ते रथम्”[14] । “एतं वै पर आट्णारः”[15] । “यस्स्था-णुꣳ हन्ति”[16] । “या तूणवे”[17] । “या वीणायाम्”[17] “अश्लोण-याऽसप्तशफया”[18] । “पणेतागोअर्यम्”[19] । “इन्द्रं वाणीरनू-षत”[20] । “कल्याणी रूपसमृद्धा”[21] । “पुरुषकुणपमश्वकुणपम्”[22] । “वाणश्शततन्तुर्भवति”[23] । शतेति किं ? “ऋतावानश्च्यमानाः”[24] । “शोणा धृष्णू”[25] । श्रुतिरिति किं ? “शौणाय स्वाहा”[26] ।

---

1 सं. १-४-४५. 2 सं. १-७-८. 3 सं. १-८-१२.
4 ,, २-२-६. 5 ,, २-२-६. 6 ,, २-३-८.
7 ,, २-५-५. 8 ,, ३-४-३. 9 ,, ४-१-१०.
10 ,, ४-६-४. 11 ,, ४-४-५. 12 ,, ४-६-२.
13 ,, ४-७-४. 14 ,, १-६-१२. 15 ,, ५-६-५.
16 ,, ७-३-१. 17 ,, ६-१-४. 18 ,, ६-१-६.
19 ,, ६-१-१०. 20 ,, १-६-१२. 21 ,, ७-१-६.
22 ,, ७-२-१०. 23 ,, ७-६-९. 24 ,, २-१-११.
25 ,, ७-४-२०. 26 ,, ७-३-१८.

" निजल्गुलीति धाणिका "[1] । " वनस्पतीनामेणी "[2] । मकारेण किं? " उभयतएनी स्यात् "[3] ॥ १२ ॥

चक्षुणेत्यादिषु नकारो णत्वमाप्नोति । स च प्राकृतः । चक्षुण—' अवभृथ नि चक्षुण '[4] । फणत्—' अन्वापनीफणत् '[5] । स्थूणी—' अयस्स्थूणावुदितौ '[6] । हिणुयात्—' भ्रातृव्याय प्र हिणुयात् '[7] । हिणोति—' एवास्मै प्र हिणोति '[8] । कौणेयः—' रजनो वै कौणेयः '[9] । अणिष्ठाः—' येऽणिष्ठास्तान् '[10] । उल्वणम्—' यदेव यज्ञ उल्वणं क्रियते '[11] । ' अनुल्वणं वयत '[11] । उगणाश्रुतिरिति श्रुतिग्रहणादपदात्मकमपि गृह्यते ' उगणा उत '[12] । 'नम उगणाभ्यः'[13] । चुपुणीका-' चुपुणीका नामासि '[14] । वाणिजाय—' मन्त्रिणे वाणिजाय '[15] । अणवञ्च—' प्रियङ्गवश्च मेऽणवश्च मे '[16] । चेत्युपयन्धेन किम्? ' अनवस्ते रथम् '[17] । आङ्गारः—' एतं वै पर आङ्गारः '[18] । स्थाणुम्—' यस्स्थाणुं हन्ति '[19] । तूणवे—' या तूणवे '[20] । वीणायाम्—' या वीणायाम् '[20] । अश्रोणया—' अकाणयाऽश्रोणया '[21] । पणेत—' क्रीणानीति पणेत '[22] । वाणीः—' इन्द्रं वाणीरनूषत '[23] । कल्याणी—' कल्याणी रूपसमृद्धा '[24] । " कल्याणी कीर्तिः "[24] । कुणपम्—' एष ह वै कुणपमत्ति '[25] । वाणश्शत—' वाणश्शततन्तुर्भवति '[26] ।

[1] सं ७-४-१९. [2] सं ६-५-१५. [3] सं ७-१-६.
[4] सं १-४-४५. [5] सं. १-७-८. [6] सं १-८-१२.
[7] सं. २-२-६. [8] सं. २-२-६. [9] सं. २-३-८.
[10] सं. २-५-५. [11] सं. ३-४-३. [12] सं. ४-१-१०.
[13] सं ४-५-४. [14] सं ४-४-५. [15] सं ४-६ २.
[16] सं. ४-७-४. [17] सं १-६-१२. [18] सं. ५-६-५.
[19] सं. ७-३-१. [20] सं. ६-१-४. [21] सं ६-१-६.
[22] सं ६-१-१०. [23] सं. १-६-१२. [24] सं. ७-१-६.
[25] सं. ७-२-१०. [26] सं. ७-५-९.

शतेति किम्? 'ऋतावानश्वयमानाः'[1]। शोणाश्रुतिरिति श्रुतिग्रहणादपदात्मकेऽपि भवति। 'शोणा धृष्णू नृवाहसा'[2]। 'शोणाय स्वाहा'[3]। घाणिका—'निजल्गुलीति घाणिका'[4]। मेणी—'वनस्पतीनामेणी'[5]। मकारोपबन्धेन किम्? 'उभयतएनी स्यात्'[6]॥

—o—

## अवग्रहो वृषण्छीर्षण्ब्रह्मण्णक्षण्चर्मण्चर्षण्॥ ॥ १३ ॥

वृषण्, शीर्षण्, ब्रह्मण्, अक्षण्, चर्मण्, चर्षण् एतेषु ग्रहणेष्ववग्रहस्थो णकारः प्रकृत्यैव विज्ञेयः। "वातो अपां वृषण्वान्"[7]। "शीर्षण्वान्मेध्यो भवति"[8]। "ब्रह्मण्वन्तो देवाः"[9]। "अक्षण्वते स्वाहा"[10]। "चर्मण्वते स्वाहा"[10]। चर्षण्ग्रहणस्य शाखान्तरे विज्ञेयमुदाहरणम्। "मित्रस्य चर्षणीधृतः"[11] इति केचिदुदाहरन्ति। तन्न साधु। "अन्तो लोपात्" (१३—१५) इति वक्ष्यमाणप्रतिषेधप्रतिप्रसवार्थमुक्तत्वादेषां ग्रहणानां चर्षणीधृत इत्यत्र णकारस्य पदान्तत्वाभावात्। अथवा "ऋकारर्कारेरप" (१३—६) आदिमाप्तेरत्र णकारो वैकृत इति शङ्कानिराकरणार्थमेतानि ग्रहणानीत्यन्ये मन्यन्ते। तथासति "मित्रस्य चर्षणी-

[1] सं. २-१-११. [2] सं. ७-४-२०. [3] सं. ७-३-१८.
[4] सं. ७-४-१९. [5] सं. ५-५-१५. [6] सं. ७-१-६.
[7] सं. २-१-११. [8] सं. ७-५-२५. [9] सं. ६-४-१०.
[10] सं. ७-५-१२. [11] सं ३-४-११.

धृतः"[1] इत्युदाहरणं रमणीयम् । अवग्रह इति किं? "वृपन्नग्ने विश्वान्यर्य आ"[2] । "तस्मात् सप्तशीर्षन्"[3] । "ब्रह्मन्विशं वि"[4] । "अक्षन्नमीमदन्त"[5] । "पशूनां चर्मन्"[6] । अवग्रहस्थोऽवग्रह इति लक्ष्यते ॥ १३ ॥

वृपण्णित्यादिर्योऽवग्रहस्तत्र नकारो णत्वमाप्नोति । स च प्राकृतः । वृपण्—'वृपण्वतीमन्वाह'[7] । शीर्षण्—'शीर्षण्याम्मेध्यः'[8] । ब्रह्मण्—'ब्रह्मण्वत्योप दधाति'[9] । अक्षण्—'अक्षण्वते'[10] । चर्मण्—'चर्मण्वते स्वाहा'[10] । चर्मण्णित्यवग्रहश्शाखान्तरे । अवग्रह इति किम्? 'इन्द्रवसे वृषन्'[2] । 'सप्त शीर्षन् प्राणाः'[3] । 'ब्रह्मन्नेव विशम्'[4] । 'अक्षन्नमीमदन्त'[5] । 'पशूनां चर्मन्निमीते'[6] ॥ १३ ॥

---

## ऋण्णपण्णण्णम्णरावृण्ण चेति प्राकृताः॥

ऋण्ण्, पण्ण्, ण्ण्, म्ण्, रावृण्ण् अत्र एते पदैकदेशा बहूपादानार्थमुक्ताः । ऋण्णादिष्वेषु च णकाराः प्राकृता एवेति विज्ञेयाः । 'स्वयमातृण्णामुप'[11] । 'असंतृण्णे हि हनू'[12] । 'स्वयमातृण्णा ज्योतिः'[13] । 'अभिपण्णो यस्मात्'[14] । 'निपण्णाय स्वाहा'[15] । 'दश मासा निपण्णा आसन्'[16] । 'पूष्णो रंहा अपा-

---

[1] सं. ३-४-११. [2] सं. ४-४-४. [3] स. ५-१-७.
[4] स. २-३-३. [5] सं. १-८-६. [6] सं. ६-२-९.
[7] स. २-६-८. [8] सं. ७-५-२५. [9] सं. ५-७-८.
[10] सं. ७-५-१२. [11] स. ५-२-८. [12] सं. ६-२-११.
[13] सं. ५-७-६. [14] सं. ३-४-२. [15] सं. ७-१-१९.
[16] सं. ७-५-२.

म्[11] । 'पूष्णा सयुजा'[12] । 'पूष्णे प्रपथ्याय'[13] । 'अर्यम्णे चरुम्'[14] । 'दधिक्रावृष्णः'[15] । 'आग्रावृष्णः'[16] । प्राकृतशब्दोऽयं पाण्यादिष्वेव चर्षणपर्यन्तेषु मुख्यः । चतसृषु सꣳहितासु णत्वसद्भावात् । ऋण्णेत्यादिषु तु न मुख्यः । किन्तु प्राप्त्यभावेऽपि णत्वप्रापणार्थः । तथाहि—ऋण्णादौ पूर्वणकारस्य स्पर्शपरत्वान्निषेधः, उत्तरस्य तवर्गीयव्यवहितत्वात् प्णाम्णग्रहणयोस्तु 'अलोपात्' (१३–१९) इति निषेधः । ग्रहणसामर्थ्यादेव णत्वं सिध्यतीति चेत्, एवंस्वभावत्वमेव ग्रहणस्यापि मूलमिति परिहारः । किञ्च—अन्वाचये वर्तमानश्चकारोऽप्येतेषु णत्वममुख्यमिति द्योतयति । मुख्यं चेच्चतसृषु संहितासु विद्येत, न चात्र विद्यते । तथाहि—'अभिषण्ण इत्यभि–सन्नः,'[17] 'निषण्णायेति नि–सन्नाय'[18] इत्यत्र पदसंहितायाम् । पूषन्नर्यमन्निति नकारान्तशब्दयोः 'पूष्णो रꣳह्यै,'[11] 'अर्यम्णे चरुम्'[14] इत्यादिसिद्धरूपत्वादत्र वर्णसंहितायामेतत्साहचर्यादेकसूत्रस्थयोरपि ऋण्णषण्णयोर्वर्णसंहितायां णत्वभावो मन्तव्यः । प्रसिद्धपदसमभिव्याहारेण अप्रसिद्धपदार्थसमर्थनं सर्वशास्त्रविदः सर्वे खलु स्वीकुर्वते । तस्मादस्मदुक्त एव युक्तः प्राकृतशब्दार्थः ॥ १४ ॥

ऋण्णादिषु नकारो णकारमाप्नोति, इत्येते हिरण्मयादिरावृष्णान्ता णकाराः प्राकृता वेदितव्याः । ऋण्ण—'स्वयमातृ-

[1] सं. १-३-१०. [2] सं. ४-१-२. [3] सं. ५-३-१६.
[4] सं. २-३-४. [5] सं. १-५-११. [6] ,, ६-३-२.
[7] ,, २-४-२. [8] सं. ७-१-१९.

णामुप दधाति '[1] । 'असंतृण्णे हि '[2] । पण्ण—'पणोऽभिपण्णः '[3] । 'निषण्णाय स्वाहा '[4] । ष्ण—'वृष्णो अंशुभ्याम् '[5] । 'पौर्ण चरुम् '[6] । म्णो—'अर्यम्णे चरुं निः '[7] । 'इन्द्राय सुत्राम्णे '[8] । वृण्ण—'दधिक्रावृण्णः '[9] । 'आग्रावृण्णः '[10] ॥ १४ ॥

नन्वत्र 'नकारो णकारम्' (१३-६) इत्यधिकृत्य विकारत्वेन विहिता हिरण्मयादिशब्देषु णकाराः प्राकृता इति विप्रतिषिद्ध मिदमभिधीयते । न चानिमित्तत्वात्प्राकृतत्वं युक्तं वक्तुम् । 'हिरण्मयम्,'[11] 'चीयमाणः,'[12] 'हिणुयात्,'[13] 'वृषण्,'[14] इत्यादिषु निमित्तपूर्वकत्वदर्शनात् ॥ न च पाण्यादिशब्देषु तदभावाद्युक्तम् । तत्रापि तथाविधान् शब्दान् पृथगनुक्रम्य अन्ते अनिमित्तत्वमेव वक्तव्यम्, न तु प्राकृतत्वम् । किञ्च—अनिमित्तस्य विधेयत्वे सर्वं विधेयं स्यात् ॥

अत्रोच्यते—विकारत्वेन विहितानां णकाराणां यद्यपि मुख्यं प्राकृतत्वं न सम्भवति, तथाऽपि निमित्ताभावभावित्वलक्षणं गौणं प्राकृतत्वमिहाश्रित्य प्राकृता इत्युच्यन्ते । न च हिरण्मयादिषु असिद्धो निमित्ताभावः, हिरण्मयशब्दे तावत् 'स्पर्शपरः' (१३-१५) इति प्रतिषेधेन विधौ बाधिते विधिनिबन्धनं निमित्तत्वमपि बाध्यते । 'चीयमाणः '[12] 'ऊण्योः '[15] 'हिणुयात् '[13]

---

[1] सं. ६-२-८. [2] सं. ६-२-११. [3] सं. २-४-२.
[4] सं. ७-१-१९. [5] सं. १-४-२. [6] सं. १-८-२.
[7] सं. २-३-४. [8] सं. १-८-९. [9] सं. १-५-११.
[10] सं. ६-३-२. [11] ,, २-४-१३. [13] सं. १-१-१३.
[13] सं. २-२-६. [14] ,, २-५-८. [15] सं. १-२-६.

'हिणोति'[1] इत्यादिषु तु पूर्वपदपृथग्भावेऽपि णत्वमिष्यते। 'वृ-षण्ण्'[2] इत्यादिषु 'अन्तः' (१३-१६) इति प्रतिषेधान्निमित्तत्व-बाधः पूर्ववत्। ऋण्णषण्णयोः 'स्पर्शपर' (१३-१५) त्व 'त-वर्ग' (१३-१५) व्यवायलक्षणात्प्रतिषेधात्। ष्णम्णयोः 'अ-लोप' (१३-१६) लक्षणात्। रावृण्ण इत्यत्र तूभयतः। तस्मा-न्निमित्ताभावभावित्वलक्षणं गौणं प्राकृतत्वं सर्वथास्त्येव। य-दपरमुक्तं अनिमित्तस्यापि विधेयत्वे सर्वं विधेयं स्यादिति। तन्न॥ यथा हि—अनिमित्ता अपि प्रग्रहा विधीयन्ते, प्रयोज-नसद्भावात्, एवं पाणिगणादिष्वसन्देहार्थं णत्वविधानमुपपद्यते। हिरण्मयादिषु त्वर्थात्प्रतिप्रसवात्मको विधिस्संपद्यते'॥ ननु पाण्यादिषु शब्देषु कुतस्सन्देहः? तदुच्यते—अन्यत्र सर्वत्र णकारस्य निमित्तपूर्वकत्वदर्शनात्पाण्यादिशब्देषु निमित्ताभावा-ण्णत्वाभावशङ्कया भवेत्सन्देहः तदपनोदनार्थं तेष्वपि णत्वं विधीयते॥१४॥

---

## न सुपुम्नोऽग्नियुष्मानीतोऽन्तोऽलोपात्स्पर्शप-रो व्यवायेषु शसचटतवर्गीयेषु ॥१५॥

सुपुम्नः, अग्नि, युष्मानीतः एतेषु नकारो णत्वं नापद्यते। यथा—'सुपुम्नस्सूर्यरश्मिः'[3]। 'इन्द्राग्निभ्यां त्वा'[4]। 'यु-ष्मानीतो अभयम्'[5]॥ अन्तः पदान्तो नकारो णत्वं नापद्यते।

---

[1] सं. २-२-६.   [2] सं. २-५-८.   [3] सं. ३-४-७.
[4] ,, ४-४-५.   [5] ,, २-१-११.

'पितॄन् हविषे अत्तवे'[1] । 'प्र मृणीहि शत्रून्'[12] ॥ अलोपादकारलोपात्परोपि नकारो णत्वं नापद्यते । यथा—'वृत्रघ्न इन्द्राय त्वा'[13] । 'वृत्रघ्नस्तोमाः'[14] । नन्वत्र निमित्तनिमित्तिनोर्भिन्नपदस्थत्वाद्विषमो दृष्टान्तः । सत्यम् । सिंहावलोकनन्यायेन प्रथमे प्रश्ने सप्तमाध्यायशेषोदाहरणरूपेण घटते । तत्र च समानपदत्वनियमो नास्ति । घ्न इत्यस्य हन्शब्दविकृतत्वात् 'रषःपूर्वो हवनी,' (७–११) इति प्राप्तिः ॥ स्पर्शपरश्च नकारो णत्वं नाप्नोति ।'संक्रन्दनोऽनिमिषः'[16] । 'अव रुन्धे ताप्र्यम्'[17] । 'नखनिर्भिन्नम्'[18] । स्पर्शोऽत्राप्रसिद्धलक्षणाविषयो विवक्ष्यते । अन्यथा 'पूर्णा पश्चात्'[19] इत्यादौ णत्वं न स्यात् । 'रेफात् परं च' (१४–४) इति हि प्रसिद्धलक्षणं, तन्मूलं च पूर्णेत्यत्र द्वित्वम् । प्रसिद्धपदेन किं ? 'नखनिर्भिन्नम्'[18] इत्यादावपि कथञ्चिल्लक्षणमूलत्वं संभवति । किं तल्लक्षणमिति चेत् ? 'द्वितीयचतुर्थयोः' (१४–९) इत्यत्र सूत्रे 'व्यञ्जनोत्तरयोः' (१४–९) इति वाच्यो युक्त्यन्तरमिति ब्रूमः । तस्य लक्षणं[10] तत्रैव स्फुटीकरिष्यते महता प्रबन्धेन । स्पर्शः परो यस्मादसौ, स्पर्शपरः ॥ शसचटतवर्गीयेषु व्यवायेषु व्यवधायिकेषु सत्सु नकारो णत्वं नापद्यते । यथा—

[1] सं. २-६-१२. [2] सं. १-२-१४. [3] सं. १-४-१.
[4] ,, ४-७-१६. [5] पदस्थत्व. [6] सं. ४-६-४.
[7] ,, २-४-११. [8] सं. १-८-९. [9] सं. ३-५-२.
[10] लक्षणत्वं.

'रशनामा दत्ते'[1] । 'अग्ने रसेन'[2] । 'रोचन्ते रोचना दिवि'[3] । 'सोमꣳ राजानम्'[4] । 'प्रक्रीडिनः पयोधाः'[5] । 'पृतना जयेम'[6] । 'जनप्रथनाय'[7] । 'ऋकारकार' (१३—९) आदिप्राप्तेः प्रतिषेधोऽयं विहितः ॥ १९ ॥

सुपुन्नः, अग्नि, युष्मानीतः इत्येतेषु नकारः समानपदस्थान्निमित्ताण्णकारं नाश्नुते । सुपुन्नः—'सुपुन्नस्सूर्यरश्मिः'[8]। अग्नि—'इन्द्राग्निभ्याम्'[9] । युष्मानीतः—'युष्मानीतो अभयम्'[10]॥ अन्त इति पदान्तो नकारः समानपदस्थान्निमित्ताण्णत्वं नाप्नोति—'गृहान्मे तर्पयत'[11] ।'अपानेन पितॄन्'[12] । 'ते देवा अब्रुवन्'[13] ।'व्यानेन मनुष्यान्'[12]॥ अलोपादिति—अन्नन्तस्य प्रातिपदिकस्य भसंज्ञाविषये 'अल्लोपोऽनः'[14] इति मूलशास्त्रविहितादकारलोपात्परो नकारः समानपदस्थान्निमित्ताण्णत्वं नाप्नोति । अत्र 'प्रतिदीव्नः प्रतिदीव्ना'[15] इति शाखान्तरीयमुदाहरणम् । 'वृत्रघ्ने'[16] । 'वार्त्रघ्नः'[17] इत्यादि तु नोदाहरणम्, समानपदनिमित्ताभावेन प्राप्त्यभावात् । नापि नानापदीयनिमित्तकं णत्वविधानमस्यास्तीत्युपपादितम् । तत्सद्भावकल्पनायामपि सप्तम एवाध्याये तत्प्रतिषेध्यम् । न च तथोक्तं सूत्रकृता । तस्मान्नाय-

[1] सं. ६-२-६. [2] सं. १-४-४६. [3] सं. ७-४-२०.
[4] ,, १-७-१०. [5] ,, ४-३-१३. [6] ,, ३-५-३.
[7] ,, ३-२-८. [8] ,, ३-४-७. [9] ,, ४-४-९.
[10] ,, २-१-११. [11] ,, ३-१-८. [12] ,, १-७-२.
[13] ,, २-६-६. [14] पा. ६-४-१३४. [15] 'प्रतिदिव्नः प्रतिदिव्ना'.
[16] ,, १-४-१. [17] ,, १-८-१५.

मर्थोऽभिमतस्तस्य ॥ स्पर्शपर इति—स्पर्शात्पूर्वो नकारः समानपदस्थान्निमित्ताण्णत्वं नाप्नोति । 'ग्रीवा अपि कृन्तामि'[1] । 'ग्रन्थिं ग्रथ्नातु'[2] । 'अमीष्टकां तृन्दन्ति'[3] । 'तद्याव रुन्धे'[4] । 'नखनिर्भिन्नम्'[5] ॥ तथा शकारसकाराभ्यां चवर्गादिभिश्च त्रिभिर्वर्गैः व्यवाये[6] नकारः समानपदस्थान्निमित्ताण्णत्वं नाप्नोति । श—'रशनामा दत्ते'[7] । स—'रसेन तेजसा'[8] । चवर्गः—'इन्द्राग्नी रोचना दिवः'[9] । 'सोमꣳ राजानम्'[10] । टवर्गः—'इष्टेन पक्वम्'[11] । 'अधिष्ठानमारम्भणम्'[12] । तवर्गः—'जयत्येव तां पृतनाम्'[13] । 'अचिता रथानाम्'[14] । 'नखनिर्भिन्नम्'[5] ॥ १५ ॥

—o—

## पृक्तस्वरात्परो ळो डं पौष्करसादेः पौष्करसादेः ॥ १६ ॥

पृक्तस्वरात् ऋकारात् परो ळकारो दुस्स्पृष्ट[15]संज्ञो डकारमापद्यते, पौष्करसादेर्मते । यथा—'मृडातीदृशे'[16] । पृक्तस्वरादिति किं ? 'नळं प्लवम्'[17] इति शाखान्तरे । पौष्करसादिग्रहणं पूजार्थं न तु विकल्पार्थम् । मूर्धस्थानतया दुस्स्पृष्ट[15]डळकारयोः[18] सादृश्यमस्तीति व्याकरणानुसारी सूत्रपाठोऽयम् । कथमनुसारित्व-

---

[1] सं. १-२-६. [2] सं. १-१-२. [3] सं. ५-६-४.
[4] „ २-३-७. [5] „ १-८-९. [6] चकारादिभिः पञ्चदशभिर्व्यवाये च.
[7] „ ६-३-६. [8] „ १-४-४६. [9] „ ४-२-११.
[10] „ १-७-१०. [11] „ ७-३-११. [12] „ ४-६-२.
[13] „ ३-४-४. [14] „ ४-६-४. [15] „ दुरिक्षष्ट.
[16] „ १-१-१४. [17] आ. ४-७. [18] दुस्स्पृष्टडकारयोः.

मिति चेत्? तथाहि—'स्थानेऽन्तरतमः[1]'। स्थाने प्राप्यमाणानां वर्णानामन्तरतमस्सदृशतम आदेशो भवतीति ॥

सूत्रस्य पाठान्तरमपि व्याख्यायते—'पृक्तस्वरात्परो ळो ड पौष्करसादेः' अत्र समानपद इत्यस्यानुवर्तनं विज्ञेयम्। पौष्करसादेः शाखिनः समानपदे पृक्तस्वराद्ळकारात्परो ळकारो डकारमापद्यते। यथा—'ते नो मृडयन्तु[12]'। पृक्तस्वरादिति किं? 'इलान्दं भवति[13]'। समानपद इति किं? 'पितृलोकं सेमिन[14]'। सहचरितत्वादेकस्य निषिद्धे इतरस्यापि 'पितृलोककामस्य[15]' इत्यस्य समानपदत्वे सत्यपि निषेधो भवति। इदमपि पाठान्तरं बह्वादृतम्॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे त्रयोदशोऽध्यायः.

पृक्तस्वरो नाम ऋकारः ऌकारश्च, रेफळकारसंपृक्तत्वात्। तस्मात्परं ळकारः डकारमाप्नोति पौष्करसादेर्मतात्। 'मृडातीदृशे[16]'। 'तया नो रुद्र मृडय[17]'। पौष्करसादिग्रहणं पूजार्थम्॥ १६॥

इत्याचार्यगार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये प्रातिशाख्यव्याख्याने त्रयोदशोऽध्यायः.

———

[1] पा. १-१-५०. [12] सं. ४-४-३. [13] ब्रा. ७-३-९.
[14] सं. २-६-२. [15] ,, ६-६-८. [16] ,, १-२-१४.
[17] ,, ४-६-१.

# अथ चतुर्दशोऽध्यायः.

## स्वरपूर्वं व्यञ्जनं द्विवर्णं व्यञ्जनपरम् ॥ १ ॥

स्वरपूर्वं व्यञ्जनं व्यञ्जनपरं द्विवर्णमापद्यते । यथा—"उरुप्रथस्व"[1] । एवम्पूर्वं इति किं? "तत् प्रवाते"[2] । व्यञ्जनपरं इति किं? "उरुरुदुरुणस्कृधि"[3] । व्यञ्जनमिति किं? "प्रउगमुक्थम्"[4] । स्वरः पूर्वो यस्मात् तत् स्वरपूर्वम् । व्यञ्जनमस्मात् परं इति व्यञ्जनपरम् । द्वयोर्वर्णयोः समाहारो द्विवर्णम् ॥ १ ॥

स्वरे पूर्वे व्यञ्जने च परे तन्मध्यवर्ति व्यञ्जनं द्विवर्णं रूपद्वयमश्नुते । 'अक्कꣳरिहाणाः'[5] । 'आज्ज्यमसि'[6] । 'एकव्वता देवाः'[7] । 'ता वैदेह्योऽभवन्'[8] । तथा अनुस्वारस्य तु परसूत्रविधेयत्वेन अव्यवधायकत्वमुक्तमष्टमाध्याये । तेनानुस्वारात्परस्य संयोगादेरनेन विधिना द्वित्वं भवति । 'इन्द्रꣳ स्वराजानम्'[9] । 'संवत्सरीणाꣳ स्वस्तिम्'[10] । अनुस्वारस्य तु परसूत्रविधेयस्यापि संयोगपरत्वे द्वित्वमिष्यते—

अनुस्वारो द्विरुच्येत संयोगे परतस्स्थिते ॥

इति शिक्षावचनात् ॥ एकव्यञ्जनपरस्य तु न भवति । 'माऽघशꣳसः'[11] । 'प्रत्युष्टꣳ रक्षः'[12] ॥ १ ॥

---

[1] स. ६-१-८. [2] स. ६-४-७. [3] सं. २-६-११.
[4] सं. ४-४-२. [5] ,, १-१-१३. [6] ,, १-६-१.
[7] ,, ६-२-६. [8] ,, २-१-४. [9] ,, २-३-६.
[10] ,, ३-१-५. [11] ,, २-१-१. [12] ,, १-१-२.

## लवकारपूर्वस्स्पर्शश्च पौष्करसादेः ॥ २ ॥

पौष्करसादेः मते लकारपूर्वो वकारपूर्वो वा स्पर्शो द्विवर्णमापद्यते। यथा—"कल्याञ्जुहोति"[1] । "विभूदावन्ने"[2] । स्वरपूर्वत्वं द्वित्वं चान्यादिशति चकारः । स्पर्श इति किं? "कल्याणी रूपसमृद्धा"[3] "वायव्यान्"[4] । एवम्पूर्व इति किं? "कूश्माञ्छकभिः"[5] । "तत्वदं तद्गोलानि"[6] । लकारश्च वकारश्च लवकारौ, तौ पूर्वौ यस्मात् स तथोक्तः ॥ २ ॥

चशब्दस्समुच्चये । लवकाराभ्यां परस्स्पर्शो द्वित्वमहंते। चशब्दाल्लवकारौ च । 'यद्धिरण्यशल्कैः'[7] । 'तन्तुल्गुलु'[8] 'अनुल्बणं वयत'[9] । 'यद्वल्मीकः'[10] । 'दधिक्राव्णः'[11] । 'प्र यस्योभ्दाव्ने'[12] । लवकारपूर्व इति किम्? श्रूयतान्—स्वरपूर्वग्रहणमुत्तरार्थमिहानुवर्तते । तत्र यथान्यासे स्वरपूर्वाभ्यां लवाभ्यां परस्स्पर्श इति योजना । लवकारपूर्वग्रहणाभावे तु स्वरपूर्वः स्पर्श इति स्यात् । तत्तु पौष्करसादेरपि नेष्टं तन्मा भूदिति तदुच्यते । स्पर्श इति किम्? 'विग्रहणे वाग्वान्'[14] । 'यव्वचायै गव्वचायै'[15] । नेदं सूत्रमिष्टम् ॥ २ ॥

---

1 सं. ५-४-८. 2 सं. ३-५-८. 3 ब्रा. ७-१-६.
4 ,, १-८-७. 5 ,, ५-७-२३. 6 ,, ३-१-११.
7 ,, ५-४-२. 8 ,, ३-२-८. 9 ,, ३-४-२.
10 ,, ५-२-२. 11 ,, १-३-११. 12 ,, १
13 इत्यनु. 14 ,, ४-५-१. 15 ,,

## स्पर्श एवैकेषामाचार्याणाम् ॥ ३ ॥

एकेषां आचार्याणां मते लवकारपूर्वः स्पर्श एव द्विवर्णत्वमाप्नोति। अनेनावधारणेन सूत्रान्तरारम्भणेन च पौष्करसादिमते लवकारयोश्च द्वित्वमस्तीति गम्यते। इदमेव सूत्रमिष्टं न तु पूर्वसूत्रम्। पूर्वोक्तान्येवोदाहरणानि ॥ ३ ॥

एकेषामाचार्याणां मते लवकाराभ्यां परस्स्पर्शो यथ द्वित्वमश्नुते न तु तौ लकारवकारावपि। तान्येवोदाहरणानि ॥ ३ ॥

---

## रेफात्परं च ॥ ४ ॥

रेफात्परं व्यञ्जनं द्विवर्णमापद्यते। यथा—'अर्चन्त्यर्कमर्किणः'[1]। "अर्क्केण वै"[2]। "ऊर्म्वो उदुम्बरः"[3]। स्वरपूर्वत्वाद्वित्वयोः आकर्षकः चकारः। ननु व्यञ्जनपरत्वाकर्षकः किं न स्यात्? नेति ब्रूमः। नियमाभावात्। तथाहि—"अथ न" (१४–१४) इत्युत्तरत्राधिकारे निषेधः "अवसाने" (१४–१५) "ऊष्मा स्वरपरः" (१४–१६) इति। एतन्निषेधद्वयेन रेफात्परस्य व्यञ्जनस्य व्यञ्जनपरत्वे स्वरपरत्वे तदभावे च द्वित्वमस्तीति निश्चीयते। कथम्? अप्रसक्तप्रतिषेधानुपपत्तेः। स्वरपूर्वत्वात्वादेशेन किं? "त्रयम्बकम्"[4] इत्यादौ मा भूदिति। किञ्च—"अचो रहाभ्यां द्वे"[5] इति पाणिनीयसूत्रे-

---

[1] स. १-६-१२. [2] सं. ७-५-९. [3] सं. ५-१-१०.
[4] स. १-८-६. [5] पा. ८-४-४६.

णापि स्वरपूर्वत्वे[1] सत्येव द्वित्वं विधीयते । तस्यायमर्थः—अच उत्तरौ यौ रेफहकारौ ताभ्यामुत्तरस्य यरो द्वे भवत इति । तत्रापि स्वरपूर्वत्वं दृश्यते । केचिदेवमूचुः—स्वरपूर्वादि शब्दवद्रेफपूर्वमिति वाच्ये रेफात्परमिति वाचोयुक्त्यन्तरमर्थान्तरं समर्थयति[2]। "अहर्देवानाम्"[3] इत्यादौ वैकृतरेफादुत्तरस्य न स्यात् द्वित्वमिति । तदेतदध्ययनविरुद्धपद्धतिमध्यास्ते । वयं तु वदामो वाचोयुक्त्यन्तरप्रयोजनम्—रेफपूर्वमित्युक्ते विरुद्धविग्रहेण सूत्रं सन्दिग्धं स्यात्, रेफात् पूर्वं रेफपूर्वमिति भवति एष विग्रह इति चेत्, अध्यायादिसूत्रेणैतत् गतम् । ततः पौनरुक्त्यमस्य सूत्रस्यापद्येत । ननु पौनरुक्त्यभयादेव विरुद्धविग्रहं निवारयामः । नेयं सरला वृत्तिः । "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति न्यायात् । अत्र विरुद्धशङ्कालेशोपि नावकाशं लभतामिति वाचोयुक्त्यन्तरेण सूत्रमाचार्यः प्रोवाच ॥ ४ ॥

चशब्देन स्वरपूर्वं व्यञ्जनं द्विवर्णमित्येतानि पदान्यन्वादिश्यन्ते न स्पर्शः । कुतः ? परमिति नपुंसकनिर्देशात् । अत्र रेफपूर्वं चेति बहुव्रीहिनिर्देशे कर्तव्ये रेफात्परमिति व्यस्तनिर्देशः क्रियते; अन्वादेशलब्धस्वरपूर्वशब्दो रेफविशेषणं यथा स्यादिति । तदयमर्थः—स्वरपूर्वाद्रेफात्परं व्यञ्जनं द्वित्वमश्नुते । तथोक्तं मूलशास्त्रे—'अचो रहाभ्यां द्वे'[4] इति । तद्यथा—'मर्काय त्वा'[5] । 'पर्षानुष्टुप्'[6] । 'ऊर्मिमणार्मिधुमत्तमाः'[7] । 'अध्व-

[1] स्वरपूर्वत्वादि. [2] 'अर्थान्तरस्योदाहरणमुच्यते' इत्यधिकः पाठः.
[3] सं. १-६-१. [4] पा. ८-४-४६. [5] सं. १-४-१.
[6] ,, ६-१-२. [7] सं. १-१-३.

यर्युर्वा ऋत्विजाम्[1] । 'दाद्दर्यम्[2]। 'नमो वष्प्याय च[3] । स्वरपूर्वादिति किम्? 'त्र्यम्बकं यजामहे[4] । व्यञ्जनपरमिति तु नान्वादिश्यते; अवसाने द्वित्वप्रतिषेधसामर्थ्यात् । तत्र ह्यनेनैव सूत्रेण प्राप्तिः ॥ ४ ॥

—o—

## द्वितीयचतुर्थयोस्तु व्यञ्जनोत्तरयोः पूर्वः ॥५

स्वरपूर्वयोर्व्यञ्जनोत्तरयोर्द्वितीयचतुर्थयोस्तु पूर्व आगमो भवति। यथा क्रमेण द्वितीयस्य प्रथमः, चतुर्थस्य तृतीयः । यथा—" विक्ख्याय चक्षुषा त्वमभि तिष्ठ"[5] । " मेग्घ्या विद्युतो वाचः"[6] । द्वितीयचतुर्थयोरिति किं? " आद्यमस्याग्नम्"[7] । एवम्पूर्वयोरिति किं? " वद्ध्र् स्वयमभिगूर्ताय नमः"[8] । "पङ्क्चां द्वे सवने"[9] । एवम्परयोरिति किं? " उखाये सदने"[10] । " मेधायते स्वाहा"[11] । प्रथमसूत्रेण प्रसक्तं द्वित्वं निवर्तयति तुशब्दः । अन्ये त्वन्यथा मन्यन्ते पूर्वागमस्य द्वित्वं निवारयतीति । नैतत्सारम्। " सवर्णसवर्गीयपर" (१४—२२) इत्युत्तरत्र निषेधादेव तस्य निवृत्तेः[12] ॥

अत्र केचिदाहुः—व्यञ्जनपरयोः इति वाच्ये वाचोयुक्त्यन्तरमर्थान्तरं सूचयति । सांहितासांहितसाधारणं परनिमित्तमुक्तं,

---

[1] सं. ३-१-१०. [2] सं. ३-२-२. [3] सं. ४-५-७.
[4] सं. १-८-६. [5] सं. ४-१-२. [6] सं. ५-२-११.
[7] सं. २-२-६. [8] सं. ३-२-८. [9] सं. ६-१-६.
[10] सं. ४-१-५. [11] सं ७-५-११. [12] तन्निवृत्तेः.

तत इहान्यतरस्यामगमनिमित्तत्वे प्राप्तेऽसांहितपदानां[1] नित्यत्वात्तद्ग्रहणमेव न्याय्यमिति कृत्वा वैकृतव्यञ्जनपरत्वे सति नैतद्विधानं भवति । यथा—[3] "अभ्यस्थात्"[2] इत्यादि । नायं पक्षः । अध्ययनविरोधात् मूलसूत्रविरोधाच्च । तथाहि—मूलसूत्रे स्वरपूर्वत्वे व्यञ्जनमात्रपरत्वे च सति विहितं द्वित्वमत्र निषिध्यते। न तु तत्र व्यञ्जनं विशेषितम् तदपवादकत्वादत्रापि तद्विशेषो वक्तुमयुक्तः । शिक्षादिपरीक्षणादध्ययनानुरोधाच्च वाचोयुक्तचन्तराभिप्रायोऽस्माभिरभिधीयते अपवादापवादकयोरनयोर्नियमो नास्ति, किमिति—स्वरपूर्वत्वे सति व्यञ्जनपरमेव व्यञ्जनं द्वित्वं भजते, द्वितीयचतुर्थौ तु व्यञ्जनपरावेव पूर्वागमं भजत इति । किन्तु प्राचुर्याभिप्रायेणेदं सूत्रद्वयं प्रवृत्तम्। कथं नियमाभावः? अन्यथाऽपि कुत्रचित् कार्यद्वयदर्शनात् । "अत्ता हवींषि"[4] । "अन्नपते"[5] इत्यादौ द्वित्वम् । "प्रच्छच्छन्दः,"[6] ।"आद्धि त्वं देव प्रयता"[4] इत्यादौ पूर्वागमः । "ताꣳहस्ते"[7] इत्यत्र तु प्राप्तौ सत्यामपि नेदं कार्यं दृश्यत इति न नियमाभावः । शिक्षा चैवं वक्ष्यति—

स्वरात् पूर्वस्य वर्णस्य कश्चिद्द्वित्वं च कथ्यते ।
न च वर्गद्वितीयस्य न चतुर्थे कथञ्चन ॥[8]

व्याख्यातं च वचनमेतद्विद्वद्भिः—

---

[1] असंहितानां. [2] सं. ४-२-८. [3] च.
[4] सं. २-६-१२. [5] सं. ४-२-३. [6] सं. ४-३-१२.
[7] सं. ६-१-३. [8] कदाचन.

कुत्रचित् स्वरयोर्मध्ये द्वित्वं लक्ष्यानुसारतः ।
पूर्वागमस्तथा तत्र ज्ञेयो वर्णविचक्षणैः ॥

एवंरूपमनियमं सूचयितुं व्यञ्जनोत्तरयोरिति युक्त्यन्तरस्वीकारः[1] । व्यञ्जनमुत्तरं याभ्यां तौ व्यञ्जनोत्तरौ, तयोः ॥ ५ ॥

तुशब्दो द्वित्वं निवर्तयति । द्वितीयचतुर्थयोस्तु व्यञ्जनोत्तरत्वनिमित्तं द्वित्वं न भवति । किन्तु तस्मिन् विषये तस्मात्तस्मात्पूर्वो वर्ण आगमो भवति । यथा—'व्यख्यन्महिषः'[2] । 'यदापो अघ्नियाः'[3] । 'पार्श्वत आच्छ्यति'[4] । 'शिशवो न शुभ्राः'[5] । नन्वयं द्वितीयचतुर्थयोः पूर्ववर्ण आगमः किं पुरस्ताद्भवति ? उतोपरिष्टात् ? तदुच्यते—पूर्व इति तन्त्रेण शब्दद्वयमिहोपात्तम् । तेन पूर्ववर्णागमः तस्मात्तस्मात्पूर्वो भवतीति च सिद्ध्यति । द्वितीयचतुर्थयोरिति किम् ? 'योनिश्शिफयम्'[6] । 'याञ्जैघास्यैषा'[7] । व्यञ्जनोत्तरयोरिति द्वित्वविपर्ययनिर्देशेन किम् ? 'उद्ग्राभ्रा सङ्ग्रायति'[8] । अत्र केचिद्व्याचक्षते—व्यञ्जनपरमिति प्रथमसूत्रनिर्दिष्टं निमित्तमत्र व्यञ्जनोत्तरयोरिति शब्दान्तरेणानुवदन् सूत्रकारः अनयोरुभयोस्सूत्रयोः अव्याप्त्यादिदोषग्रस्ततां दर्शयति । तेन 'अश्वपकाय',[9] 'नीचादुच्चा',[10] 'अत्ता हवींषि'[11] इत्यादौ व्यञ्जनपरत्वाभावेऽपि ककारादीनां द्वित्वं सिद्धं भवति; अव्याप्तत्वात्प्रथमसूत्रस्य । तथा—'सुकंसंशाय'[12] इत्यादौ अनुस्वारस्य द्वित्वाभावश्च सिद्धो भवति, अतिव्याप्तत्वात् । एवम्—

[1] उत्तरस्वीकारः [2] स. १-५-३. [3] सं. १-३-११.
[4] स. ६-३-९. [5] स. ४-२-१३. [6] ,, ५-६-९.
[7] स. १-५-७. [8] सं. ६-५-८. [9] सं. ७-५-१२.
[10] सं. २-३-१४. [11] स. २-६-१२. [12] सं. १-६-१२.

'अक्षिद्रा अजायन्त'[1] । 'समिद्धो अञ्जन्'[2] इत्यादौ पूर्वागमश्च सिद्धो भवति; अन्यासत्वादस्य सूत्रस्य । सोऽयं शास्त्रतात्पर्यानवगतिमूलस्य परिहाराप्रतिभानस्य प्रभावः[3] यत्समानार्थस्य शब्दान्तरस्य प्रयोगं व्याजीकृत्य सूत्रद्वयं दूष्यते । तथाहि— न हि समानार्थशब्दान्तरयोगोऽर्थान्तराय कल्पते । तथात्वे पर्यायशब्दोत्सादप्रसङ्गात् । तथा—'वर्णः कारोत्तरो वर्णाख्या' (१–१६) 'ह्रस्वो वर्णोत्तरस्त्रयाणाम्' (१–२०) इत्यादिषु न कश्चिद्विशेषो विद्यते । एवं मूलशास्त्रे 'वा' 'उभयथा' 'अन्यतरस्याम्' इति गुरुतरगुरुतमशब्दप्रयोगेऽपि ॥ एकव्यञ्जनपरेऽनुस्वारे अतिप्रसङ्गस्तु नास्त्येव, तस्य परसूत्रविधेयत्वात्[4] । संयोगपरे तु द्वित्वं शिक्षावचनेन साधितम् । शिक्षोक्तविशेषस्य च ग्राह्यत्वं द्वितीयाध्याये 'उरः कण्ठशिरो मुखम्' (२–३) इत्युरोग्रहणसामर्थ्यात्सिद्धम् । यदपरमुक्तम्—'अत्यकाय'[5] । 'अक्षिद्राः'[1] इत्यादावव्याप्तिरिति, तत्र वदामः इह खल्वप्राप्तप्रापणार्थमसन्देहार्थं च द्वित्वादिकार्यं विधीयते । यथा—'इषे त्वा'[6] । 'पशून्पाहि'[6] । 'ऋतमस्यृतसदनमसि'[7] ।'अन्वह मासाः'[8] इत्येवमादिषु द्वित्वमप्राप्तप्रापणार्थं पदावस्थायामभावात् । 'ऊर्जस्वतीः'[9] । 'रयिमस्मे'[9] । 'अश्मा भवतु'[10] । 'अन्या वो अन्यामवतु'[11] इत्यादावसन्देहार्थम् । एवं पूर्वागमश्च 'अनुख्यातारम्'[12] । 'आछ्यति'[13] । 'अप्यवोचत्'[14] इत्यादावप्राप्तप्रापणार्थः । 'व्यख्यन्माहिषस्सुवः'[15] । 'अ-

---

[1] स. ३-५-८. [2] स. ६-१-११. [3] प्रतानः.
[4] परसूत्रविषयत्वात्. [5] स ७-५-२२. [6] स. १-१-१.
[7] स. १-१-५. [8] स. १-७-१३. [9] स. १-१-७.
[10] „ ४-६-६. [11] „ ४-२-६. [12] स. २-३-८.
[13] स. ६-३-५. [14] ब्रा. ८-५-१. [15] स १-६-३.

म्रियाः[1] इत्यादावसन्देहार्थः। तस्मात् यत्र पदावस्थायामसन्दिग्धं द्वित्वं पूर्वागमश्च दृश्यते—'अत्वकाय'[2]। 'नोचादुश'[3] इत्यादौ 'अश्विवद्राः'[4]। 'समिद्धः'[5] इत्यादौ च न तद्विषयं शास्त्रप्रणयनयत्नं परमर्षयः कुर्वन्ति। व्यक्तोक्तं चैतत् पूर्वैश्शास्त्रतात्पर्यविद्भिः—

क्वचित्स्वरयोर्मध्ये द्वित्वं लक्ष्यानुसारतः।
पूर्वागमस्तथा तत्र ज्ञेयो वर्णविचक्षणैः॥ इति॥

ये तु इदमेव वचनमनयोस्सूत्रयोरव्याप्तिबोधकं मन्यन्ते, नमस्तेभ्यः॥ तदाहुर्नीतिविदः—

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम्।
*लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति॥ इति॥*

क्वचित्तावत्पदसंहितावशादेव द्वित्वमवगम्यते। यथा—'दक्कामः'[6]। 'त्रिष्टुग्ग्रैष्मो'[7]। 'तच्चाद्दुः'[8]। 'तज्जयानाम्'[9]। 'एतत्ते'[10] 'अस्तभ्नाचाम्'[11]। 'उद्दिवङ्स्तभान'[12]। 'यास्स निवपति'[13]। 'देवासुरास्संयत्ताः'[14] इत्यादौ। अतो न तत्राप्यव्याप्तिरिति सर्वमनवद्यम्॥ ५॥



## रेफपूर्वयोश्च नित्यम्॥ ६॥

"रेफात्परं च" (१४–४) इत्यस्यापवादकमेतत्। द्विवचनेन

[1] सं. १-२-१. [2] स ७-६-१२. [3] स. २-३-१४.
[4] ,, ३-५-८. [5] ,, ५-१-११. [6] ,, २-२-३.
[7] सं. ४-३-२. [8] ,, ७-१-५. [9] ,, ३-४-४.
[10] सं. १-४-४३. [11] सं. १-२-८. [12] सं. १-३-१.
[13] स. ६-३-१. [14] सं. १-५-१.

द्वितीयचतुर्थौ गृह्येते सविशेषणौ । रेफपूर्वयोरनयोर्नित्यं पूर्वागमो भवति । आगमान्वादेशकः चकारः । यथा—"ऊर्ध्वो भव"[1] । "अर्ध्यवाड्"[2] । नित्यमिति किं? स्वरपरत्वेऽपि भवत्वेतदिति । यथा—"अर्थेतस्स्थापाम्"[3] । "मूर्खा तज्जघन्याम्"[4] । "गो-अर्घ्यमेव"[5] ॥ ६ ॥

चशब्देन पूर्व इत्यन्वादिश्यते । समुच्चयार्थो वा । रेफपूर्वयोश्च द्वितीयचतुर्थयोर्द्वित्वं न भवति । किन्तु—नित्यं पूर्वागमो भवति । यथा—'मूर्खा तज्जघन्याम्'[4] । 'अथ स धनार्घो भवति'[6] । 'उत्तरार्ध्ये वर्षिष्ठम्'[7] । 'अर्थेतस्स्थ'[3] । केचिदस्मिन्विषये द्वितीयचतुर्थयोर्द्वित्वं मन्यन्ते । तन्मतनिराकरणार्थं नित्यग्रहणम् । अत एव पृथक्सूत्रारम्भश्च वेदितव्यः ॥ ६ ॥

—∞—

## लकारपूर्वे च ॥ ७ ॥

चतुर्थागमयोराकर्षकः चकारः । चतुर्थे स्पर्शे लकारपूर्वे सति पूर्वागमो भवति । यथा—"प्रगल्भोऽस्य"[8] । "अपगल्भो जायते"[8] । "नमो मध्यमाय चापगल्भाय च"[9] । लकारः पूर्वः यस्मात् स लकारपूर्वः ॥ ७ ॥

१. चशब्दः पूर्ववत् । एकवचनं तु द्वितीयस्यासम्भवात् । पृथक्सूत्रकरणं च तदसम्भवख्यापनार्थम् । तदयमर्थः—लका-

[1] सं. १-२-१४. [2] स. ६-६-२. [3] स. १-८-११.
[4] स. ७-१-६. [5] सं. ६-२-१०. [6] स. २-२-६.
[7] सं. ६-६-४. [8] ,, २-६-५. [9] ,, ४-५-६.

रात्परे चतुर्थे च द्वित्वं न भवति, किन्तु नित्यं पूर्वागमो भवति । यथा—'प्रगल्भोऽस्य जायते'[1] । 'नमो मध्यमाय चापगल्भाय च'[2] । अत्रापि परमतनिरासार्था नित्यग्रहणानुवृत्तिः ॥ ७ ॥

## उपसर्गपाथएपोऽत्यातिधामपरमभूतेपूर्वेषु छखिभुजेषु च ॥ ८ ॥

उपसर्गपूर्वेषु, पाथएपः, अति, आति, धाम, परम, भूते एवम्पूर्वेषु च सत्सु, छ, खि, भुज इत्येतेषु पूर्वागमो भवति । चकार आगमान्वादेशकः । यथा—"आच्छृणत्ति"[3] । 'नम आखिदते च प्रखिदते च'[4] । 'अयक्ष्मया परिभुज'[5] । जेति किं? "विभु च मे प्रभु च मे"[6] । "या च विच्छन्दाः" ।[7] खीति किं । "निखातं मनुष्याणाम्"[8] । "अधि खादति"[9] । उपसर्गपूर्वं इति किं? "सछन्दाः"[7] । एतान्युपसर्गपूर्वाणि । अन्यान्यप्युच्यन्ते—"अपूप्येति पाथः । एपच्छागः"[10] । पाथ इति किं? "ऋतुभिर्वा एष छन्दोभिः"[11] । "अतिच्छन्दसमुप"[12] । "सवित्र आतिच्छन्दसाय"[13] । "धामच्छदिव"[14] । "परमच्छदो वरे"[15] । "यद्भूतेच्छदाः सामानि"[16] ॥ ८ ॥

---

[1] सं. २-५-५. [2] स. ४-५-६. [3] सं. ५-१-७.
[4] सं. ४-५-९. [5] ,, ४-५-१. [6] सं. ४-७-४.
[7] सं. ५-२-११. [8] सं. ६-३-४. [9] सं. ६-२-११.
[10] सं. ४-६-८. [11] सं. ७-५-१५. [12] सं. ५-३-८.
[13] सं. ७-५-१४. [14] स. २-४-१०. [15] ,, ४-६-२.
[17] स. ७-५-९.

उपसर्गेषु पाथएष इत्यादिषु च पूर्वेषु छकारे खिशब्दे भुजशब्दे च पूर्वागमो भवति। खिभुजयोरपि सामर्थ्यादादिवर्णस्य पूर्वागम इति सिद्धं भवति । उपसर्गः—'आच्छेत्ता'[1]। 'विच्छिन्नं यज्ञम्'[2] । पाथ एषः—'प्रियमप्येति पाथ. । एषच्छागः'[3]। पाथ इति किम्? 'ऋतुभिर्वा एष छन्दोभिः'[4]। अते—'अतिच्छन्दसोत्तमया'[5]। आति—'सवित्र आतिच्छन्दसाय'[6] । धाम—'अग्नये धामच्छदे'[7]। परम—'परमच्छदो वरे'[8]। भूते—'यद्भूतेच्छदाः सामानि'[9]। एतेषु छकारस्य । खिभुजयोरुपसर्गपूर्वयोरेव। खि—'नम आखिद्यते च प्रखिद्यते च'[10]। भुज—'अयस्मया परिभुज'[11]। जेति किम्? 'विभु च मे'[12]। एतत्पूर्वेष्विति किम्? 'विभ्रजनस्य छाया'[13]। 'छन्दोभिरिति छन्दः—भिः'[4] । 'छन्दस्वती इति छन्दस्वती'[14] । 'छिनत्ती३ इति छिनत्ति'[15]। 'समुद्रं छन्द'[16]। 'सखा सखिभ्यो वरिवः'[17]। छखिभुजेष्विति किम्? 'ऋजुमाघारयति'[18]। 'माऽति धाक्'[19]। 'पितृणां निखातम्'[20]। 'विभु च मे प्रभु च मे'[12]। नान्यदं सूत्रं पदसंहिताधिकारे वक्तुं युक्तम् । कुतः? पदसंहिता[21]विषयत्वात्। सत्यम् । लाघवार्थं त्विहोच्यते । तत्र चेत्कश्चिच्चकारः कचि-

[1] सं १-१-२. [2] सं १-५-१०. [3] सं ४-६-८.
[4] सं ५-५-१६. [5] सं. ५-२-२. [6] सं ५-५-१४.
[7] सं. २-३-१०. [8] सं. ४-६-२. [9] सं. ७-५-९.
[10] सं. ४-५-९. [11] सं. ४-५-१. [12] सं. ४-७-४.
[13] सं १-३-१. [14] सं ४-३-११. [15] सं १-७ २.
[16] सं. ८-३-१२. [17] सं ३-३-११. [18] सं. २-५-११.
[19] सं. १-२-८. [20] सं. ६-३-४. [21] पदसन्धि.

त्ककारः क्वचिद्वकारः इत्यागमद्वयं विधेयमिति शब्दगौ[1]रवं भवति । इह पूर्वागमाधिकाराल्लाघवं सिद्ध्यति ॥ ८॥

## अघोषादूष्मणः परः प्रथमोऽभिनिधानस्स्पर्शपरात्तस्य सस्थानः ॥ ९ ॥

स्पर्शपरादघोषादूष्मणः परः प्रथम आगमस्तस्य स्पर्शस्य सस्थानः समानस्थानोऽभिनिधानो भवति । अभिनिधीयत इति अभिनिधानः, आरोपणीय इत्यर्थः । वेदान्तरे तस्याभावादत्रारोपणीयत्वम् । यथा—"यः कामयेत"[2] । "अश्शुमन्न्ज़र्जम्"[3] । "ग्रीष्मे मध्यन्दिने"[4] । "अयस्मयं विचृत"[1] । "यः पाप्मना"[5] । अघोषदिति किं । "शरद्यपराह्ने"[3] । ऊष्मण इति किं । "रुक्ममुप दधाति"[6] । स्पर्शपरादिति किं ! "इष्ट्वा चैव तद्धत्रेण च"[7] । सूत्रमिदमेवेष्टम् । न तु परद्वयम् ॥ ९ ॥

स्पर्शपरादघोषादूष्मणः परः तस्य स्पर्शस्य समानस्थानः प्रथमः आगमो भवति । स खल्वभिनिधान इत्युच्यते । अभिनिधीयते प्रक्षिप्यत इत्यभिनिधानः । प्रक्षिप्यमाणतुल्यः कार्यान्तरविधावविद्यमानवद्भवतीति यावत् । यथा—'उरुक्षयाय नः कृधि'[8] । 'पवद्छन्दो वरिवः'[9] । 'मारुतं पृश्निमालभेत'[10] ।

---

[1] शब्दार्थगौ. [2] सं. २-१-२. [3] सं. ४-६-१.
[4] सं. ४-२-५. [5] सं. २-३-१३. [6] सं. ५-२-७.
[7] सं. ६-७-३. [8] सं. १-३-४. [9] सं. ४-३-१२.
[10] सं. २-१-६.

'एषा प्रतिष्ठा'[1] । 'कृष्णोऽसि'[2] । 'ग्रीष्मो हेमन्तः'[3] । 'अति द्रिवस्पाहि'[4] । 'अफ्सु स्नाति'[5] । 'शुनं नः फालाः'[6] । अघोषादिति किम्? 'यद्गृह्णाति'[7] । ऊष्मण इति किम्? 'मित्रः क्षीरश्रीः'[8] । अभिनिधानत्वाश्रयणात् 'प्रथमपरश्च प्लाक्षिप्लाक्षायणयोः' (१४-१७) इत्यत्राविद्य[9]मानवद्भावात् द्वितीयोत्तमपरस्य ऊष्मणो द्वित्वं न प्रतिषिध्यते—'एषच्छन्दः'[10] । 'पृश्निम्'[11] । 'एषा प्रतिष्ठा'[1] । 'कृष्णोऽसि'[2] । 'गयस्फानः'[12] । 'न ह स्मं'[13] । स्पर्शपरात् इति किम्? 'श्यामाको भवति'[14] । 'ऐन्द्रस्सोमः'[15] ॥ ९ ॥

---

## अघोषे प्लाक्षेः ॥ १० ॥

अघोष एव स्पर्शपरे सति अघोषादूष्मणः परः प्रथमागमो भवतीति प्लाक्षेः पक्षः । यथा—"निष्कृकेवल्यम्"[16] । "यः कृकामयेत"[17] । "पश्चात् प्राचीम्"[18] । "निष्क्रपामि"[19] । "दोषावस्तः"[20] । "यः पाप्मना"[21] । "आस्पात्रम्"[22] । अघोषेति किं । "कूश्मान्"[23] ॥ १० ॥

---

[1] सं. १-६-११. [2] सं. १-१-११. [3] सं. ५-७-२.
[4] ,, १-८-१४. [5] ,, ६-१-१. [6] ,, ४-२-५.
[7] ,, १-२-६. [8] ,, ४-४-९. [9] इत्यत्राभिनिधानस्याविद्य.
[10] ,, ४-३-१२. [11] ,, २-१-६. [12] सं. १-२-१०.
[13] ,, ५-१-१०. [14] ,, २-३-२. [15] ,, १-१-८.
[16] ,, ४-४-२. [17] ,, २-१-२. [18] ,, ५-२-७.
[19] ,, १-१-१०. [20] ,, १-२-१४. [21] ,, २-१-११.
[22] सं. ५-५-५. [23] ,, ५-७-२३.

प्लाक्षेर्मते अघोषे स्पर्शे परतः अघोषादूष्मणः परः प्रथमोऽभिनिधानो भवति । न तु घोषवति स्पर्शे परतः । तस्मिन् पक्षे प्रथमद्वितीययोः परतः प्रथमागमो नोत्तमे ॥ १० ॥

---

## उत्तमपरात्तु प्लाक्षायणस्य ॥ ११ ॥

प्लाक्षायणस्य तु पक्षे उत्तमपरादघोषादूष्मणः परः प्रथमागमो भवति । यथा—"अक्ष्णया व्याघारयति"[1] । "अश्नाति"[2] । "तीर्थे स्नाति"[3] । उत्तमपरादिति किं ? "निष्केवल्यम्"[4] । "यः कामयेत"[5] । "पश्चात्"[6] । तुशब्दः प्लाक्षेः पक्षमपक्षिपति । केचिदेवमूचुः—अघोषत्वमूष्मणः तुशब्दो निवर्तयतीति । तत्रायं सूत्रार्थः—उत्तमपरात् घोषवतः ऊष्मणः परः प्रथमागमो भवति । यथा—"अह्नां केतुः"[7] । "शरद्यपराह्णे"[8] । "ब्रह्मवादिनः"[9] । घोषवत इति किं? "ग्रीष्मो हेमन्तः"[9] । "अश्मा च मे"[10] । "अयस्मयं वि"[11] ॥ ११ ॥

प्लाक्षायणस्य मते अनन्तरोक्तं न भवतीति तुशब्दार्थः । किं तर्हि, *उत्तमपरादघोषादूष्मणः परः प्रथमोऽभिनिधानः*[1] भवतीति तद्विपर्ययो भवति । नेदं सूत्रद्वयमिष्टम् ॥ ११ ॥

---

[1] सं. ५-२-७. [2] स. १-६-७. [3] सं. ६-१-२.
[4] स. ४-४-२. [5] स. २-१-२. [6] सं. ६-३-७.
[7] सं. २-४-१४. [8] स. १-७-१. [9] सं. ६-७-२.
[10] सं. ४-७-५. [11] सं. ४-२-५. [12] प्रथमः.

## प्रथम ऊष्मपरो द्वितीयम् ॥ १२ ॥

ऊष्मपरः प्रथमः स्पर्शः स्ववर्गीयं द्वितीयमापद्यते । "विरप्फ्शिन्नुदाय"[1] । "तथ्षोडशी"[2] । "प्रत्यङ्ख्सोमः"[3] । "तथ्सवितुः"[4] । प्रथम इति किं? "तारसॅरोह्ः"[5] । ऊष्मपर इति किं? "वाक्त"[6] । [7]ऊष्मा परो यस्मादसौ ऊष्मपरः ॥ १२ ॥

ऊष्माणि परतः प्रथमो द्वितीयमश्नुते, पदान्तश्चापदान्तश्च । अतएवायं विकारः 'अथ प्रथमः' (८-१) इत्यत्र नोक्तः । यथा– 'ऋक्ख्सामयोश्शिल्पे'[8] । 'तथ्षोडशी'[2] । 'विस्रुपो विरप्फिशन्न्'[1] । 'अप्फ्सो नाम'[9] । अत्र प्रथमानां पूर्वसूत्रविहिते द्वित्वे जाते द्वितीयरूपस्य द्वितीयादेशः । 'सहङ्ख्समानैः'[10] । 'पद्ध्सम्पद्यन्ते'[11] । 'पितरं च प्रयन्थ्सुवः'[12] । 'क्षत्रस्योल्बमसि'[13] । इत्यादौ तु द्वित्वाभावात् द्वितीय एव श्रूयते । ऊष्मपर इति किम्? 'वाक्त आप्यायताम्'[6] । 'तमृगुदयच्छत्'[14] । प्रथम इति किम्? 'तारसॅरोहाऽसि'[5] ॥ १२ ॥

—०—

[1] सं. १-१-९. [2] सं. ६-६-११. [3] सं. १-८-२१.
[4] सं. १-५-६. [5] सं. ५-३-६. [6] सं. १-३-९
[7] 'अर्वाङ् । हि । एनम् । परः' (सं. ६-३-३) इत्यत्र 'प्रथमद्वितीयौ हकारश्चतुर्थं तस्य सस्थानम्' (२-३८) इति हकारस्य चतुर्थापत्ति विशेषविहितत्वात् । ततः 'तृतीय स्वरघोषवत्परः' (८-३) इति तृतीयत्वम् । इदमेव सूत्रमिष्टम्. (इत्यधिकः पाठः).
[8] सं. १-२-२. [9] सं. ४-३-१२. [10] ब्रा. ३-२-८.
[11] सं ६-६-३. [12] सं. ४-२-६ [13] सं. १-७-९.
[14] सं ६-१-२.

## वाडभी[1]कारस्यासस्थानपरः ॥ १३ ॥

वाडभीकारस्य मते आत्मनोऽसस्थानोष्मपरः प्रथमः सवर्गीयं द्वितीयमापद्यते । समानं स्थानं यस्यासौ संस्थानः, न सस्थानः असस्थान. । सः परो यस्मात्सः, तथोक्तः । यथा—"विमृशो विरप्फ्शिन्"[2] । "तथ्षोडशी"[3] । असस्थान इति किं? "तत्सवितुः"[4] । नेदं सूत्रमिष्टम् ॥ १३ ॥

वाडवीकारस्य मते असमानस्थाने ऊष्मणि परतः प्रथमो द्वितीयमश्नुते । न तु सस्थाने परतः । तथाच—'तत्सवितुर्वरेण्यम्'[4] । इत्यादौ द्वितीयादेशो न भवति । नैतदिष्टम् । स्वमतेऽपि 'तच्छंयोः'[5] । 'अनुष्टुप्छारदी'[6] । इत्यादौ पदान्तस्य द्वितीयादेशो न भवति, पूर्वसूत्रविहितस्य छत्वस्य पूर्वभावितया पदादेः शकारस्यासम्भवात् ॥ १३ ॥

तदेवमत्र द्वित्वस्यापवादतया पूर्वागमः, तत्सदृशः प्रथमागमः तत्प्रतियोगिपरवर्णादेशश्चोक्तः इदानीं प्राथमकल्पिकस्य द्वित्वस्य प्रतिषेध आरभ्यते—

---

## अथ न ॥ १४ ॥

'अथ' इत्ययमधिकारः । उक्तस्य द्वित्वविधेर्यथासम्भवं निषेधोऽधिक्रियते, इति वेदितव्यम्, इत उत्तरं यद्वक्ष्यामः ॥ १४

---

[1] वाडवी. [2] सं. १-२-९. [3] सं. ६-६-११. [4] सं. १-५-६. [5] सं. २-६-१०. [6] सं. ४-३-२.

द्वित्वं न भवतीत्येतदधिकृतं वेदितव्यम् ॥ १४ ॥

---

## अवसाने रविसर्जनीयजिह्वामूलीयोपध्मानीयाः ॥ १५ ॥

पदावसाने वर्तमानो वर्णो रेफो विसर्जनीयो जिह्वामूलीय उपध्मानीयश्च इत्येते वर्णा द्वित्वं नापद्यन्ते । यथा—"ऊर्क्"[1] । "रेफात् परं च" (१४–४) इति प्राप्तिः । अवसानवचनं विरामाभिप्रायम् । तस्मान्न सन्धाने निषेधः । यथा—"ऊर्क्क् च मे सूनृता"[1] । "नातिमार्च्छति"[2] । "मनः क्षेमे"[3] । "यः कामयेत"[4] । "यःपाप्मना"[5] । "स्वरपूर्वम्" (१४–१) इत्यनेनैषां प्राप्तिः । अवसान इति चतुर्वर्णं पृथगेव सूत्रं केचिन्नु: । एकीकरणे दोषदर्शनात् । कोऽसौ दोषः? अवसाने वर्तमाना रविसर्जनीयादय इत्यन्वयसम्पादनं, "अवग्रह आशीर्धूस्तुवः (९–१०) इतिवदिति चेत् । नैष दोषः । रविसर्जनीयादीनां पदावसाने द्वित्वप्राप्तिर्दूरोत्सारिता, इति नेयमत्र शङ्का। किञ्च—पृथक् करणे सति अवसाने किं वा भवतीति साकाङ्क्षतया वचनमनर्थकं स्यात् । एकीकरणे तु रविसर्जनीय इति वर्णसाहचर्यादवसाने वर्तमानो वर्ण इति च लभ्यते । तस्मादेकीकरणमेव रमणीयम् ॥ १५ ॥

---

[1] सं. ४-७-४. [2] सं. २-२-४. [3] सं. ५-२-१. [4] सं. २-१-२. [5] सं. २-३-१३.

अवसाने वर्तमाना रेफादयः इत्यन्वयो नोपपद्यते, विसर्जनीयव्यतिरिक्तानां तत्रासम्भवात्, विसर्जनीयस्य च तत्र द्वित्वप्राप्त्यभावात् । तस्मादवसाने विद्यमानस्य व्यञ्जनस्य द्वित्वं न भवति, रेफादीनां चतुर्णां सर्वत्र द्वित्वं न भवतीति योजना । अवसाने—'ऊर्क् च मे'[1] । 'सा या पपर्क्'[2] । 'भूत्वा व्यमार्ट्'[3] 'रेफात्परं च' (१४–४) इति प्राप्तिः । र—'आर्तिमार्छति'[4] । 'अर्चन्त्यर्कमर्किणः'[5] । विसर्जनीयः—'उभयतः क्ष्णूर्भवति'[6] । 'तास्त्वष्टाः क्षधम'[7] । जिह्वामूलीयः—'यादुमात्राः खायन्ते'[8] । 'यः कामयेत'[9] । उपध्मानीयः—'यः पाप्मना'[10] । 'शुनं नः फालाः'[11] । अत्र 'स्वरपूर्वं व्यञ्जनम्' (१४–१) इति प्राप्तिः । शिक्षाव्याकरणयोस्तु हकारस्यापि सर्वत्र द्वित्वं नेष्टम् । शिक्षायां तावत्—

'न रेफे वा हकारे वा द्विर्भावो जायते क्वचित्' इति। व्याकरणे च—'अचो रहाभ्यां द्वे' । 'अनचि च'[12] इति । नैतदिष्टं सूत्रकृतः, 'स्वरपूर्वं व्यञ्जनम्'(१४–१) इत्यविशेषेण विधानात्। रविसर्जनीयादिभिस्सह हकारस्यापाठाच्च । तथा 'रेफपरश्च हकारः' (१४–१९) इति परमते विशेषेण निषेधोऽप्यन्यत्र द्वित्वं प्राप्तमेव दर्शयति । अतोऽस्मच्छाखायां हकारस्य प्राप्तौ सत्यामप्रतिषिद्धं द्वित्वमिष्यते । शिक्षाव्याकरणे तु शाखान्तरेषु सावकाशे इत्यविरोधः । ननु अत्र जिह्वामूलीयादिग्रहणमनर्थकम् । कुतः ? 'प्रथमपरश्च प्लाक्षिप्लाक्षायणयोः'(१४–१०)

[1] स. ४-५-४. [2] सं ६-१-२. [3] स. ७-१-५.
[4] स. ३-२-४. [5] „ १-६-१२. [6] „ ५-१-१.
[7] „ ७-२-४. [8] „ ६-२-११. [9] „ २-१-२.
[10] „ ३-१-३. [11] „ ४-२-५. [12] पा. ८-४-४६,४७.

इत्यनेन सर्वत्र प्रतिषेधसिद्धेः । सर्वत्र जिह्वामूलीयोपध्मानीययोरभिनिधानपरत्वात् । अथ प्लाक्षायणमते अघोषस्पर्शपरस्याभिनिधानपरत्वाभावात् अर्थवत्ता । तन्न । प्रतिषेधसूत्रे प्लाक्षिप्लाक्षायणग्रहणस्य पूजार्थतया तस्य स्वमतविषयत्वात् । अत्रोच्यते—उक्तोऽस्माभिरविद्यमानवद्भावोऽभिनिधानस्य । तेन द्वितीयपरत्वे तयोः प्रतिषेधो न स्यात् अतस्तत्रापि तयोर्द्वित्वाभावार्थमिह ग्रहणम् ॥ १५ ॥

---

## ऊष्मा स्वरपरः ॥ १६ ॥

स्वरपर ऊष्मा द्वित्वं नापद्यते । स्वरः परो यस्मादसौ स्वरपरः । यथा—'दर्शपूर्णमासौ'[1] । 'वर्षाभ्यः'[2] । 'वर्सं नह्यति'[3] । 'बर्हिषा'[4] । 'रेफात् परं च' (१४—४) इति प्राप्तिः। ऊष्मेति किं? 'एभिर्नो अर्कैः'[5] । स्वरपर इति किं? 'पार्श्वे'[6] । 'वर्षाभ्यः'[7] । 'मृदं वर्स्वेभिः'[8] । 'अग्निहुर्वस्य'[9]॥

ऊष्मा स्वरे परतो द्वित्वं नाश्नुते । शषसहाविषया एते निषेधाः । श—'दर्शपूर्णमासौ'[1] । ष—'वर्षवृद्धम्'[10] । स—'वर्सं नह्यति'[3] । ह—'बर्हिरासदे'[11] । 'वायुर्हिङ्कर्ता'[12] । स्वरपर

[1] सं. २-२-६. [2] सं. ७-२-१०. [3] स. २-६-७.
[4] स. १-७-८. [5] सं. ४-८-४. [6] स. ७-३-१०.
[7] सं. ७-४-१२. [8] स. ५-७-११. [9] सं. ५-१-५.
[10] स. १-१-५. [11] ,, १-१-२. [12] सं. १-१-२.

इति किम्? 'दाढ्यं यज्ञम्'[1]। 'अग्निर्होतस्य'[2]। 'वर्ष्याय च'[3]। 'मृदे वस्वेभिः'[4] ॥ १६ ॥

---

## प्रथमपरश्च प्लाक्षिप्लाक्षायणयोः ॥ १७ ॥

प्लाक्षिप्लाक्षायणयोः पक्षे प्रथमपर ऊष्मा द्वित्वं नापद्यते। चकार ऊष्माणमन्वादिशति। यथा—'सुश्चन्द्र दस्म'[5]। "अष्टौ कृत्वः"[6]। प्रथमपर इति किम्? "तस्मादेवं विदुषा"[7]। प्रथमः परो यस्मादसौ प्रथमपरः। चकारोऽत्र यद्यप्यूष्ममात्राकर्षकः, तथाऽपि शषसहेष्वेव सम्प्रत्ययः। अन्यथा "अवसाने रविसर्जनीय", (१४—१९) इति सूत्रे जिह्वामूलीयोपध्मानीययोः ग्रहणं व्यर्थम्। अनेनैव निषेधसिद्धेः ॥ १७ ॥

चशब्द ऊष्माणमन्वादिशति। स खलु प्रथमे परतो द्वित्वं नाश्नुते, प्लाक्षिप्लाक्षायणयोर्मतात्। यथा—'एना विश्पतिना'[8]। 'भुवो नृश्चक्षाः'[9]। 'इष्टा देवताः'[10]। 'आयुष्पा अग्ने'[11]। 'दिवस्कम्भनिः'[12]। 'मा वस्स्तेनः'[13]। 'बृहस्पतिस्सुतस्य'[14]। प्रथमपर इति किम्? 'एवश्छन्दः'[15]। 'कृष्णोऽसि'[16]। 'वायवस्स्थ'[3]।

---

[1] सं. ३-२-२. [2] स. ५-१-६. [3] स. ४-५-७.
[4] ,, ५-७ ११. [5] ,, ४-४-४. [6] ,, ६-४-५.
[7] ,, ६-४-९. [8] ,, २-३-१. [9] ,, ३-४-११.
[10] ,, २-६-९. [11] ,, १-१-१३. [12] ,, १-१-६.
[13] ,, १-१-१. [14] ,, १-४-२७. [15] ,, ४-३-१२.
[16] ,, १-१-११.

'ब्रह्म देवाः'[1]। अत्राभिनिधानस्याविद्यमानत्वद्भावात् 'एवश्छन्दः'[2]। इत्यादीनि प्रत्युदाहरणानि । एवमभिनिधानव्यवहितपरनिमित्तत्वात् पृथक्सूत्रकरणम् । प्लाक्षिप्लाक्षायणग्रहणं पूजार्थम् ॥ १७

---

## ऊष्माऽघोषो हारीतस्य ॥ १८ ॥

हारीतस्य मते अघोष ऊष्मा द्वित्वं नापद्यते । "वैश्यो मनुष्याणाम्"[3] । "पुष्यति प्रजया पशुभिः"[4] । "नास्यापरूपम्"[5] । अघोष इति किं? "मह्यमिमान्"[6] । ऊष्मग्रहणं पूर्वसूत्रानपेक्षार्थम् । अत्र यद्यूष्मग्रहणं न क्रियेत, ऊष्मेत्येतत् स्वरपरत्वेन प्रथमपरत्वेन च सम्बद्धम् । तस्मादिहापि तत्सम्बन्धस्यैवाघोषत्वविशेषणं स्यात् । अतस्तन्निवृत्त्यर्थमूष्मेति ग्रहणं कृतम् । अतः सर्वत्रस्थ ऊष्माऽत्र निषेधभाक् ॥ १८ ॥

हारीतस्य मते अघोष ऊष्मा द्वित्वं नाश्नुते । 'एवश्छन्दः'[2] । 'एते वै देवाश्वाः'[3] । 'हविष्मतीरिमाः'[8] । 'स्योनस्स्योनम्'[9][10] अघोष इति किम्? 'सं नह्य सुकृताय कम्'[11] ॥ १८ ॥

---

[1] सं. १-६-४. [2] सं. ४-३-१२. [3] सं. ७-१-१.
[4] सं. २-१-९. [5] " ३-५-७. [6] " ३-१-५.
[7] सर्वं इत्यधिकः पाठः. [8] " १-७-४. [9] सं. १-३-१२.
[10] सं. १-२-७. [11] " १-१-१०.

## रेफपरश्च हकारः ॥ १९ ॥

पूर्वमूष्माऽघोष इत्युक्ते घोषोष्मणो नित्यं द्वित्वे प्राप्ते विशिनष्टीदानीं रेफपरो हकारश्चकाराकृष्टहारीतमते द्वित्वं नापद्यते । यथा—"दुदुहे अह्रयः"[1] । रेफपर इति किं? "जुह्वेह्यग्निः"[2] । हकार इति किं? "शुक्रं ते अन्यत्"[3] । रेफः परो यस्मादसौ रेफपरः ॥ १९ ॥

चशब्देन हारीतस्येत्यन्वादिश्यते । तस्य मते रेफपरो हकारो द्वित्वं नाश्नुते । 'अह्रुतमसि हविर्धानम्'[4] । रेफपर इति किम्? 'जुह्वेह्यग्निस्त्वा'[2] ॥ १९ ॥

—o—

## टवर्गश्च तवर्गपरः ॥ २० ॥

चकारो हारीतान्वादेशकः[5] । टवर्गस्तवर्गपरो न द्वित्वमापद्यते । यथा—"वषट्ते विष्णो"[6] । "विड् द्रविणम्"[7] । तवर्गः परो यस्मादसौ तवर्गपरः । टवर्ग इति किं? "वाक्ते"[8] । "तत्ते"[8] । एवम्पर इति किं? "षट्कपालम्"[9] । "विड्ढ्वे मरुतः"[10] ॥

चशब्दः पूर्ववत् । टवर्गः तवर्गे परतो द्वित्वं नाश्नुते हारीतस्य मतात् । 'वषट्ते विष्णो'[6] । 'षड्धसम्पद्यन्ते'[11] । 'विड्-

---

[1] सं. १-५-६. [2] सं. १-१-१२. [3] सं. ४-१-११.
[4] सं. १-१-४. [5] हारीतमतान्वादेशकः. [6] ,, २-२-१२.
[7] ,, १-८-१३. [8] ,, १-३-९. [9] ,, १-८-१.
[10] ,, ६-६-५. [11] ,, ६-२-३.

वातैः "[1] । सवर्णपराण्येवमादीनि । सवर्गीयपराण्यपि वदामः— "अङ्क्तौ न्यङ्क्तौ "[2] । "प्राञ्चमुप "[3] । "काण्डात्काण्डात् "[4] । "तं ते दुश्चक्षाः "[5] । "अम्भस्स्थ "[6] ॥

अनुनासिकपूर्वस्तु ककारो मध्य आगमः ।
गकारश्च तकारे च धकारे च यथाक्रमम् ॥

इति वचनादिदमप्युदाहरणं—"पाङ्क्तो यज्ञः पाङ्क्ताः "[7] । "तान्मूयाद्युङ्ग्ध्वमिति "[8] । एवम्परं इति किं? ".वाङ्म आसन् "[9] । "षण्मासः "[10] । "विदथानि मन्महे "[11] । "दाम्नाऽपौम्भन् "[12] ॥ २३ ॥

सवर्णश्च सवर्गीयश्च सवर्णसवर्गीयौ । तौ परौ यस्मात्स तथोक्तः । समानजातीयं वर्णव्यक्त्यन्तरं सवर्णम् । यथा— ककारस्य ककारः, सकारस्य सकार इति । समाने वर्गे भवः सवर्गीयः । सवर्णे सवर्गीये च परतः वर्णो द्वित्वं नाश्नुते । सवर्णः—'यक्कामः'[13] । 'अनामयच्च मे'[14] । 'तत्ते अक्मः'[15] । 'अनुपुण्याणानाम्'[16] । 'मय्येव सता'[17] । 'इमम्मे वरुण'[18] । 'देवासुरास्संयत्ताः'[19] । सवर्गीयः—'[20]प्रच्छच्छन्दः'[21] । 'कण्डूयेत'[22] । 'आ-

[1] सं. १-१-१४. [2] सं. १-७-७. [3] सं. ५-२-७.
[4] ,, ४-३-९. [5] ,, ३-२-१०. [6] ,, ३-५-६.
[7] ,, १-६-२. [8] ,, ३-४-८. [9] ,, ५-५-९.
[10] ,, ६-५-२. [11] ,, ४-७-१५. [12] ,, २-८-११.
[13] ,, २-२-१. [14] ,, ४-७-१. [15] ,, २-२-१२.
[16] ,, ६-१-८. [17] ,, ३-५-२. [18] ,, २-१-११.
[19] ,, १-५-१. [20] 'प्रच्यावस्व' (सं. १-२-९.) 'अल्पन्यानगाम्' (सं. १-१-३.) । सवर्गीयः मुद्रणे भाति. इत्यधिकः पाठः.
[21] ,, ४-१-११. [22] ,, ६-१-१.

ण्डमजायत'[1] । 'यङ्कामयेत'[2] । 'शञ्चमे'[3] । 'तन्ते दुश्चक्षाः'[4] । 'मन्थी मन्थिशोचिषा'[5] । 'अम्बे अम्बालि'[6] । 'युञ्जानेषु'[7] । 'परिवृङ्धि हरसा'[8] । अत्रासन्देहार्थं शिक्षावचनम् । यथा—

अनुनासिकपूर्वस्तु ककारो मध्य आगमः ।
गकारश्च तकारे च धकारे च यथाक्रमम् ॥ इति ॥

अत्र मध्ये पदमध्ये इत्यर्थः ॥ २३ ॥

—o—

## नानुत्तम उत्तमपरः ॥ २४ ॥

नकारोऽयं प्रतिप्रसवार्थः । उत्तमपरोऽनुत्तमो द्वित्वं नापद्यत इति न । यथा—"याच्ञा"[9] । "यजून्येयज्ञे नः"[10] । "आट्ट्णारः"[11] । "समतन्नवत्"[12] । "पाप्मानम्"[13] । अनुत्तम इति किं ? "तम्मा देवाः"[14] । उत्तमः परो यस्मादसावुत्तमपरः । "सवर्णसवर्गीयपरः" (१४-२३) इति प्राप्तावयमारम्भः ॥

अनन्तरोक्तस्य प्रतिषेधस्यायं प्रतिषेधः । उत्तमव्यतिरिक्तो वर्ण उत्तमे परतो द्वित्वप्रतिषेधं नाश्नुते; किन्तु द्वित्वमेवाश्नुते । 'याच्ञैवास्य'[illegible] । 'इन्द्राय राज्ञे'[15] । 'प्रत्नं सधस्थम्'[16] ।

---

[1] सं. ६-५-६.
[2] सं. १-७-१.
[3] सं. ४-७-३.
[4] स. ३-२-१०.
[5] ,, ६-४-१०.
[6] ,, ७-४-१९.
[7] ,, १-६-८.
[8] ,, ४-३-१०.
[9] ,, २-५-७.
[10] ,, ३-१-११.
[11] ,, ६-६-५.
[12] ,, २-२-१२.
[13] स. १-४-४१.
[14] ,, १-३-२.
[15] सं. ५-६-१९.
[16] ,, ४-१-४.

विणम्'[1] । तवर्ग पर इति किम्? 'तुर्यवाड्ड मे'[2] । 'स्थिरो भव वीड्वङ्गः'[3] ॥ २० ॥

---

## लतवर्गौ यवकारपरौ ॥ २१ ॥

हारीतः सान्निध्याल्लभ्यते । तन्मते लतवर्गौ न खलु यवकारपरौ द्वित्वमाप्नुतः । यथा लकारः—"कल्याणी"[4] । "बैल्वो यूपः"[5] । तवर्गोपि—"कन्येव तुन्ना"[6] । "इषे त्वा"[7] । यवकारौ परौ याभ्यां तौ, तथोक्तौ ॥ २१ ॥

लतवर्गौ[8] यथाक्रमं यवकारयोः परतो द्वित्वं नाप्नुवाते हारीतस्य मते । ल—'सिनीवाल्यै चरुम्'[9] । तवर्गः—'इषे त्वा'[7] । 'त्वार्द्रौ त्वा'[10] । 'मध्वा यज्ञम्'[11] । 'अन्वह मासाः'[12] । यवकारपर इति किम? 'खल्वाश्च मे'[13] । 'अत्यन्यानगाम्'[14] ॥

---

## परश्च ॥ २२ ॥

चकारो हारीताकर्षकः । पर इत्येकवचनेन वकारो गृह्यते । पूर्वसूत्रस्थनिमित्तयोः यः परः, सोपि न द्वित्वमापद्यते, हारी-

[1] स. १-८-१३. [2] स. ४-७-१०. [3] सं. ४-१-४.
[4] ,, ७-१-६. [5] ,, २-१-८. [6] ,, ३-१-११.
[7] ,, १-१-१. [8] लकारतवर्गौ. [9] ,, १-८-८.
[10] ,, १-८-२१. [11] सं. ४-१-८. [12] ,, १-७-१३.
[13] ,, ४-७-४. [14] ,, १-३-५.

तमते । यथा—"विभूदाव्ने"[1] । "ग्राव्णः"[2] । वकार इति किं? "कल्ल्पाश्रुहोति"[3] । "स्पर्श एवैकेषाम्" (१४-३) इत्यत्रावधारणनिराकरणायायमारम्भः । अथवा द्वित्वे कृते परो द्वितीयपर्यायो द्वित्वविधिर्नास्ति । अनवस्थाप्रसङ्गात् । ननु "सवर्णसवर्गीयपरः" (१४-२३) इति परसूत्रेणापि पुनर्द्वित्वनिषेधः। पौनरुक्त्यमावहति । मतभेदान्नैष दोष इति ब्रूमः । हारीतमतमेतत्, "उष्माऽघोषो हारीतस्य" (१४-१८) इत्यादिसूत्रपञ्चकमनिष्टम् ॥ २२ ॥

चशब्देन वकारोऽन्वादिश्यते । तस्मात्परो वर्णो द्वित्वं नाश्नुते हारीतस्य मते । 'ओविष्ठदाव्ने'[4] । 'ऊष्माऽघोषः' (१४-१८) इत्यादिसूत्रपञ्चकमनिष्टम् ॥ २२ ॥

---

इदानीं स्वमतमाह—

## सवर्णसवर्गीयपरः ॥ २३ ॥

सवर्णपरः सवर्गीयपरश्च द्वित्वं नापद्यते । सवर्णत्वं नाम सारूप्यमुच्यते, न तुल्यस्थानकरणतामात्रम् । सवर्गीयः समानवर्गसम्बन्धी । यथा—"अत्तकाय"[5] । "अत्ता हवींषि"[6] । "पिपप्का ते"[7] । "संयत्ताः"[8] । "यच्छोहितम्"[9] । "त्वं

---

[1] स. ३-६-८.  [2] सं. ६-३-२.  [3] सं. ५-४-८.
[4] ,, १-६-१२.  [5] ,, ७-५-१२.  [6] सं. २-६-१२.
[7] ,, ३-३-१९.  [8] स. १-५-१.  [9] स. २-१-७.

'ग्रन्थिं ग्रथ्नातु'[1] । 'उन्नो दत्त'[2] । 'दध्नाऽऽतनक्ति'[3] । 'एतं वै परं आदारः'[4] । 'यः पाप्मना'[5] ॥ २४ ॥

---

## अथैकेषामाचार्याणाम् ॥ २५ ॥

अथ इत्ययमधिकारः । एकेषां मतमधिक्रियत इत्येतद्वेदितव्यं इत उत्तरं यद्वक्ष्यामः ॥ २९ ॥

प्रकृते द्वित्वप्रतिषेधे एकेषां मतं अधिक्रियते । तत्रापीष्टांशसद्भावात् ॥ २५ ॥

---

## ल्कारो हशवकारपरः ॥ २६ ॥

एकेषां मते हशवकारपरो ल्कारो द्वित्वं नापद्यते । 'मल्हा आलभन्त'[6] । "शतवल्शां विरोह"[1] । "ततो बिल्वः"[7] । एवम्पर इति किं? "कल्माषी"[8] । "कल्याणी"[9] । हकारश्च शकारश्च वकारश्च हशवकाराः ते परे यस्मात् सः, तथोक्तः। अत्र हशपरे कार्यमिष्टं, न तु वकारपरे । नापि परसूत्रमिष्टम् ॥ २६ ॥

---

[1] सं. १-१-२. [2] सं. २-४-८. [3] सं. २-५-३.
[4] सं. ५-६-५. [5] सं. २-१-३. [6] सं. २-१-२.
[7] सं. २-१-८. [8] सं. ५-१-१. [9] ,, ७-१-६.

हकारे शकारे वकारे च परतः लकारो द्वित्वं नाश्नुते। ह—' आदित्यां मल्हाम्'[1] । श—' शतवल्शं विरोह'[2] । एतेन शिक्षोक्तं लकारार्धरूपत्वं निरस्तं वेदितव्यम्। व—' वैल्वो यूपो भवति'[3] । स्वरितपरे तु वकारे परतो द्वित्वमिष्यते—

लकारस्य वकारेण संयोगे स्वरितो यदि।
तदा संयुक्त एव स्यात् असंयुक्तस्ततोऽन्यथा॥

इति शिक्षावचनात्। एतत्पर इति किम्? ' विशल्यो बाणावाँ उत'[5] ॥ २६॥



## स्पर्शस्स्पर्शपरः ॥ २७ ॥

एकेषां मते स्पर्शपरः स्पर्शो न द्वित्वमापद्यते। यथा—" वाग्देवी "[6] । " अपामोज्मानम् "[7] । " आट्णारः "[8] । " सन्नवत् "[9] । " यमप्रवानः "[10] । स्पर्शः परो यस्मादसौ स्पर्शपरः॥

स्पर्शे परतः स्पर्शो द्वित्वं नाश्नुते। ' तस्यै त्वक्चर्म '[11] । ' न विष्वङ्प्रजया '[12] । ' तज्ज्रयानां जयत्वम् '[13] । ' यज्ञिया यज्ञियानाम् '[14] । ' पिण्डान्प्रयच्छाति '[15] ।

' परस्परेण संयोगस्स्पर्शानां तु भवेद्यदि।
तत्पूर्वस्य श्रुतिर्नास्ति प्राहुस्तेषामिदं मतम्॥

---

1 सं. २-१-२. 2 सं. १-१-२. 3 सं. २-१-८.
4 स्तर. 5 सं. ४-५-१. 6 सं. १-७-१०.
7 सं. ४-६-६. 8 „ ६-६-५. 9 „ २-२-१२.
10 „ १-५-५. 11 „ ६-२-११. 12 „ १-५-९.
13 „ ३-४-४. 14 „ ४-६-१. 15 सं. २-३-८.

आचार्यस्तु सवर्णसवर्गीयपरस्यैव द्वित्वाभावमिच्छति. तेन तस्यैव श्रुत्यभावोऽपि परिगृह्यते नान्यस्य ॥ २७ ॥

---

## पदान्तश्च व्यञ्जनपरः प्राकृतः ॥ २८ ॥

व्यञ्जनपर इति स्पर्शव्यतिरिक्तव्यञ्जनपर इत्यर्थः । अन्यथा स्पर्शानामपि ग्रहणे पूर्वसूत्रेऽपि स्पर्शपर इत्युक्तत्वात् पौनरुक्त्यं स्यात् । ननु निमित्तिविशेषान्निमित्तविशेषोऽप्यस्ति । पदान्तत्वं प्राकृतत्वं च निमित्तिनो विशेषः । निमित्तस्य तु सर्वव्यञ्जनात्मकत्वमिति चेत् । तथाऽपि स्पर्शभागे निमित्तविशेषस्य वैयर्थ्यम् । स्पर्शपर इत्यत्र सामान्येन निमित्तविशेषस्यापि गतत्वात् । तस्मादन्तस्थादय एवात्र व्यञ्जनशब्देनोच्यन्ते । चकारः स्थानिस्पर्शाकर्षकः पारिशेष्यान्नकारस्यानुकर्षणम्[1] । तथाहि—अन्तस्थादिव्यञ्जनपरत्वे सत्यन्यस्पर्शानामविकृतानां पदान्ते स्थितिर्नास्ति । "सम्राट्"[2] इत्यत्रास्तीति चेत्, मैवम् । "न मश्सामिति रापरः" (१३-४) इत्यत्र वैयर्थ्यात्, इतिशब्दो मकारस्य द्वित्वसद्भावं बोधयतीत्यध्ययनानुरोधादुपपादितम् । तस्मान्नैष निषेधविषयः । नापि "ब्रह्मण्वन्तः"[3] । "न्यङ् रश्मिभिः"[4] इत्यादिविषयः । कुतः ? इह प्राकृत इति विशेषणं विकृतसद्भावं कल्पयति । अन्यथा स्वस्य वैयर्थ्यात् । तच्च विकृतत्वं णकारस्य ङकारस्य अन्तस्थादिपरत्वे सति

---

[1] चकारो यद्यपि स्पर्शमात्राकर्षकः तथाऽपि पारिशेष्यान्नकारस्यानुकर्षणम्.
[2] सं. ४-४-१२. [3] सं. ६-४-१०. [4] सं. २-४-१०.

क्वचिदपि पदान्ते न दृश्यते । तस्मात् प्राकृत इति प्रयोगसाफल्याय नकारस्यैवानुकर्षणं युक्तमिति पारिशेष्यम् । किञ्च— माहिषेयेऽपि नकारस्यैवानुकर्षणं सिद्धवत्कृत्योक्तम् । तत्रैवं[1] सूत्रयोजना—एकेषां मते पदान्तः प्राकृतो नकारोऽन्तस्थादिव्यञ्जनपरो द्वित्वं नापद्यते । यथा “ जनान् यातयति ”[2]। “ओमन्वती ते”[3] । “ एतान् होमान् ”[4] । पदान्त इति किं? “ अन्या यन्ति ”[5] । अन्तस्थादिव्यञ्जनपर इति किं? “ तान् कल्पयति ”[6] । “ इमान् भद्रान् ”[7] । प्राकृत इति किं? “ तान् रक्षध्वम् ”[8] । “ वैष्णवान् रक्षोहणः ”[9] । ननु कथमत्र विकृतत्वम्?

रेफाट्टवर्णात् पूर्वश्च तवर्गाच्च परश्च नः ।
तवर्गस्थान इत्याहुरतत्स्थानोऽन्य उच्यते ॥

इति वचनादस्ति स्थानभेदकृतं विकृतत्वमिति ब्रूमः । शिक्षा चैवं वक्ष्यति—

रेफपूर्वो नकारो यः पदान्तो यत्र दृश्यते ।
विशेषं तत्र जानीयात् द्वित्वमित्यभिधीयते ॥ इति ॥

व्यञ्जनमस्मात् परमिति व्यञ्जनपरः । प्रकृतिरिति, स्वभावः तत्सम्बन्धी प्राकृतः ॥ २८ ॥

---

[1] तत्रेयं. [2] सं. ३-२-११. [3] सं. २-६-९.
[4] सं. १-६-४ [5] ,, २-५-१२. [6] सं. ६-३-१.
[7] ,, १-६-२. [8] सं. १-२-७. [9] ,, १-३-२.

चशब्देन स्पर्शोऽन्वादिश्यते । अस्पर्शपरार्थोऽयमारम्भः, स्पर्शपरस्य पूर्वेण प्रतिषेधसिद्धेः । तदयमर्थः—पदान्तो यस्स्पर्शोऽस्पर्शे व्यञ्जने परतः प्राकृतो वर्तते, पदावस्थासिद्धाद्रूपान्न प्रच्यवते, स द्वित्वं नाश्नुते । 'अर्वाङ्यज्ञः'[1] । 'प्रत्यङ्होतारम्'[2] । 'सुपर्ण्यतीमन्वाह'[3] । 'आदित्यान् याचिषामहे'[4] । 'विश्वास्मिन्राष्ट्रे'[5] । 'यस्मिन्वायुः'[6] । 'उपास्मिञ्छ्यो वक्ष्यमाणे'[7] । 'आ शूर शुषे'[8] । अत्र नकारे यवहपरे प्रतिषेध इष्टः, अन्यत्र नेष्टः । तथा च शिक्षा—

नकारान्तं पदं पूर्वमन्तस्थासु परासु च ।
नकारान्तस्थयोर्मध्ये तत्र वर्णमसंयुतम् ॥ १ ॥

रेफपूर्वो नकारो यः पदान्तो यत्र दृश्यते ।
विशेषं तत्र जानीयात् द्वित्वमित्यभिधीयते ॥ २ ॥

नकारान्तं पदं पूर्वं वकारादपरं यदि ।
विशेषं तत्र जानीयाद्द्वित्वमित्यभिधीयते ॥ ३ ॥ इति

यकारे फकारादन्तः प्रतिषेधो नेष्यते । 'अस्मान् वृणक्तु विश्वतः'[9] । 'पाप्मानूरा'[10] । तदप्युच्यते शिक्षायाम्—

संयुक्तो नवकारो रेफस्य परतो यदि ।
संयुक्तं तु [illegible] ॥ इति ॥

अत्र [illegible] द्वित्वाभाव एव प्राप्ते । द्वित्वाभावे [illegible] । अत एव 'रेफपूर्वः' इत्यसंयुक्तपरपाद.

[1] [illegible] [2] [illegible] [3] [illegible]
[4] [illegible] [5] [illegible] [6] [illegible]
[7] [illegible] [8] [illegible] [9] [illegible]
[10] [illegible]

तया द्वित्वस्मरण[1] मुपपद्यते । पदान्त इति किम्? 'अर्क्येण वै'[2] । व्यञ्जनपर इति किम्? 'शुङ्गसि'[3] । 'धन्वन्निव प्रपा असि'[4] । प्राकृत इति किम्? 'त्रिष्टुब्याज्या'[5]। नन्वत्र ङकारणकारयोरुदाहरणमयुक्तम् तयोरस्पर्शव्यञ्जनपरत्वे विकाराभावादिति केचित्। तत्र हि विरुद्धो हेतुः । यदप्युच्यते यः केषुचिदस्पर्शव्यञ्जनेषु परतः विक्रियते स एवात्र ग्राह्यः इति तत्रेदमुच्यते[6] । विकारिणोऽपि ग्रहणे प्राकृतत्वविरोधः । अथ अविकार्येव गृह्यते ; किमन्यत्र विकारेण? तस्माच्चकारमात्रे प्रतिषेधव्यवस्थापनं प्रति सम्यगुपायानवगमादेष क्लेश आश्रित[8] इत्यास्तामेतत् ॥ २८ ॥

---

तदेवमत्र द्वित्वादिकार्याणि द्वित्वप्रतिषेधाश्च विहिताः.

अथाध्यायस्य शेषेण वर्णविशेषभूतानां अक्षराणां संहिता विधीयते—

## उदात्तात्परोऽनुदात्तः स्वरितम् ॥ २९ ॥

प्रातिहतपादवृत्ततैरोव्यञ्जनविषयमेतत् । उदात्तात्परोऽनुदात्तः स्वरितमापद्यते । यथा—"स इधानः"[9] । "अथाब्रवीत्"[10] । "प्रउगमुक्थम्"[11] । वर्णविभागावस्थायामनुदात्तत्वे सत्येव[12] पुनस्तत्संहितायामेतल्लक्षणात् स्वरितत्वं "प्रउगम्"[11] इत्यादौ विज्ञेयम्॥

---

[1] द्वित्वविधान, द्वित्वनिवारण. इति पाठद्वयम्. [2] सं. ७-६-९. [3] सं. २-८-१६. [4] सं. २-६-१२. [5] २-६-२. [6] तत्रेदमुपयुज्यते. [7] तस्माच्चकारमात्रप्रतिषेधस्य व्य. [8] आश्रीयते. [9] सं. ४-४-४. [10] १-२-११. [11] ४-४-२. [12] अनुदात्तत्वेन.

उदात्तत्वादयस्स्वराणां गुणाः । कुतः? 'उच्चैरुदात्तः' (१-३८) इत्यादिषु पुल्लिङ्गनिर्देशसामर्थ्यतया स्वरशब्दानुवर्तनात् । मूलशास्त्रे च 'अचश्च'[1] इत्याधिकृत्य 'उच्चैरुदात्तः'[1] इत्यादि तल्लक्षणं स्मर्यते । 'स्वरविधौ व्यञ्जनमविद्यमानवत्'[2] । इति च । व्यञ्जनेषु चोदात्तत्वाद्युपलम्भस्तु स्वरसन्निधानोपाधिकृतः, यथा भूतलादिषु घटोपलम्भः[3] प्रदीपादिसन्निधानकृतः । अङ्गसंहिता तु तत्तत्स्वरगुणव्याप्तसीमाविभागार्थतया अन्यथोपपद्यमानानां व्यञ्जनानामुदात्तादिगुणयोगं स्वाभाविकं कल्पयितुमक्षमा । तस्मादयं स्वरविधिरक्षरासाधारणधर्मसम्बन्धित्वात्तद्विशिष्टाक्षरनिमित्तविषयत्वाच्च[5] अक्षरसंहिताविधिरिति मन्यामहे । 'उदात्तमुदात्तवति' (१०-१०) इत्यादिस्तु स्वरविधिः पदसंहितोपजीवित्वात्पदसंहिता[6] नाक्षरसंहिता[7] भवितुमर्हति । अत एव तत ऊर्ध्वम् 'अथ वर्णानाम्' (१३-५) इत्यधिकारः कृत इति वेदितव्यम । उदात्तगुणात्स्वरात्परोऽनुदात्तगुणः स्वरितगुणमादेशमश्नुते । यथा—'अनमीवा अयक्ष्माः'[8] । 'प्रउगमुक्थम'[9] । ननु 'प्रउगमुक्थम्'[9] इत्यादौ स्वाभाविकस्वरितः । नैतदेवम् ॥ नित्य एव स्वाभाविकस्वरितः अन्ये स्वरिता नैमित्तिकाः । यथा—'अनमीवा अयक्ष्माः'[8] इत्यत्र पूर्व उदात्तो निमित्तं स्वरितस्य । एवं 'प्रउगमुक्थम'[9] इत्यत्रापि । अनुदात्तस्तु प्रकृत्या यथा—'पितॄणाꣳसदनमसि'[10] इत्यादिषु नकारः प्रकृतिः तस्य ऋकारादिनिमित्तकं णत्वमिति विधित एवावगम्यते,

[1] पा. १-२-२८, २९. [2] परिभाषेन्दुशेखरे (79). [3] घटोपलम्भः. [4] क्ष. [5] त्वात्स्वरविशिष्टाक्षरविषयत्वाच्च. [6] त्वात्पदसंहितान्तर्भूता. [7] त्वात्पदसंहिताक्षरसंहिता. [8] सं. १-१-१. [9] सं. ४-४-२. [10] सं. १-१-१.

एवमिहापि वर्णसंहिताऽधिकारे विधानात् समानपदस्थादपि उदात्तात्परस्स्वरितः प्रकृत्याऽनुदात्तः, तस्य पूर्वोदात्तनिमित्तकं स्वरितत्वमिति वेदितव्यम् । तदुक्तं मूलशास्त्रे 'अनुदात्तं पदमेकवर्जम्'[1] इति । अस्यार्थोऽस्माभिस्स्वरसम्पदि विवृतः

नीचं प्रकृत्या सकलमुदात्तादन्यदक्षरम् ।
सोदात्ते निरुदात्ते तु पदे यस्स्वरितस्तथा ॥ इति ॥

उदात्तादिति किम् ? 'तदतिग्राह्या अभवन्'[2] ॥ २९ ॥

---

## व्यञ्जनान्तर्हितोऽपि ॥ ३० ॥

व्यञ्जनान्तर्हितोऽप्युदात्तात् परोऽनुदात्तः स्वरितमापद्यते । यथा– "तदग्ने अनृणः"[3] । "यस्त्वा हृदा"[4] इत्यादि । अन्तर्हितो व्यवहित इत्यर्थः ॥ ३० ॥

अपिशब्देन पूर्वसूत्रपदान्यन्वादिश्यन्ते । एकेन द्वाभ्यां बहुभिर्वा व्यञ्जनैर्व्यवहितोऽप्युदात्तात्परोऽनुदात्तस्स्वरितमश्नुते । 'अवधूत२ रक्षः'[5] । 'रुकामः'[6] । 'इषे त्वा'[7] । 'कृष्णोऽसि'[8] । 'विष्णवुस्थितः'[9] । 'नास्मद्रार्यं भ्रश्शते'[10] । 'नास्येन्द्रियं वीर्यं वृङ्क्ते'[11] । 'अथाब्रवीत्'[12] । इत्यादावेकादेशः प्रथमं भवतीत्युक्तम् ॥३०॥

---

## नोदात्तस्वरितपरः ॥ ३१ ॥

*उदात्तपरः स्वरितपरो वा उदात्तात् परोऽनुदात्तः स्वरितं ना-*

---

| | | |
|---|---|---|
| [1]पा. ६-२-१५७. | [2]स. ६-६-८. | [3]सं. ३-३-८. |
| [4]स. १-४-४६. | [5]सं. १-१-६. | [6]स. ३-३-३. |
| [7]सं. १-१-१. | [8] ,, १-६-११. | [9] ,, ३-४-१३. |
| [10] ,, ६-५-४. | [11] ,, २-२-९. | [12] ,, ३-२-११. |

पद्यते । यथा—"स इमं लोकम्"[1] । "तस्मात्त आद्याः"[2] "कीरिणा मन्यमानः"[3] । "तस्ये व्यृद्धम्"[4] । उदात्तश्च स्वरितश्चोदात्तस्वरितौ, तौ परौ यस्मात् सः, तथोक्तः ॥ ३१ ॥

उदात्तश्च स्वरितश्चेति द्वन्द्वः । तयोः परतः उदात्तात्परोऽनुदात्तः अनन्तर्हितो व्यञ्जनान्तर्हितोऽपि स्वरितं नाश्नुते । 'ध्रुवा अस्मिन्'[5] । 'स उक्थ्येन रुद्रान्'[6] । 'यच्छूद्रे यदर्ये'[7] । 'तास्सृष्टाः क्षुधं न्यायन् स एतं नवरात्रमपश्यत् तमाहरत्तेनायजत'[8] । उदात्तस्वरितपर इति किम्? 'सूक्षायामिव'[9] । 'अथैता आहुतीः'[10] । 'पौर्णमासीं चोक्थ्यं च'[11] । 'अनन्तरस्य भवति विधिर्वा प्रतिषेधो वा'[12] इति न्यायात्. क्षैप्रनित्यप्रश्लिष्टाभिनिहितानामयं प्रतिषेधो न भवति । 'अन्नाद्यमेवाभ्युपावर्तते'[13] । 'तस्य नाद्यं कामम्'[14] । 'मासूत्तिष्ठन्'[15] । 'लोकेऽस्मिन् गोष्ठेऽस्मिन्'[16] ॥ ३१ ॥

—o—

## नाग्निवेश्यायनस्य ॥ ३२ ॥

पूर्वसूत्रस्य प्रतिप्रसवार्थोऽयं नकारः । उदात्तात्परोऽनुदात्तः आग्निवेश्यायनस्य मते उदात्तपरः स्वरितपरो वा स्वरितं नापद्यत इति न । पूर्वोक्तान्येवोदाहरणानि ॥ ३२ ॥

---

1 सं. २-५-९. 2 स. ७-१-१. 3 सं. १-४-४६.
4 ,, ६-६-६. 5 ,, १-१-१. 6 ,, ७-१-५.
7 ,, १-८-३. 8 ,, ७-२-४. 9 ,, ६-२-४.
10 ,, २-४-६. 11 ,, १-६-९. 12 परिभाषेन्दुशेखरे.(६१)
13 ,, ५-४-९. 14 ,, २-६-१. 15 स. ७-५-२.
16 ,, १-५-६.

अग्निवेश्यायनस्य मते अनन्तराद्विहितप्रातिहतपादवृत्ततैरो-व्यञ्जनात्मकोऽपि स्वरितो न प्रतिषिध्यते । यथा—'नास्मै भ्रातृव्यं जनयति'[1] । 'द्रापे अन्धसस्पते'[2] । पादवृत्तस्य नास्त्युदाहरणम् ॥ ३२ ॥

## सर्वो नेत्येके सर्वो नेत्येके ॥ ३३ ॥

न केवलमुदात्तात् परः,[3] किन्तु सर्व एव सप्तविधस्वरितो नास्तीत्येके शाखिनो मन्यन्ते । तथाहि—वाजसनेयिब्राह्मणे द्वावेव स्वरावुदात्तश्चानुदात्तश्च । नेदं सूत्रद्वयमिदम् ॥ ३३ ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे चतुर्दशोऽध्यायः ॥

न केवलमनन्तराद्विहितस्यैव स्वरितस्य प्रतिषेधः "नोदात्तस्वरितपरः" (१४-३१) इति, किन्तु सर्व एव स्वरितः क्षैप्रादिरपि एवं सति न भवतीति एकेषां मतम । तथा वाजसनेयिनस्सममामनन्ति—'बाहुशर्ध्यूर्ध्वधन्वा'[4] । 'सꣳशितं वीर्यं बलम्'[5] इत्यादि । तत्रैवोदाहरणं द्रष्टव्यम् । न तु वाजसनेयके सर्वस्वरिताभावोऽस्मिन्सूत्रे कथ्यत इति युक्तं वक्तुम् । तत्रोदात्तसमशेषस्य स्वरितस्य प्रसिद्धत्वात् । नेदं सूत्रद्वयमिदम् ॥ ३३ ॥

इत्याचार्यगार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये प्रातिशाख्यव्याख्याने चतुर्दशोऽध्यायः.

---

1 सं ५-७-५. 2 स ४-५-१०. 3 न केवलमुदात्तस्वरितपरः

4 सं ४-६-४. 5 सं ४-१-१०.

# अथ पञ्चदशोऽध्यायः

## नकारस्य रेफोष्मयकारभावाल्लुप्ते च मलोपाच्च पूर्वस्वरोऽनुनासिकः ॥ १ ॥

नकारस्य रेफभावादूष्मभावाद्यकारभावाच्चकाराकृष्टयकारे लुप्ते सति मलोपाच्च पूर्वस्वरोऽनुनासिको भवति, सानुनासिको भवतीत्यर्थः। यथा रेफभावात्—"अग्नीँ रप्सुपदः"[1]। यथा ऊष्मभावात्—"कर्णाँश्चाकर्णाँश्च"[2]। "त्रीँस्तृचान्"[3]। यकारभावाद्यकारे लुप्ते यथा—"महाँ इन्द्रः"[4]। मकारलोपाद्यथा—"प्रत्युष्टँ रक्षः"[5]। "सँशितं मे ब्रह्म"[6] इत्यादि। मकारस्य लोपो मलोपः, तस्मात् ॥ १ ॥

[7]अथ पञ्चदशाध्यायेऽनुनासिकास्स्वरा विधीयन्ते—प्रसङ्गादनुस्वारादि ॥

रेफोष्मयकारभावादिति भावशब्दः प्रत्येकमभिसम्बध्यते। नकारस्य रेफभावादूष्मभावाद्यकारभावाच्च पूर्वस्वरोऽनुनासिको भवति। लुप्ते चेति चशब्देन यकारभावोऽन्वादिश्यते। यकारभावे नकारस्य लुप्ते पूर्वस्वरोऽनुनासिको भवति। मलोपाच्च

---

[1] ग. ५-६-१. [2] स. १-८-९. [3] स. २-३-१०.
[4] स. १-८-२०. [5] स. १-१-२. [6] सं. ४-१-१०.
[7] द. क. ग्रन्थ एवास्या.

पूर्वस्वरोऽनुनासिको भवति । "अनितिपरो ग्रहोत्स्य" (९-२०) इत्यादिना नकारस्य रेफयकारभावावुक्तौ । "नकारश्शकारं च परः" (५-२०) "तहीँस्तस्मिन्" (६-१४) इत्यूष्मभावः । 'लुप्येते त्ववर्णपूर्वौ यवकारौ' (१०-१९) इति यलोपः । 'अथ मकारलोपः' (१३-१) इति मलोपः । रेफभावात्—'ये वा वनस्पतीँरनु'[1] । ऊष्मभावात्—'शुक्लाँश्च कृष्णाँश्च'[2] । 'शततर्हाँस्तृँहन्ति'[3] । यकारभावात्—'न्यमिश्राँ ओपताच्चिग्महेते'[4] । नकारस्थानीये यकारे लुप्ते—"न्यमिश्राँ ओपतात्"[4] । मलोपात्—'प्रत्युष्टँरक्षः'[5] । नेदं सूत्रमिष्टम् ॥ १ ॥



## नैकेषाम् ॥ २ ॥

एकेषां मते पूर्वसूत्रोक्तेषु नानुनासिक्यं भवति । उक्तान्येवोदाहरणानि । इदमेवेष्टं न तु पूर्वम् ॥ २ ॥

एकेषां मते यथोक्तेषु पूर्वस्वरेष्वानुनासिक्यगुणो न भवति॥२

## ततस्त्वनुस्वारः ॥ ३॥

तत इति सर्वनाम्ना परामृष्टात् पूर्वस्वरात् परोऽनुस्वारागमो भवति । यथा—"स त्रीँरेकादशाँ इह"[6] । परामृष्टस्वरस्यानुनासिकं[7] गुणं तुशब्दो निवर्तयति । तस्मादनुनासिकप्रतिषेधपक्ष एवायमनुस्वारागमः स्यात् ॥ ३ ॥

1 सं. ४-२-८. 2 सं. २-३-१. 3 सं. १-६-७.
4 सं. १-२-१४. 5 सं. १-१-२. 6 सं. ३-२-११.
7 परामृष्टस्वरस्यानुनासिक्यं.

किंतु—

ततः तस्मात्स्वरात्परमनुस्वारस्त्वागमो भवति। 'ये वा वनस्पतीꣳरनु'[1]। 'शुक्लाꣳश्च कृष्णाꣳश्च'[2]। 'शततर्हाꣳ स्तृꣳहन्ति'[3]। 'न्यमित्राꣳ ओपतात्'[4]। 'प्रत्युष्टꣳ रक्षः'[5]। स्वमतस्यायमुपन्यासः। तत्रैकेषामित्युक्तिरविरुद्धा; अनुनासिकवादिभ्योऽन्यत्वात् त्रयेषाम्। स्वमतेऽपि[6] यकारश्रवणस्यानिष्टत्वात्तल्लोपपक्ष एवोदाहृत इत्यनुसन्धेयम्॥ ३॥

—:o:—

## स्नादिषु चैकपद ऊष्मपरः॥ ४॥

आगमान्वादेशकः चकारः। स्नादिष्वेकपदे अखण्डपदे ऊष्मपरोऽनुस्वारागमो भवति। यथा—"शोꣳसामोद इव"[7]। स्नादिष्विति किं? "तासां त्रीणि च"[8]। एकपद इति किं? "तं मा सꣳसृज"[9]। अखण्डविशेषणेन किम्! "त्रिपाहस्तो वै"[10]। ऊष्मपर इति किं? "माया मायिनाम्"[11]॥ ४॥

"स्नोहपारा" (१६-२) इत्यादिषु उत्तराध्यायभाविषु ग्रहणेषु यः शब्दः, स खलु समानपदस्थे ऊष्मणि परतः परमनुस्वारमुपगच्छति। अनेनोत्तराध्यायवर्तिनां विधीनां नियमः क्रियते-

[1] स. ४-२-८.
[2] सं. २-३-१.
[3] स. १-५-५.
[4] ,, १-२-१४.
[5] ,, १-१-२.
[6] स्वमते तु.
[7] ,, ३-२-९.
[8] ,, २-५-८.
[9] स. ३-१-४५.
[10] ,, ६-६-८.
[11] ,, ३-१०-११.

ऊष्मपर एव शब्दः परमनुस्वारमुपगच्छति, समानपदस्थ एव ऊष्मणि परे इति । तेन 'दꣳसनाभ्यो दꣳसोभिः' (१६–१९) इत्यादावनूष्मपरस्यानुस्वारागमो न भवति । तथा—'पाहि सोमम',[1] 'दिवि हि सूर्यम',[2] इति नानापदस्थेऽप्यूष्मणि परतः न भवति ॥ ४ ॥



## नान्तविकारात् पूर्वः ॥ ५ ॥

न खलु पदान्तविकारात् पूर्वस्मिन्ननुस्वारागमो भवति । यथा—"वहिस्ते अस्तु"[3] । "ह्रिपुञ्जिग" (१६–१३) इति प्राप्तिः । अन्तविकारादिति किं! "मा हिꣳसीर्द्विपादम्"[4] । अन्तस्य विकारः अन्तविकारः तस्मादन्तविकारात् ॥ ५ ॥

अन्तविकारादित्यूष्मविशेषणम । पदान्तवर्णस्य विकारभूतादूष्मणः पूर्वशब्दः परमनुस्वारं नोपगच्छति । यथा—'वहिस्ते अस्तु यालिति'। 'ह्रिपुञ्जिग' (१६–१३) इति प्राप्तिः ॥५॥



## अप्रग्रहाः समानाक्षराण्यनुनासिकान्येकेषाम्॥

यानि समानाक्षराणि अप्रग्रहसंज्ञानि तानि एकेषां मते भवन्त्यनुनासिकानि । यथा—'कुलायिनी वसुमती'[5] । अप्रग्रहा

[1] सं. १-४-२. [2] सं. ६-१-११. [3] सं. ३-३-१०.
[4] सं. ४-२-१०. [5] सं. ४-३-४.

किंतु—

ततः तस्मात्स्वरात्परमनुस्वारस्त्वागमो भवति । 'ये वा वनस्पतीꣳरनु'[1] । 'शुक्लाꣳश्च कृष्णाꣳश्च'[2] । 'शततर्हाꣳ स्तृꣳहन्ति'[3] । 'न्यमित्राꣳ ओषतात्'[4] । 'प्रत्युष्टꣳरक्षः'[5] । स्वमतस्यायमुपन्यासः । तत्रैकेषामित्युक्तिरविरुद्धा ; अनुनासिकवादिभ्योऽन्यत्वात् स्वेषाम् । स्वमतेऽपि[6] यकारश्रवणस्यानिष्टत्वात्तल्लोपपक्ष एवोदाहृत इत्यनुसन्धेयम् ॥ ३ ॥

—:o:—

## स्रादिषु चैकपद ऊष्मपरः ॥ ४ ॥

आगमान्वादेशकः चकारः । स्रादिष्वेकपदे अखण्डपदे ऊष्मपरोऽनुस्वारागमो भवति । यथा—"शोꣳसामोद इव"[7] । स्रादिष्विति किं? "तासां त्रीणि च"[8] । एकपद इति किं? "तं मा सꣳसृज"[9] । अखण्डविशेषणेन किम्! "त्रिपाहस्तो वै"[10] । ऊष्मपर इति किं? "माया मायिनाम्"[11] ॥ ४ ॥

"स्रशोहपाश" (१६–२) इत्यादिषु उत्तराध्यायभाविषु ग्रहणेषु यः शब्दः, स खलु समानपदस्थे ऊष्मणि परतः परमनुस्वारमुपगच्छति । अनेनोत्तराध्यायवर्तिनां विधीनां नियमः क्रियते-

---

[1] सं. ४-२-८. [2] सं. २-३-१. [3] सं. १-५-७.

[4] ,, १-२-१४. [5] ,, १-१-२. [6] स्वमते तु.

[7] ,, ३-२-६. [8] ,, २-५-८. [9] सं. १-८-४५.

[10] ,, ५-६-८. [11] ,, ३-१-११.

ऊष्मपर एव शब्दः परमनुस्वारमुपगच्छति, समानपदस्थ एव ऊष्मणि परे इति । तेन 'दृंसनाभ्यो दृंसोभिः' (१६-१९) इत्यादावनूष्मपरस्यानुस्वारागमो न भवति । तथा—'पाहि सोमम',[1] 'दिवि हि सूर्यम',[2] इति नानापदस्थेऽप्यूष्मणि परतः न भवति ॥ ४ ॥



## नान्तविकारात् पूर्वः ॥ ५ ॥

न खलु पदान्तविकारात् पूर्वस्मिन्ननुस्वारागमो भवति । यथा— "वहिस्ते अस्तु"[3] । "हिंपुजिग" (१६-१३) इति प्राप्तिः । अन्तविकारादिति किं ! "मा हिंसीर्द्विपादम्"[4] । अन्तस्य विकारः अन्तविकारः तस्मादन्तविकारात् ॥ ५ ॥

अन्तविकारादित्यूष्मविशेषणम् । पदान्तवर्णस्य विकारभूतादूष्मणः पूर्वशब्दः परमनुस्वारं नोपगच्छति । यथा—'वहिस्ते अस्तु यालिति'[3] । 'हिंपुजिग' (१६-१३) इति प्राप्तिः ॥५॥



## अप्रग्रहाः समानाक्षराण्यनुनासिकान्येकेषाम् ॥

यानि समानाक्षराणि अप्रग्रहसंज्ञानि तानि एकेषां मते भवन्त्यनुनासिकानि । यथा—'कुलायिनी वसुमती'[5] । अप्रग्रहा

[1] सं. १-४-३. [2] स. ६-१-११. [3] सं. १-१-१.
[4] सं. ४-२-१०. [5] सं. ४-३-४.

किंतु—

ततः तस्मात्स्वरात्परमनुस्वारस्त्वागमो भवति । 'ये वा वनस्पतीꣳरनु'[1] । 'शुक्लाꣳश्च कृष्णाꣳश्च'[2] । 'शततर्हाꣳ स्तृꣳहन्ति'[3] । 'न्यमित्राꣳ ओपतात्'[4] । 'प्रत्युष्टꣳरक्षः'[5] । स्वमतस्यायमुपन्यासः । तत्रैकेषामित्युक्तिरविरुद्धा ; अनुनासिकवादिभ्योऽन्यत्वात् स्वेषाम् । स्वमतेऽपि[6] यकारश्रवणस्यानिष्टत्वात्तल्लोपपक्ष एवोदाहृत इत्यनुसन्धेयम् ॥ ३ ॥

—:o:—

## स्रादिषु चैकपद ऊष्मपरः ॥ ४ ॥

आगमान्वादेशकः चकारः । स्रादिष्वेकपदे अखण्डपदे ऊष्मपरोऽनुस्वारागमो भवति । यथा—"शोꣳसामोद इव"[7] । स्रादिष्विति किं? "तासां त्रीणि च"[8] । एकपद इति किं? "तं मा सꣳसृज"[9] । अखण्डविशेषणेन किम्! "त्रिपाद्दस्रो वै"[10] । ऊष्मपर इति किं? "माया मायिनाम्"[11] ॥ ४ ॥

"स्रोहपाश" (१६–२) इत्यादिषु उत्तराध्यायभाविषु ग्रहणेषु यः शब्दः, स खलु समानपदस्थे ऊष्मणि परतः परमनुस्वारमुपगच्छति । अनेनोत्तराध्यायवर्तिनां विधीनां नियमः क्रियते–

---

1 स. ४-२-८. 2 सं. २-३-१. 3 सं. १-५-७.
4 ,, १-२-१४. 5 ,, ६-१-२. 6 स्वमते तु.
7 ,, ३-२-६. 8 ,, २-५-८. 9 स. ६-८-४५.
10 ,, ५-६-८. 11 ,, ३-१-११.

ऊष्मपर एव शब्दः परमनुस्वारमुपगच्छति, समानपदस्थ एव ऊष्मणि परे इति । तेन 'दंसनाभ्यो दंसोभिः' (१६-१९) इत्यादावनूष्मपरस्यानुस्वारागमो न भवति । तथा—'पाहि सोमम',[1] 'दिवि हि सूर्यम',[2] इति नानापदस्थेऽप्यूष्मणि परतः न भवति ॥ ४ ॥

---

## नान्तविकारात् पूर्वः ॥ ५ ॥

न खलु पदान्तविकारात् पूर्वस्मिन्ननुस्वारागमो भवति । यथा— "वहिस्ते अस्तु"[3] । "हिपुजिग" (१६-१३) इति प्राप्तिः । अन्तविकारादिति किं! "मा हिंसीर्द्विपादम्"[4] । अन्तस्य विकारः अन्तविकारः तस्मादन्तविकारात् ॥ ५ ॥

अन्तविकारादित्यूष्मविशेषणम् । पदान्तवर्णस्य विकारभूतादूष्मणः पूर्वशब्दः परमनुस्वारं नोपगच्छति । यथा—'वहिस्ते अस्तु पालिति'[3] । 'हिपुजिग' (१६-१३) इति प्राप्तिः ॥५॥

---

## अप्रग्रहाः समानाक्षराण्यनुनासिकान्येकेषाम्॥

यानि समानाक्षराणि अप्रग्रहसंज्ञानि तानि एकेषां मते भवन्त्यनुनासिकानि । यथा—'कुलायिनी वसुमती'[5] । अप्रग्रहा

---

[1] सं. १-४-३. [2] सं. ६-१-११. [3] सं. ३-३-१०.
[4] सं. ४-२-१०. [5] सं. ४-३-४.

इति किं ! "अमी इति"[1] । "तनू इति"[2] । समानाक्षराणीति किं ! "सो एवैषैतस्य"[3] । प्रग्रहाक्षरशब्दयोर्नियतलिङ्गतया परस्परान्वयो घटते । न प्रग्रहाः अप्रग्रहाः ॥ ६ ॥

अप्रग्रहा इति प्रग्रहव्यतिरिक्तानां तत्सदृशानामेव ग्रहणम्। यथा—अब्राह्मण इति क्षत्रियादेः । तदयमर्थः—प्रग्रहव्यतिरिक्तानि पदान्तभूतानि समानाक्षराण्यनुनासिकानि भवन्ति इत्येकेषां मतम् । यथा—'तस्य त्राता भवसि'[4]। 'यशो मयि दधती प्राणान्'[5]। 'मधु मधुनाऽभि योधि'[6]। अप्रग्रहा इति किम् ? 'द्वे धेनू भौमी'[7] । समानाक्षराणीति किम् ? 'नियुद्भिर्वायविष्टये दुरोणे'[8] ॥ ६ ॥

पदं च प्लुतः शाङ्खा[9]यनकाण्डमायनयोः ॥

यत् प्लुतवत् पदं, तच्च पदकाले शाङ्खायनकाण्डमायनयोर्मते अनुनासिकं भवति । यथा—"त्वी३ इत्यब्रवीत्"[10] । "अस्तु ही३ इत्यब्रूताम्"[11] । पदमिति किं ! संहितायां मा भूत् । चशब्दः पूर्वसूत्रोक्तविधेयसमुच्चयं करोति । अपरे त्वाहुः—प्लुतैकस्वरं पदमिति अन्यन्मा भूत् । "न छिनत्ती३ इति"[12] । "न विचित्या३ इति"[13] । नेदं सूत्रद्वयमिष्टम् ॥ ७ ॥

[1] सं. ३-१-७. [2] सं. २-२-७. [3] सं. २-२-९.
[4] ,, १-२-१४. [5] ,, ३-१-१०. [6] ,, १-१-१०.
[7] ,, ५-६-२१. [8] ,, २-२-१२ [9] शाखा इति वैदिकाभरणपाठः.
[10] ,, २-४-१२. [11] ,, ७-१-६. [12] सं. १-७-२.
[13] ,, ६-१-९.

चशब्देन समानाक्षराण्यनुनासिकानीत्यन्वादिश्यन्ते । इह तु पदमित्येकवचनश्रवणादेकवचनान्ततया विपरिणामः । तदयमर्थः— प्लुतं समानाक्षरं पदान्तभूतं पदं पदावस्थायां अनुनासिकं भवति शाखायनस्य काण्डमायनस्य च मतात् । पदमिति संहिताधिकारस्यापवादः । यथा—'छिनत्ति । सा । न । छिनत्ती३ । इति'[1] 'सहस्रा३म्'[2] । "जुहवानी३"[3] । "अन्विति । एती३"[2] । पदमिति किम्? संहितायां मा भूत् 'सा न छिनत्ती३ इति'[1] । 'जुहवानी३ मा'[3] । "अन्वेती३ सहस्रतमी३ सहस्रा३म्"[2] इति । प्लुतमिति किम्? 'तस्य त्राता भवसि तस्य सखा'[4] । नेदं सूत्रद्वयमिष्टम् ॥ ७ ॥

## अकारस्तु सꣳहितायामपि ॥ ८ ॥

सान्निध्यादनुनासिकप्लुतौ गृह्येते । तुशब्दः प्राक्तनाचार्यमतनिवर्तकः । अत एव संहितायामसंहितायां च अकारः पदान्तः प्लुतोऽनुनासिको भवति । यद्यप्यकार इति सामान्येनोक्तः, तथाऽपि 'अन्वादेशोऽन्त्यस्य'[1] (१–९८) इतिवचनादपिशब्दोऽनुनासिकधर्मतया निमित्तिनं पदान्तमेवाकारमन्वादिशति । यथा—"सुश्लोकाँ४ सुमङ्गला४म्"[5] । "उपहूता४म्"[6] । "यशो ममाँ४म्"[7] । "यज्ञाँ४म्"[8] इत्यन्यस्यां शाखायाम् । अपिशब्दः किमर्थः "सत्यराजा३न्"[5] ।

[1] सं. १-७-२. [2] सं. ७-१-७. [3] सं. ६-५-९.
[4] सं. १-२-१४. [5] सं. १-८-१६. [6] ,, २-६-७.
[7] ,, ७-४-२०. [8] आ. ५-१.

"अग्ना३ इत्याह"[1] । "विचित्यस्सोमा३न विचित्या३ इति"[2] ।
शाङ्खायनकाण्डमायनयोरप्ययं विधिरकारप्लुते सम्मतः ॥ ८ ॥

तुशब्दः परमतं व्यावर्तयति । अपिशब्दस्समुच्चये । तेनेदं स्वमतमिति सिद्धम् । अकारः पदान्तः प्लुतः संहितायामनुनासिको भवति । अपिशब्दात्पदविभागेऽपि । 'सुश्लोकाँ४ सुमङ्गलाँ४म्'[3] । 'उपहूताँ४म्'[4] । 'यशो ममाँ४म्'[5] । 'सुश्लोक सुमङ्गल उपहूतेत्यामन्त्रितैकवचनान्तानां अकारान्तप्रातिपदिकानां प्लुतान्तानामेतानि रूपाणि । 'शार्चीश्न् यशो मम'[5] इत्यस्मच्छब्दषष्ठ्येकवचनान्तस्यामन्त्रितात्परस्य पूर्वाङ्गत्वस्मरणात् 'आमन्त्रितस्य च'[6] इति पदद्वयस्यैकवद्भूतस्याद्युदात्तस्य सत आमन्त्रितलक्षण एव प्लुतादेशः । तस्मादेषां प्लुतानामकारः प्रकृतिः ॥ 'सुश्लोकाँ४ इति सु—श्लोकाँ४म्'[3] । 'सुमङ्गलाँ४ इति सु—मङ्गलाँ४म्'[3] । 'उपहूताँ४ इत्युप—हूताँ४म्'[4] । 'यशः । ममाँ४म्'[5] । अकार इति किम् । 'छिनत्ती३ इति'[7] । 'अग्ना३ इति'[1] पदान्त इति किम्? 'ब्रह्मा३न्'[3] प्लुत इति किम्? 'न ह स्म वै पुराऽग्निः'[3] ॥ ८ ॥

---

## सर्वमेकयमं पूर्वेषाᳬ सर्वमेकयमं पूर्वेषाम्॥

सर्वं वर्णजातमेकयमं एकश्रुतीति पूर्वेषां मतम् । यमो नाम स्वरः, उदात्त इत्यर्थः । पूर्वे नाम याज्ञिकाः, तेषां यज्ञकर्मणि[9]

1 सं. ६-६-८. 2 सं. ६-२-९. 3 सं. १-८-१६.
4 ,, २-६-७. 5 ,, ७-४-२०. 6 पा. ६-१-१९८.
7 ,, १-७-२. 8 ,, ५-१-१०. 9 तेषां मते यज्ञकर्मणि.

सर्वमेकश्रुति भवति । अन्ये मन्यन्ते, पूर्वे नाम केचिच्छाखिनः, तेषां सर्वमेकश्रुतीति । अथापरे कथयन्ति—सर्वमेकस्वरमनुनासिकं भवतीति, समानाक्षरमात्रापेक्षामधिक्षेप्तुम्[1] । नेदं सूत्रमिष्टम् ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे

पञ्चदशोऽध्यायः.

यमशब्दोऽक्षरगुणभूत उदात्तादिस्वरे वर्तते । सर्वमक्षरजातं एकस्वरम्, एकश्रुतिस्वरेण प्रयोक्तव्यमिति पूर्वेषां मतम्। पूर्वे वैयाकरणाः । एतच्छास्त्रस्य मूलभूतं व्याकरणं कृतवन्तो हि ते । अथ पूर्वे विद्वांस इति विद्वदपेक्षं प्राथम्यं तेषाम् । प्रथमे हि वैयाकरणा इति प्रसिद्धेः । ते हि वेदाध्ययने एकश्रुत्यं विकल्पयन्ति 'विभाषा छन्दसि'[2] इति । न तु पूर्वशब्देन याज्ञिका उच्यन्ते, तद्व्यपदेशाप्रसिद्धेः । न च ते सर्वं वेदमेकश्रुत्या प्रयुञ्जते । अपि तु उपांशुप्रयोगन्यूङ्खसामव्यतिरिक्तमेव । न च तत्रत्यमेकश्रुत्यं याज्ञिकानामेवाभिमतम् । किन्तु सर्वेषामाचार्याणाम् । अतएव व्याकरणे स्मर्यते—'यज्ञकर्मण्यजपन्यूङ्खसामसु'[3] इति । तस्माद्यथोक्त एव युक्तस्सूत्रार्थः । नेदं सूत्रमिष्टम् ॥ ९ ॥

इति वैदिकाभरणाख्ये प्रातिशाख्यव्याख्याने

पञ्चदशोऽध्यायः

—:o:—

1 समानाक्षरमात्रापक्षमधिक्षेप्तुम्. 2 पा. १-२-३६. 3 पा. १-२-३४.

# अथ षोडशोऽध्यायः.

## अथ सकारपराः ॥ १ ॥

'अथ' इत्ययमधिकारः । इत उत्तरे ग्रहणविशेषाः सकारपरा इत्येतदधिकृतं वेदितव्यम् । सकारः परो येभ्यस्ते 'सकारपराः' ॥

अस्मिन्नध्याये पदमध्यवर्तिभ्य ऊष्मभ्यः पूर्वे अनुस्वारा विधीयन्ते । ङकारानुनासिकादिसन्देहनिवृत्त्यर्थं अनुस्वारत्वे निश्चिते ङकारः पूर्वस्वरानुनासिक्यं च न भवतीति गम्यते । तत्रैवमुक्तं पूर्वाध्याये "स्नादिषु चैकपद ऊष्मपर" (१९-४) इति । तथादितः केषांचित्सकार एव परतोऽनुस्वारागम इति नियमार्थोऽयमधिकारः ॥ १ ॥

—०—

## स्रशोहपाशपदादयस्स्वरपरे ॥ २ ॥

'स्र, शो, ह, पा, श,' इत्येते ग्रहणविशेषाः पदादयः सकारपराः, तस्मिन् सकारे स्वरपरे सत्यनुस्वारागमं भजन्ते । यथा—"विस्रꣳसयेदमेनाभ्युः"[1] । "शोꣳसा मोद इव"[2] । ओकारेण किं ? "आशासाना"[3] । "हꣳसश्शुचिषत्"[4] । दत्वेन किं ? "प्रजा मा मा हासीत्"[5] । "पाꣳसुर इरावती"[6] । दीर्घेण किं ? "आहतं

[1] सं. ६-२-९. [2] सं. ३-२-९. [3] सं. १-१-१०.
[4] सं. १-८-१५. [5] ,, ६-६-८. [6] सं. १-३-१३.

गभे पसः"[1] । "यदासीनश्शꣳसति"[2] । पदादय इति किं? "अ-ग्निरुक्थेन वाहसा"[3] । "सोमं पिपासेत्"[4] । "दहाशसः"[5] । स्वरपरे इति किं? "तस्मात्स विस्रस्यः"[6] । "हस्तयोः"[7] । "कविशस्ताः"[8] । केचिदत्र सूत्रे हिग्रहणमङ्गीकुर्वते । तदनुपपन्नं, पदादय इति नियमात् । "अहिꣳसायै"[9] इत्यत्रानुस्वाराभावप्रसङ्गात् । ननु "हिꣳसीः परमे"[10] इत्येतदत्रोदाहरणमिति चेत् मैवम् । "हिपु-जिगा" (१६–१३) इत्यत्र नियमाभावात् । पदादावपदादौ च हिग्र-हणस्य कार्यसिद्धेः पुनरत्र ग्रहणं व्यर्थम् । स्वरः परो यस्मादसौ 'स्वरपरः,' तस्मिन् ॥ २ ॥

स्र, शो, ह, पा, श इत्येते शब्दाः पदादिभूताः परमनु-स्वारमुपगच्छन्ति स्वरे तदादौ परतः । स्र—'विस्रꣳसयेत्'।[6] शो—'शोꣳसा मोदः'[2] । ह—'हꣳसश्शुचिषत्'[11] । 'हꣳसैरिव'[12] पा—'पाꣳसुरे'[13] । 'प्रस्कन्द पाꣳसून्'[14] । श—'अभिशꣳसेयुरपू-ता'[1] । 'उपाꣳशु शꣳसति'[15] । पदादय इति किम्? 'स्व-स्तिगामनेहसम्'[16] । 'पेशो मर्या अपेशसे'[17] । स्वरपर इति किम्?

---

[1] सं. ७-४-१९.　[2] सं. ३-२-९.　[3] स. ३-५-११.
[4] ,, २-१-१०.　[5] ,, १-२-१४.　[6] ,, ६-३-९.
[7] ,, ४-१-६.　[8] ,, २-६-१२.　[9] ,, ५-२-८.
[10] ,, ४-२-१०.　[11] ,, १-८-१६.　[12] ,, ३-४-११.
[13] ,, १-२-१३.　[14] ,, २-६-१०.　[15] ,, ६-५-११.
[16] ,, १-२-९.　[17] ,, ७-४-२०.

'तस्मात्स विस्रस्यः'[1] । 'पूष्णो हस्ताभ्याम'[2] । 'सजनीयꣳ शस्यम्'[3] ॥ २ ॥

---

## विकृतेऽपि ॥ ३ ॥

अपिशब्दः स्वरान्वादेशकः । सकारात् परे तस्मिन् स्वरे विकृतिमापन्नेऽपि व्यञ्जनतामुपगतेऽपि स्यादनुस्वारविधिः । यथा— "अपहꣳस्यग्ने"[4] ॥ ३ ॥

निमित्तभूतात्सकारात्परे स्वरे संहितायशाद्विकृतेऽपि स्रादीनां भवत्ययमनुस्वारागमः । 'अपहꣳस्यग्ने'[4] ॥ ३ ॥

---

## रापूर्वश्च ॥ ४ ॥

चशब्दः स्रादिषु शकारमन्वादिशति । एतदर्थमेव स्वरव्यत्ययेऽपि शकारग्रहणं तत्रान्ते कृतम् । रा इत्येवं पूर्वः शकारः सकारपरोऽनुस्वारागमं भजेत । यथा—"नाराशꣳसीम्यः"[5] । अपदाद्यर्थोऽयमारम्भः ॥ ४ ॥

चशब्दः श इत्यन्वादिशति । अपदाद्यर्थोऽयमारम्भः । राशब्दं पूर्वं श इत्ययं शब्दः परमनुस्वारमुपगच्छति सकारे परतः । 'नराशꣳसस्याहम्'[6] । 'पितॄणां नाराशꣳसः'[7] । रा-

---

[1] स. ६-२-९. [2] स. १-१-४. [3] सं. ७-५-५.
[4] " ४-३-११. [5] सं. ७-५-११. [6] स. १-६-८.
[7] स. ४-८-९.

पूर्वे इति किम्? 'पितो आ विशस्य शं तोकाय'[1] ॥ ४ ॥

---

## शङ्स्ताऽनन्तोदात्ते ॥ ५ ॥

'शङ्स्ता' इत्येतस्मिन् ग्रहणे अनन्तोदात्ते सकारपरे भवत्यनुस्वारागमः । "उत शङ्स्ता सुविप्रः"[3] । अनन्तोदात्ते इति किं? "अश्वस्याविंशस्ता"[1] । "स्शोह" (१६-२) इति प्राप्तौ सत्यां सकारस्य स्वरपरत्वाभावेऽपि नायं विधिर्निषिध्यतामिति ग्रहणम् । अन्ते उदात्तो यस्य तत् अन्तोदात्तं, न अन्तोदात्तं अनन्तोदात्तं, तस्मिन् ॥ ५ ॥

शङ्स्ता इत्यस्मिन्ननन्तोदात्ते पदे वर्तमानश्शशब्दः परमनुस्वारमुपगच्छति सकारे परतः ॥ 'उत शङ्स्ता सुविप्रः'[2]। अनन्तोदात्त इति किम्? 'अश्वस्याविंशस्ता'[3] । सकारस्य स्वरपरत्वाभावात् "स्शोह"(१६-२) इत्यस्य अप्राप्तेरेवमारभ्यते ॥ ५ ॥

---

## अशङ्सन् ॥ ६ ॥

'अशङ्सन्' इत्यस्मिन् ग्रहणे स्यादनुस्वारागमः । यथा— "अभि व्यशङ्सन्"[4] । अपदार्थोऽयमारम्भः ॥ ६ ॥

अशङ्सन्नित्यस्मिन् शब्दे वर्तमानः शशब्दः परमनुस्वारमुपगच्छति सकारे परतः । अयमप्यपदार्थ आरम्भः । 'छन्दोऽभि व्यशङ्सन्'[4] । 'अप्यकारादि' (१-५२) इति परिभाषे-

[1] सं. ५-७-२. [2] सं. ४-६-८. [3] सं. ४-६-९.
[4] „ ६-६-११.

ह न प्रवर्तते, पदादित्यविधानात् । सन्‌पर इति किम्? 'अचक्रामन्नशास्तोः'[1] ॥ ६ ॥

## न शासनं विशसनेन ॥ ७ ॥

'शासनं, विशसनेन' इत्येतयोर्ग्रहणयोरनुस्वारागमो न भवति । "शासनं वाऽयवर्ष"[2] । "शुनो विशसनेन"[3] । "स्वरोष्मपरः" (१६-२) इति प्राप्तिः ॥ ७ ॥

शासनं, विशासनेन, इत्यनयोः शशब्दौ परमनुस्वारं नोपगच्छतः । 'प्रागाच्छसनम्'[2] । 'शुनो विशसनेन'[3] । विशब्दव्यावर्त्यं शाखान्तरे ॥ ७ ॥

## मापदादिरनुदात्तः ॥ ८ ॥

'मा' इत्ययं वर्णः पदादिरनुदात्तः सकारपरोऽनुस्वारागमं भजते । अत्र नियमाभावात् सकारस्य स्वरपरत्वाभावेऽपि निमित्तत्वं भवत्येव । यथा—"अहर्मां्सेन"[4] । "मां्स्पत्न्याः"[5] । पदादिरिति किं? "सिशिरमध्यमासः"[2] । अनुदात्त इति किं? "मासं दीक्षितः"[6] ॥

माशब्दः पदादिरनुदात्तः परमनुस्वारमुपगच्छति सकारे परतः । 'चर्मेव मांसमिव'[7] । 'अहर्मांसेन'[4] । 'मांस्प-

[1] स. ६-१-२. [2] स. ४-६-७. [3] सं. ५-७-२१.
[4] सं. ५-७-२०. [5] ,, ७-६-९. [6] स. ५-६-१.
[7] ब्रा. १-४-१.

चन्याः'[1] । पदादिरिति किम्? 'सिलिकमध्यमास इति सिलिक—मध्यमासः'[2] । अनुदात्त इति किम्? 'मासं दीक्षितस्स्यात्'[3] । सकारपर इति किम्? 'शरदे मापतिलौ'[4] । 'यन्माहेन्द्रो गृह्यते'[5] ॥ ८ ॥

## पुमीपूर्वश्च नित्यम् ॥ ९ ॥

चशब्दो मा इति ज्ञापयति । पु, मी इत्येवंपूर्वो मा इत्ययं वर्णः सकारपरो नित्यमनुस्वारागमं भजते । "उत्पुमाँ॰सम्" हरन्ति"।[6] "मीमा॰ सन्ते कार्ये"[7] । अनुदात्तत्वनियमनिवर्तको नित्यशब्दः ॥

अपदाद्यर्थोऽयमारम्भः । पु, मी इत्यनयोः पूर्वयोः माशब्दोऽनुदात्तः परमनुस्वारमुपगच्छति सकारे परतः । नित्यग्रहणात् स्वरान्तरयुक्तस्यापि पुमीपूर्वस्य माशब्दस्य सिद्धयति ।[8] पु—'उत्पुमाँ॰सम्'[6] । मी—'न तल्पे मीमाँ॰सन्ते'[7] । 'मीमाँ॰सेरन्'[7] । पुमीपूर्व इति किम्? 'ओमासश्चर्षणीधृतः'[9] ॥ ९ ॥

## सकायपरश्च ॥ १० ॥

चशब्दो मा इति ज्ञापयति । मा इत्ययं वर्णः सकायपरः अनुस्वारागमं भजते । यथा—'अमाँ॰ सकाय स्वाहा'[10] इति ॥१०॥

[1] सं. ४-६-९. [2] सं. ४-६-७. [3] सं. ५-६-७.
[4] सं. ७-२-१०. [5] सं. ६-५-५. [6] सं. ६-५-१०.
[7] सं. ६-२-६. [8] नित्यग्रहणात्स्वरान्तरयुक्तोऽपि । पुपूर्वस्य स्वरान्तरयुक्तस्य विधिबलात्सिद्धमिति मीपूर्वार्थं नित्यग्रहणम् । इति पाठान्तरम्. [9] सं. १-४-१६. [10] सं. ७-६-१२.

चशब्दो माशब्दमन्वादिशति । अयमप्यपदाद्यर्थ आरम्भः। सकायशब्दे परतो माशब्दः परमनुस्वारमुपगच्छति । 'अमाꣳसकाय स्वाहा'[1] । 'अप्यकारादि' (१–६२) इति तु न प्रवर्तत इत्युक्तम् ॥ १० ॥

---o---

## नावग्रहपूर्वः ॥ ११ ॥

"मापदादिरनुदात्तः" (१६–८) इत्यस्यायमपवादः । अवग्रहपूर्वो मा इत्ययं वर्णो नानुस्वारागमं भजते । यथा—"पूर्णमासि वै"[2] । "अर्धमासे देवाः"[3] । अवग्रहः पूर्वो यस्मादसौ अवग्रहपूर्वः ॥ ११ ॥

अवग्रहपूर्वो माशब्दः पदादिरनुदात्तः परमनुस्वारं नोपगच्छति । 'चातुर्मास्यान्यालभमानः'[4] । 'चतुर्विꣳशतिरर्धमासाः'[5] ॥ ११ ॥

---o---

## मासिमासुमासोमासामिति च ॥ १२ ॥

नकारो निषेधाकर्षकः। 'मासि, मासु, मासः, मासां' इत्येतेषु ग्रहणेषु न स्यादनुस्वारागमः । एषामपि "मापदादिः" (१६–८) इति प्राप्तिः । केचिदत्र "प्रथमे मासि पृष्ठानि"[6] इत्युदाहरन्ति । तदसाधु। "न पदे द्विस्वरे नित्यम्" (१६-

[1] सं. ७-६-१२. [2] सं. २-६-६. [3] सं. २-५-६.
[4] ,, १-६-१०. [5] ,, ६-२-३. [6] ,, ७-५-३.

१७) इत्यनेनैव निषेधसिद्धेः। तस्मादन्यशाखायां बहुस्वरमुदाहरणमवधारणीयम्। "दशसु मासूत्तिष्ठन्"[1]। "षण्मासो दक्षिणेनैति"[2]। "मासां प्रतिष्ठित्यै"[3] ॥ १२ ॥

चशब्दः प्रतिषेधमन्वादिशति। सि, सु, सः, साम् इत्येतेषु परतः माशब्दः पदादिरनुदात्तः परमनुस्वारं नोपगच्छति। मासि—'मासि पितृभ्यः क्रियते'[4]। 'न पदे द्विस्वरे नित्यम्' (१६-१७) इति नित्यग्रहणादिह न सिद्ध्यति, 'उभे निपासि जन्मनी'[5] इत्यादिविषयसद्भावात्. 'मापदादिरनुदात्तः' (१६-८) इति तु वैशेषिको विधिः न हि सामान्यविषयेण तेन बाध्यत इति वैशेषिकप्रतिषेधार्थं मासिग्रहणम्। मासु—'मासूत्तिष्ठन्भोति'[7]। मासः—'चतुरो मासः'[6]। मासां—'मासां प्रतिष्ठित्यै'[3]। इतिशब्दः पदरूपप्रत्ययार्थः। तेन 'इमौ तमाꣳसि गूहताम्'[8] इत्यत्र प्रतिषेधो न भवति। तद्ग्रहणपरिभाषा त्विहानेतुं न शक्यते। न ह्येतानि पदग्रहणानि, पदैकदेशयोः कार्यभाङ्निमित्तयोः ग्रहणात्। अतएव हिपुजिगा' (१६-१३) इति सूत्रे अतꣳस्यत्प्रभृतीनां समभिव्याहार उपपद्यते। तस्मात्पदप्रत्ययार्थमितिकरणः क्रियते ॥ १२ ॥

—o—

हि पु जिगा जिघा छꣳसिनेऽतꣳस्यदा-
ताꣳसीत्कनीया ज्याया द्राघीया
रघीया श्रेया ह्रसीया वसीया भूयाꣳसो

[1] सं. ७-६-२. [2] सं. ६-५-३. [3] सं. ७-५-१.
[4] ,, २-५-६. [5] ,, २-४-२२. [6] सं. ६-६-७.
[7] पदरूपम्. [8] ,, १-८-२२.

जक्षिवा जघ्निवा जिगिवा जीगिवा तस्थिवा दाश्वा दीदिवा पपिवा पीपिवा विद्वा विविशिवा शुश्रुवा ससृवा ॥१३॥

हि, पु, जिगा, जिघा, छꣳसिने, अतꣳसयत्, आताꣳसीत्, कनीया, ज्याया, द्राघीया, रघीया, श्रेया, ह्रसीया, वसीया, भूयाꣳसः, जक्षिवा, जघ्निवा, जिगिवा, जीगिवा, तस्थिवा, दाश्वा, दीदिवा, पपिवा, पीपिवा, विद्वा, विविशिवा, शुश्रुवा, ससृवा इत्येवम्पूर्वः सकारपरोऽनुस्वारागमो भवति । यथा—"हिꣳसीः परमे"[1] । "चिनुतेऽहिꣳसायै"[2] । "तेन पुꣳस्वतीः"[3] । "पुꣳसः पुत्रान्"[4] । "लोकमजिगाꣳसन्"[5] । "त्वष्टारमजिघाꣳसन्"[6] । "ब्राह्मणाच्छꣳसिने"[7] । ने इति किं? "मयुच्छस्युभे"[8] । "गर्भे मुष्टिमतꣳसयन्"[9] । यदिति किं? "अतसं न शुष्कम्"[10] । "अन्वाताꣳसीत्त्वयि"[11] । ईदिति किं? "अनु ब्रातासस्तव"[12] । "कनीयाꣳसो देवाः"[13] । "ज्यायाꣳसो भ्रातरः"[14] । "द्राघीयाꣳसो भवतः"[15] । "अथो रघीयाꣳसः"[16] । "प्रश्रेयाꣳसम्"[17] । "अथ ह्रसीयाꣳसमाक-

[1] सं. ४-२-१०. [2] सं. ५-२-८. [3] ब्रा. २-५-८.
[4] ,, ४-६-९. [5] ,, ५-५-५. [6] ,, ६-६-८.
[7] ,, १-८-१८. [8] ,, १-४-२२. [9] ,, ७-४-१९.
[10] ,, १-२-१४. [11] ,, ४-७-१३. [12] ,, ४-६-७.
[13] ,, ६-१-११. [14] ,, २-६-६. [15] ,, ५-२-६.
[16] ,, २-४-६. [17] ,, २-४-१.

मणम् "[1] । "वसीयाꣳसं भागधेयेन"[2] । "भूयाꣳसोऽन्येभ्यः"[3] विसर्गेण किं? "अन्नादो भूयासम्"[4] । "जक्षिवाꣳसः"[5] । "जग्मिवाꣳसं मृध्रः"[6] । "वाजं जिगिवाꣳसः"[7] । "जीगिवाꣳसस्स्याम"[8] इति शाखान्तरे । "द्युम्ना तस्थिवाꣳसः"[9] । "दाश्वाꣳसो दाशुषः"[10] । "शुचयो दीदिवाꣳसम्"[11] । "पपिवाꣳसश्च"[5] "पीपिवाꣳसꣳ सरस्वतः"[13] । "विद्वाꣳसो वै"[11] । "अविद्वाꣳसश्चक्रम"[14] । "अप्यकारादि" (१–९२) इतिवचनात् । "प्रविविशिवाꣳसमीमहे"[14] । "शुश्रुवाꣳसः"[13] । "वाजꣳ ससृवाꣳसः"[7] दाश्वाविविशिवाशुश्रुवेत्यत्र "स्वादिषु चैकपदे" (१९–४) इति प्राप्त्या शकारपरोऽनुस्वारागमः किं न स्यात्? 'अथ सकारपराः" (१६–१) इत्यूष्मविशेषस्य सकारस्यानुवृत्तेरिति वदामः । तर्हि ह्रसीया वसीया तस्थिवा ससृवा इत्यत्र सकारपर एवागमः किं न स्यात्? उच्चारणसामर्थ्यादेवेति प्रथमः परिहारः । अथवा आताꣳसीत् कनीयाꣳसमित्यादिषु सर्वत्र दीर्घानन्तरमेवानुस्वारस्थानमिति तत्साहचर्यादत्रापि न स्यादनुस्वारस्य ह्रस्वानन्तरं स्थानमित्यपरः परिहारः ॥ १३ ॥

---

| | | |
|---|---|---|
| [1] सं. ६-६-४. | [2] सं. ५-४-१०. | [3] सं. ७-१-१. |
| [4] ,, १-६-२. | [5] ,, १-४-४४. | [6] ,, २-५-३. |
| [7] ,, १-७-८. | [9] ब्रा. ७-८-६. | [9] ,, १-२-१४. |
| [10] ,, १-४-१६. | [11] सं. २-५-१२. | [13] ,, ३-१-११. |
| [13] ,, २-५-११. | [14] ,, ४-७-१५. | [15] ,, २-६-२. |

हि, पु इत्यादयश्शब्दाः परमनुस्वारमुपगच्छन्ति सकारे परतः । तत्र नु छ । अत । आता । भूया । इत्येतदनन्तरपठितेषु सिने, सयत्, सीत्, सः एतेषु विशिष्टसकारेषु परतः । हि—'मा त्वा हिꣳसिषम्'[1] । 'पितरं वाजिहिꣳसिम'[2] । 'अहिꣳसायै'[3] । पु—'तेन पुꣳस्यतोः'[4] । 'पुꣳसः पुत्रान्'[5] । जिगा—'अन्ववाजिगाꣳसन्'[6] । जिघा—'रक्षाꣳस्यजिघाꣳसन्'[7] । छꣳसिने—'ब्राह्मणाच्छꣳसिने वाससी'[8] । नेपर इति किम्? 'कदा चन प्रयुच्छसि'[9] । अतꣳसयत्—'गर्भे मुष्टिमतꣳसयत्'[10] सयत्पर इति किम्? 'सोमो विश्वान्यतसा वनानि'[11] । आताꣳसीत्—'अन्वाताꣳसीत्त्वयि'[12] । सीत्पर इति किम्? 'अनु भ्रातासस्तव सख्यम्'[13] । कनीया—'पशवः कनीयाꣳसः'[14] । 'कनीयाꣳसं यज्ञक्रतुम्'[15] । द्राघीया—'अरत्निना पक्षौ द्राघीयाꣳसौ भवतः'[16] । रघीया—'अथो रघीयाꣳसः'[17] । श्रेया—'श्रेयाꣳसं पापीयान्पश्चात्'[18] । प्र श्रेयाꣳसं भ्रातृव्यम्'[19] । ह्रसीया—'ह्रसीयाꣳसमेवा वै'[20] । वसीया—'वसीयाꣳसो जनिष्यन्त इति'[21] । भूयाꣳसः—'भूयाꣳसोऽसुराः'[22] । सःपर इति किम्? 'चक्षुष्मान्भूयासम्'[23] । जक्षिवा—'जक्षिवाꣳसः पपिवाꣳसश्च'[24] । जघ्निवा—'इन्द्रं वृत्रं जघ्निवाꣳसम्'[25] । जिगिवा—'वाजं जिगिवाꣳसः'[26] ।

[1] सं. १-१-८. [2] सं. १-८-५. [3] सं. ५-२-८.
[4] सं. २-५-८. [5] सं. ४-६-९. [6] सं. ३-२-२.
[7] सं. ६-१-१०. [8] सं. १-८-१८. [9] सं. १-८-२२.
[10] सं. ७-४-१९. [11] सं. २-२-१२. [12] सं. ४-७-१३.
[13] सं. ४-६-७. [14] सं. ६-१-४. [15] सं. ५-६-८.
[16] सं. ५-२-५. [17] सं. ७-४-९. [18] सं. ५-१-२.
[19] सं. २-४-१. [20] सं. ६-६-४. [21] सं. ६-५-६.
[22] सं. ५-३-११. [23] सं. १-६-२. [24] सं. १-४-४४.
[25] सं. २-५-३. [26] सं. १-७-८.

जीगिवाशब्दोदाहरणं शाखान्तरे। तस्थिवा–'अभि युग्ना तस्थिवाꣳसः[1]'। दाश्वा—'दाश्वाꣳसो दाशुषः[2]'। 'यासि दाश्वाꣳसम्[3]'। दीदिवा—'शुचयो दीदिवाꣳसम्[4]'। पपिवा—"पपिवाꣳसश्च विश्वे[5]"। पीपिवा—'पीपिवाꣳसꣳ सरस्वतः[6]'। विद्वा—'विद्वाꣳसो वै पुरा[7]'। विविशिवा—'प्रविविशिवाꣳसमीमहे[8]'। शुश्रुवा–'यच्छुश्रुवाꣳसः[9]'। ससृवा–'वाजꣳ ससृवाꣳसः[10]'। सकार पर इति किम् 'माहिषीघ त्वद्रयिः[11]'। 'वपुषे चिकित्सत[12]'।

केचित्तु 'हसीया वसीया' इत्यादिपूष्मवत्सु ग्रहणेषु अन्तर्वर्तिन ऊष्मणः प्रागनुस्वारागमः कस्मान्न भवतीत्याशङ्कामुद्राव्य परिहरन्ति, उच्चारणसामर्थ्याद्दीर्घपूर्वकसाहचर्याद्वा अनुस्वारो न भवतीति। सा खलु उचितयोजना न भवति। निर्मूलैवाशङ्का, अस्मदुक्तयोजनायां तदनुत्थानात्। तथोच्चारणसामर्थ्यादिति परिहारोऽप्ययुक्तः। न ह्यस्मिन् शास्त्रे निपातनात्कार्यं साध्यते, अपितु विधिनैव। अतएव 'दꣳष्ट्राभ्यां परः' (१६–१९) 'आदिरꣳहतिः' (१६–२६) इति विशेषणमर्थवद्भवति। कार्यभागविधानात्पूर्वं कार्यरहित इत्यभ्युपगन्तव्य इति, न पूर्वरूपपाठः कार्यभावं साधयितुमर्हति। न च दीर्घसाहचर्यादिति युक्तः परिहारः, ह्रस्वानामप्यस्मिन् सूत्रे कार्यविधानात्। तस्मादसबोधं परिहारश्च ॥ १३ ॥



## आकारेकारोकारास्सिपिपराः पदान्तयोः ॥

| | | |
|---|---|---|
| [1] सं. १-२-१४. | [2] स २-४-१६. | [3] स. ३-२-१२. |
| [4] ,, २-५-१२. | [5] ,, १-४-४४. | [6] ,, ३-१-११. |
| [7] सं. २-५-१२. | [8] ,, ४-८-१६. | [9] ,, २-५-९. |
| [10] सं. १-७-८. | [11] ,, १-१-१४. | [12] ,, ३-२-८. |

सिपिपरा आकारेकारोकाराः[1]तयोः सिप्योः पदान्तयोः सतोरनुस्वारागमं भजन्ते । यथा—"यथाꣳसि पक्वगन्धेन"[2] । "तमाꣳसि गूहताम्"[3] । "दश हवीꣳषि"[4] । "ज्योतीꣳषि कुरुते"[5] । "अग्न आयूꣳषि"[6] । 'अवभृथयजूꣳषि'[7] । पदान्तयोरिति किं? "तस्माद्वासिष्ठः"[8] । "मनीषिणो मनसा"[9] । आकारेकारोकारा इति दीर्घेण किं? "यथाऽनसि युक्त आधीयते"[10] । "ज्योतिरत्वा ज्योतिषि"[11] । "आयुषि दुरोणे"[12] । सिपीत्यत्र इकारेण किं? "प्रजास्वेव प्रजातासु"[13] । "ओषधीषु"[14] । "तनूषु बद्धम्"[15] ॥

सकारपराधिकारो निवृत्तः, सिपिपराभ्युपगमात् । आकार ईकार ऊकारश्च परमनुस्वारमुपगच्छति सि, पि इत्येतयोः पदान्तयोः परतः । सि—'रक्षाꣳसि पिशाचाः'[16] । 'चत्वारि छन्दाꣳसि'[17] । पि—'दिवो ज्योतीꣳषि'[5] । 'अग्न आयूꣳषि'[6] । सिपिपराः इति किम्? 'ककुहासु शक्करीषु'[18] । पदान्तयोरिति किम्? 'अयासिसीष्ठाः'[19] । 'नम उष्णीषिणे'[20] ॥ १४ ॥



[1]आकारः, ईकारः, ऊकारश्च.
[2]सं. ६-७-२३.
[3]सं. १-८-२२.
[4]सं. ७-५-१४.
[5]सं. ५-४-१.
[6]सं. १-३-१४.
[7]सं. ६-६-३.
[8]सं. ३-६-२.
[9]सं. ४-६-२.
[10]सं. ५-४-१०.
[11]सं. १-१-१०.
[12] " १-२-१४.
[13]सं. ६-४-१.
[14]सं. ३-५-६.
[15] " १-८-२२.
[16] " २-८-१.
[17] " ५-२-१.
[18] " १-१-३.
[19] " २-५-११.
[20] " ४-५-३.

## विकृतेऽपि ॥ १५ ॥

अपिशब्दान्वादिष्टे सिप्योरिकारे विकृतेऽपि यकारमापन्नेऽपि भवत्यनुस्वारागमः । यथा—"छन्दांꣳस्युप दधाति"[1] । "हवीꣳष्या सादयेत्"[2] । "तपूꣳष्यग्ने जुहा"[3] ॥ १९ ॥

विकृतेऽपि सिपिरूपे निमित्ते परतः आकारेकारोकाराः परमनुस्वारमुपगच्छन्ति—'स वयाꣳस्यसृजत'[4] । 'हवीꣳष्या सादयेत्'[5] । 'तपूꣳष्यग्ने'[6] ॥ १५ ॥

---

## अनाकारो ह्रस्वꣳ साङ्कृत्यस्य ॥ १६ ॥

आकारादन्यः अनाकारः ईकार ऊकारश्चेत्यर्थः । तयोरेव प्रकृतत्वात् । सांकृत्यस्य मते ईकार ऊकारश्च ह्रस्वमापद्यते। "हवीꣳषि भवन्ति"[8] । "समिष्टयजूꣳषि जुहोति"[9] । अनाकार इति किं? "वयाꣳसि"[10] । नेदं सूत्रमिष्टम् ॥१६॥

सिपिपरत्वेनानु[11]स्वारभाजो ये वर्णा उक्ताः, तेष्वाकारादन्यः साङ्कृत्यस्य मते ह्रस्वं गच्छति । 'ज्योतीꣳषि'[12] । 'आयू-

---

[1]सं. ५-३-८. [2]सं. १-६-१०. [3]सं. १-२-१४.
[4] ,, ३-१-१. [5] ,, १-६-१०. [6] ,, १-२-१४.
[7] पदान्तास्सिपिपरः ह्रस्व. [8] ,, ५-५-१. [9] ,, ६-६-२.
[10]सं. ५-७-२३. [11] पात्वेऽनुं. [12] ,, ६-४-१.

ऽपि[1]। अनाकार इति किम्? 'छन्दांऽस्युप दधाति'[2]। नेदं सूत्रमिष्टम्॥ १६॥

---

## न पदे द्विस्वरे नित्यम्॥ १७॥

द्विस्वरे पदे वर्तमानाः आकारेकारोकाराः पदान्तसिपिपरा नानुस्वारागमं नित्यं भजन्ते[3]। यथा—"स्तुतो यासि"[4]। "यासि दूतः"[5]। नित्यशब्दः प्राप्तचन्तरप्रतिषेधार्थः। "विधतः पासि नु त्मना"[6]। "स्वशोह" (१६–२) इति प्राप्तिः। "प्रथमे मासि गृह्णाति"[7]। "मा पदादिः" (१६–८) इति प्राप्तिः। द्वौ स्वरौ यस्मिन् विद्येते तत् द्विस्वरं, तस्मिन्॥ १७॥

द्विस्वरे पदे वर्तमान आकारः परमनुस्वारं नोपगच्छति। नित्यग्रहणाद्विध्यन्तरविषयेऽपि प्रतिषेधो भवति। 'यासि दाश्वासम्'[8]। 'आ या यां भासि'[9]। 'विधतः पासि नु त्मना'[6] इत्यत्र "स्वशोऽपाश" (१६–२) इति प्राप्तिरपि प्रतिषिध्यते॥ १७॥

---

## ऋजीषि जिगासि जिघास्यजासि यजासि ददासि दधासि वर्तयासि च॥ १८॥

नकारो निषेधाकर्षकः। ऋजीषि, जिगासि, जिघासि, अना-

---

[1] ग. १-१-१४.  [2] सं. ५-३-८.

[3] आकारस्यासिन्नागम्यते। द्विस्वरे पदे आकारः नानुस्वारागमं नित्यं भजते इति पा.

[4] सं. १-८-५.  [5] सं. ३-५-६.  [6] सं. १-३-१४.

[7] सं. ७-५-१.  [8] सं. २-२-१२.  [9] सं. ४-३-६.

सि, यजासि, ददासि, दधासि, वर्तयासि एषु ग्रहणेषु नानुस्वारागमः स्यात्। "आकारेकारोकाराः" (१६-१४) इति प्राप्तिः बहुस्वरत्वादेषु पूर्वसूत्रनिषेधो न सिध्यतीत्ययमारम्भः। यथा— "तेनर्जीपि सर्वाणि"[1]। "अच्छा जिगासि"[2]। "प्रथमे जिघासि" इति शाखान्तरे। "आ त्वमजासि गर्भधम्"[3]। "हविषा यजास्यग्ने बृहत्"[4]। "याभिर्ददासि दाशुषे"[5]। "दधासि दाशुषे कवे"[6]। "अश्वमा वर्तयासि नः"[7] ॥ १८ ॥

ऋजीपीत्यादिषु च आकारादयस्त्रिपिपराः परमनुस्वारं नोपगच्छन्ति बहुस्वरार्थोऽयमारम्भः। ऋजीपि—'तेनर्जीपि'[1]। जिगासि—'अर्णमच्छा जिगासि'[2]। जिघासीति शाखान्तरे। अजासि—'आ त्वमजासि'[3]। यजासि—'देवान् हविषा यजासि'[4]। ददासि—'याभिर्ददासि दाशुषे'[5]। दधासि—'दधासि दाशुषे कवे'[6]। वर्तयासि—'अश्वमा वर्तयासि नः'[7] ॥ १८ ॥



## दꣳसनाभ्यो दꣳसोभिर्दꣳसं वृषदꣳशो दꣳशुका दꣳष्ट्राभ्यां परः ॥ १९ ॥

दꣳसनाभ्यः, दꣳसोभिः, दꣳसं, वृषदꣳशः, दꣳशुका, दꣳष्ट्राभ्यां एषु ग्रहणेषु परः एवानुस्वारागमो भवति। यथा—

1 सं. ३-२-२. 2 सं. ४-२-४. 3 सं. ७-४-१९.
4 ,, ३-५-११. 5 ,, २-३-११. 6 ,, ४-२-७.
7 ,, ७-४-२०.

"वैश्वानरस्य द्ँ॒सनाभ्यः"[1] । "सजोषावश्विना द्ँ॒सोभिः"[2]। भिरिति किम्? "ऊती रिशादसः"[3] । "पुरुद्ँ॒सङ् सनिम्"[4]। "वृषद्ँ॒शस्ते"[5] । "पशून्द्ँ॒शुकाः"[6] । "द्ँ॒ष्ट्राभ्यां मलिम्लून्"[7] । द्ँ॒सेत्येतावतैवालम्, किमखिलपदपाठेन? "कुर्वतो मे मेप दसत्"[8] इत्यादौ मा भूदिति । पर इति किं? "वृषद्ँ॒शः"[5] इत्यत्र स्थानद्वयेऽपि "स्त्रादिषु नैकपदे" (१९–४) इति प्राप्तौ सत्यां पूर्वत्र मा भूदिति । ननु ग्रहणसामर्थ्यादेवानुस्वारागमः पूर्वत्र न भवति । यथा—"हसीयावसीया" (१६.–१३) इत्यादौ ग्रहणसामर्थ्यादुपपादितम् । नैप दोषः । "स्त्रादिषु नैकपदे" (१९–४) इत्यत्र ऊष्मसामान्यमुक्तम् । "अथ सकारपराः" (१६–१) इत्यत्र तु तद्विशेप उक्तः । सामान्यविशेषयोर्विशेषो बलीयानिति न्यायः । तथा सति बलवद्बाधनमेव भूषणं न तु दुर्बलबाधनमिति तत्रैव ग्रहणसामर्थ्य[9] समर्थनीयं, न तत्र दुर्बलस्थाने । तथा हि लोके अधिकः पुरुषो विरोधिनमधिकमेव बाधते भूषणत्वात् न तु कदाचिदल्पमिति परशब्दप्रयोग उपपद्यते ॥ १९ ॥

पर इत्यूष्मविशेषणम् । तच्च[10] वृषद्ँ॒शशब्दे अर्थवद्भवति, नान्यत्र । तदयमर्थः—वृषद्ँ॒शशब्दादन्यत्र 'द्ँ॒सनाभ्यः' 'द्ँ॒सोभिः' 'द्ँ॒सम्' 'द्ँ॒शः' 'द्ँ॒शुका' 'द्ँ॒ष्ट्राभ्याम्' इत्येतेषूष्मसु[11]

[1] सं. १-५-११. [2] सं. ५-६-४. [3] सं. ४-३-११. [4] सं. ४-२-४.
[5] ,, ५-५-१२. [6] ,, ५-२-९. [7] ,, ४-१-१०. [8] ,, १-६-३.
[9] सामर्थ्यात्. [10] तच्चोष्मवति. [11] इत्येतेषूष्मस्वेव.

परतः दशब्दः परमनुस्वारमुपगच्छति । वृषदंश इत्यत्र तु पर ऊष्मा निमित्तं न पूर्वः। ततः वृषदंशशब्दः परमनुस्वारमुपगच्छति श इत्यस्मिन् परतः। उदाहरणानि—'वैश्वानरस्य दंसनाभ्यः'[1]। 'सजोषावश्विना दंसोभिः'[2]। भिरिति किम्? 'युष्माकोती रिशादसः'[3]। "पुरुदंसं सनिम"। दंस इति सामान्यरूपग्रहणे 'कुर्वतो मे मोप दसत्'[5] इत्यादावपि स्यात्। 'हलीक्ष्णो वृषदंशस्ते'[6]। 'पशून् दंशुकास्त्युः'[7]। 'स्तेगान्दंष्ट्राभ्याम्'[8]। पर इति वचनात् वृषदंश इत्यत्र षकारात्प्रागनुस्वारो न भवति ॥ १९ ॥

—o—

## मंस्ये मंसतै यंसद्यंसन्वंसते वंसगः ॥ २० ॥

मंस्ये, मंसतै, यंसत्, यंसन्, वंसते, वंसगः एषु ग्रहणेषु स्यादनुस्वारागमः । यथा—"पशूनाभि मंस्ये"। "शूर मंसतै भद्रा इन्द्रस्य"[10]। "शोचिषा यंसद्विश्वं न्यत्रिणम्"[11]। "इषवदृदमे यंसन्"[12]। "अग्निर्नो वंसते रयिम्"[11]। "तिग्मशृङ्गो न वंसगः"[13]। मंसू, यंसू, वंसू इत्येतावतैवालं, किमखिलपदपाठेन? "उत्तमस्याव यासि,"[14] "यस्य भूयांसः",[15] "अद्य वसु वसति"[16] इत्यादौ मा भूदिति ॥ २० ॥

---

[1] सं. १-५-११. [2] सं. ६-६-४. [3] सं. ४-३-१३.
[4] ,, ४-२-४. [5] ,, १-६-३. [6] ,, ६-५-१२.
[7] ,, ६-२-९. [8] ,, ४-१-१०. [9] ,, ३-१-९.
[10] ,, ७-४-१५. [11] ,, ४-६-१. [12] ,, ३-६-६.
[13] ,, २-६-११. [14] ,, ६-३-१०. [15] ,, ३-१-१७.
[16] ,, २-५-३.

मशब्दः परमनुस्वारमुपगच्छति स्ये सते इत्यनयोः परतः। यशब्दः सत्, सन् इत्यनयोः परतः। वशब्दः सते, सगः इत्यनयोः परतः। 'पशूञाभिमं स्य इति '[1]। 'अनु नौ शूर मं सते भद्राः'[2]। 'यं सद्विश्वं न्यत्रिणम्'[3]। 'इषवश्शर्म यंसन्'[4]। 'अग्निर्नो वं सते रयिम्'[5]। 'तिग्मशृङ्गो न वं सगः'[6] सकारमात्रस्य निमित्तत्वे "सोमस्य त्विषिः"[7] इत्यत्र अतिप्रसंगः स्यात्॥ २०॥

—o—

## उन्न वंशम्॥ २१॥

'उत् न' इत्येवम्पूर्वे 'वंशम्' इत्यस्मिन्ग्रहणे स्यादनुस्वारागमः। "उद्वंशमिव येमिरे"[8]। "प्राचीनवंशं करोति"[9]। एवम्पूर्व इति किं? "भवति वशं वा एष चरति"[10]॥ २१॥

उत्, न इत्येताभ्यामुपपदाभ्यां परो वशब्दः परमनुस्वारमुपगच्छति शमित्यस्मिन् परतः। यथा–'उद्वंशमिव'[8]। 'प्राचीनवंशम्'[9]। उन्नेति किम्? 'उक्षवशामा लभेत'[10]। शमिति किम्? उक्षव इत्येतावत्युक्ते "यन्न वषट् कुर्यात्"[11] इत्यत्रापि स्यात्। अतः श इति वक्तव्यमिति। मकाराधिक्यं विस्पष्टार्थम्॥ २१॥

---

## अक्रंस्तोत्क्रंस्यते[12] रंस्यते भ्रंशते रंह्यै च॥ २२॥

अक्रंस्त, क्रंस्यते, रंस्यते, भ्रंशते, रंह्यै एषु ग्रहणेषु

---

[1] सं १-१-९. [2] सं. ७-४-२०. [3] स. ४-६-१.
[4] ,, ४-६-६. [5] ,, ४-६-१. [6] ,, २-६-११.
[7] ,, १-८-१४. [8] ,, १-६-१२. [9] ,, ६-२-१.
[10] ,, २-१-७. [11] ,, ५-१-६.
[12] अक्रंस्त क्रंस्यते इति त्रिभाष्यरत्नपाठः.

स्यादनुस्वारागमः । यथा—“द्यां वाज्याऽक्रꣳस्त”[1] । “उत्क-ꣳस्यते स्वाहा”[2] । “उपरꣳस्यते स्वाहा”[3] । “नास्माद्राष्ट्रं भ्रꣳशते”[4] । “पूष्णो रꣳह्यै”[5] । न कारस्य व्यतिहारेणान्वयाद्वुत्तरसूत्रे प्रयोजनमुच्यते ॥ २२ ॥

अक्र, उत्क, र, भ्र, र इत्येते शब्दाः परमनुस्वारमुपगच्छन्ति । स्त, स्यते, स्यते, शते, ह्यै इत्येतेषु परतः । यथा—‘वाज्याऽक्रꣳस्त’[1] । ‘उत्क्रꣳस्यते स्वाहा’[2] । उदिति उपबन्धव्यावर्त्यं शाखान्तरे । ‘उपरꣳस्यते स्वाहा’[3] । ‘न यज्ञाद्भ्रꣳशते’[6] । ‘रꣳह्या अपामोषधीनाम्’[5] । अक्रꣳस्तादीनां ग्रहणं. ‘शुक्रस्य ज्योतिषस्पते’[7] । ‘पुरा क्रूरस्य’[8] । ‘न वै तस्य त ईशते’[9] । ‘अदित्यै मह्यै स्वाहा’[10] । इत्यादौ मा भूदित्येतदर्थम् ॥ २२ ॥



## ऐकार उख्यस्य नितान्तः ॥ २३ ॥

‘रꣳह्यै’ इत्यस्मिन् ग्रहणे पूर्वसूत्रस्थचकारसमर्पितः ऐकारः, नितान्तः भवति उख्यस्य मते । नितान्तः तीव्रतरप्रयत्न इत्यर्थः । नैतन्मतमिष्टम् ॥ २३ ॥

अनन्तरोक्ते रꣳह्यैशब्दे ऐकार उख्यस्य मतेऽतिप्रयत्नो भवति । नैतदिष्टम् ॥ २३ ॥



[1] सं. ७-६-१९. [2] सं. ७-१-१९. [3] सं. ७-१-१९.
[4] ,, ६-७-४. [5] ,, १-३-१०. [6] ,, १-६-११.
[7] ,, ४-४-४. [8] ,, १-१-९. [9] ,, ३-१-९.
[10] ,, ७-३-१६.

## विरित्रिसङ्ख्यासु ॥ २४ ॥

वि, रि, त्रि इत्येवम्पूर्वः ऊष्मपरोऽनुस्वारागमः स्यात्, एभिर्यदि सङ्ख्या उच्यते असु, सुशब्दं वर्जयित्वा । सु इति सप्तमी विभक्तिरुक्ता । यथा—अःकारः प्रथमाविभक्त्युपलक्षणम् । "वि॑शत्यै स्वाहा"[1] । "यद्विं॑शतिर्द्धे"[2] । "चत्वारिं॑शते स्वाहा"[1] । "त्रिं॑शते स्वाहा"[1] । "त्रिं॑शत्त्रयश्च"[3] । त्रिग्रहणं विस्पष्टार्थम् । यतो विरिसंख्यास्वित्येतावतैवालम् । यथा-"वा घापूर्वे" (७–१३) इत्यत्र वकारो विस्पष्टार्थः । सङ्ख्येति किं? "विशे जनाय"[4] । "स रिपः पातु"[5] । "त्रिष्टुभैवास्मै"[6] । अस्विति किं? "त्रिष्वा रोचने दिवः"[7] ॥२४॥

सङ्ख्यावाचिषु प्रातिपदिकेषु अवयवत्वेन वर्तमानाः वि, रि, त्रि इत्येते शब्दाः परमनुस्वारमुपगच्छन्ति ऊष्मणि परतः॥ यथा, वि—'एकविं॑शतिमनु ब्रूयात्'[8] । 'वर्चो द्वाविं॑शः'[9] । रि—'चत्वारिं॑शच्च मे'[10] । 'चतुश्चत्वारिं॑दक्षरा'[11] । त्रि—'त्रिं॑शत्त्रयश्च'[3] । 'द्वात्रिं॑शतमनु ब्रूयात्'[8] । 'सङ्ख्यासु' इति किम्? 'आ मोजो विशा'[12] । 'वरुणाय रिशादसे'[13] । 'न रिष्येत्त्वावतस्सखा'[14] । नन्वत्र त्रिग्रहणमनर्थकम् । कुतः? रिग्रहणेनैव सिद्धत्वात्, अत्र त्रिशब्दावयवो रिशब्दोऽप्यस्त्येवेति । अत्रोच्यते–

[1] सं. ७-२-१७. [2] सं. ६-३-३. [3] स. १-४-११.
[4] ,, २-५-१२. [5] ,, १-२-१४. [6] ,, २-५-१०.
[7] ,, ४-२-४. [8] ,, २-५-१०. [9] ,, ४-३-८.
[10] ,, ४-७-११. [11] ,, २-५-१०. [12] ,, १-६-६.
[13] ,, ५-६-२०. [14] ,, २-३-१४.

सिद्धे सत्यारम्भो नियमाय। तकारपूर्वे तु रिशब्दे सति तत्सहितस्य यत्रावयवित्वं तत्रैव कार्यं भवति, नान्यत्रेति नियम्यते। तेन “त्रिष्वा रोचने दिवः”[1]। ‘त्रिएग्भेष्मी”[2] इत्यादिष्वनुस्वारागमो न भवति। अवयवी ह्यत्र त्रिशब्दः सङ्ख्यावाची, न तु तदवयव इति। अन्ये तु त्रिरिति, सङ्ख्या, असु इति पदविभागमाश्रित्य सप्तमीबहुवचनस्य पर्युदासं व्याचक्षते। तेषां त्रिरित्रिशब्दाः सङ्ख्यावाचिन इति सामानाधिकरण्यमभ्युपगन्तव्यम्। तत्तु त्रिरिशब्दयोर्व्याहतम्। न हि प्रातिपदिकैकदेशोऽर्थवान्, येन सङ्ख्यावाची स्यात्। पुशब्दपर्युदासे चिकीर्षिते अपु इति पकारमेव ब्रूयात्। त्रिषु प्रवादेऽतिप्रसङ्गस्य नास्ति *परिहारः। तथा त्रिग्रहणानर्थक्यं चेति हेयमेतत्॥२४॥

—o—

## शिꣳशुमारशिꣳपत्सꣴश्वा सꣴस्ता सꣴस्कृत्य सꣳसृष्ट सꣴस्कृतꣳ सꣳशितस्सꣳ†शिता किꣳशिल‡ ॥ २५ ॥

शिꣳशुमारः, शिꣳपत्, सꣴश्वा, सꣴस्ता, सꣳसृष्ट, सꣴस्कृत्य, सꣴस्कृतं, सꣳशितः,§ सꣳशिता, किꣳशिल, किꣳशिला एषु ग्रहणेषु स्यादनुस्वारागमः। यथा—“सिन्धोशिशꣳशुमारः”[3]। “किं तत उच्छिꣳपतीति”[4]। “उभयतस्सꣴश्वायि कुर्यात्”[5]। “सꣴस्तावभागास्थ”[6]। “सꣳसृष्टजित्”[7]।

---

1 सं. ४-२-४.  2 स. ४-३-२.  3 सं. ५-५-११.
4 „ ५-५-५.  5 „ २-६-८.  6 „ १-१-१३.
7 „ ४-६-४.  * प्रवादेष्वतिप्रसङ्गस्य नास्तीति.  † सदस्सꣳ.
‡ किꣳशिलकिꣳशिला इति त्रिभाष्यरत्नपाठः.  § सꣳसदः,.

" शरीरमेव सꣳस्कृत्य "[1] । " तन्नस्सꣳस्कृतम् "[2] । " ब्रह्म सꣳशितो ह्येषः "[3] । *" शरव्ये ब्रह्मसꣳशिता "[4] । " किꣳशिल वन्य या ते "[5] । परकिꣳशिलग्रहणं पदैकदेशतया बहूपादानार्थम् । " किꣳशिलश्चतुर्थः "[5] । " नमः किꣳशिलाय च "[6] । ननु—सꣳसृष्टेत्यत्र पकारपरोऽनुस्वारागमः किं न स्यात् ? मैवम् । अत्र सूत्रे सर्वत्र पदादिवर्णानन्तरमेवानुस्वारदर्शनात्, तत्साहचर्यादत्रापि तथैव विज्ञेयं, न वैपरीत्ये कारणमस्ति ॥ २९ ॥

शिशब्दः, शुमारः, पत् इत्यनयोः परतोऽनुस्वारमुपगच्छति । यथा—'सिन्धोशिशꣳशुमारः '[7] । ' किं तत उच्छꣳ पतीति '[8] । एवंपर इति किम्? 'शिशुं जातम् '[9] । 'तामाशिपमाशासे '[10] । सशब्दः परमनुस्वारमुपगच्छति । श्वा इत्यादिषु परतः । श्वा—'उभयतस्सꣳश्वायि कुर्यात् '[11] । स्ना—'सꣳस्नावभागास्स्थ '[12] । स्कृत्य—'शरीरमेव सꣳस्कृत्य '[1] । सृष्ट—'सꣳसृष्टजित्सोमपाः '[4] । स्कृतं—'तन्नस्सꣳस्कृतम् '[2] । शितः—'ब्रह्म सꣳशितः '[3] । शिता—'ब्रह्म सꣳशिता '[4] । एवं पर इति किम्? 'सस्यं पच्यते '[13] । 'स सवान्त्सन् स्तूयसे '[14] । 'सहस्स्थ सहो घः '[10] । किशब्दः परमनुस्वारमुपगच्छति शिलशब्दे परतः ।

---

[1] सं. ५-६-६. [2] सं. १-४-४३. [3] सं. २-५-१.
[4] ,, ५-६-८. [5] ,, ५-५-९. [6] ,, ४-५-१.
[7] ,, ६-६-११. [8] ,, ५-५-५. [9] ,, ३-५-११.
[10] ,, १-५-६. [11] ,, २-६-८. [12] ,, १-१-१३.
[13] ,, ५-१-७. [14] ,, ४-२-४. * 'स्वादुषꣳसदः ' (४-६-६.)

'किँ शिलश्चतुर्थः'[1] । 'किँ शिलाय च क्षयणाय च'[2] । लपर*-व्यावर्त्यं शाखान्तरे । अन्ये तु अत्र द्वौ किँशिलशब्दौ पठन्तो व्याचक्षते—एकं पदग्रहणं अन्यत्पदैकदेशग्रहणम् । तद्ग्रहणसामर्थ्यादिह पदैकदेशेऽपि कार्यं भवतीति ॥ तन्मन्दम् ॥ एकेनैवाकारान्तेन पदैकदेशग्रहणेन सर्वत्र कार्यसिद्धेः । न ह्यकारान्तनिर्देशेषु पदग्रहणपरिभाषा प्रवर्तते, अपदग्रहणत्वात् । तदभ्युपगमे तु 'चीयत्रपरः' (४-११) 'शकारश्चपरः' (५-४) 'शकारं चपरः' †(५-२०) इत्यादिनिर्देशास्तत्रतत्र कर्तव्याः स्युः । तस्मात्परिभाषा न भवति यन्निबन्धनोऽयं प्रलापः । तस्मान्निरर्थकोऽत्र द्वितीयः पाठः ॥ २५ ॥



## सितृदृहकारपरः ॥ २६ ॥

सि, तृ, दृ इत्येवम्पूर्वो हकारपरः स्यादनुस्वारागमः । यथा—"सिँहो वयः"[3] । "शततर्हाँस्तृँहन्ति"[4] । "दृँहस्व मा ह्वाः"[5] । एवम्पूर्व इति किं? "सपत्नसाही स्वाहा"[6] । "अनतिदाहायोवाच"[7] । ऋकारेणैवालं, किं तकारदकाराभ्याम् । "गृहाणामसमर्त्यै"[8] । एवम्पर इति किं? "सिपासन्तीः"[9] । "तृष्वीमनु"[10] । "नक्तं दृशे दीप्यते"[11] । हकारः परो यस्मादसौ हकारपरः ॥२६॥

---

[1] सं. ५-६-९. [2] सं ४-५-९. [3] सं. ४-३-५.
[4] ,, ६-५-७. [5] ,, १-१-३. [6] ,, १-२-१२.
[7] सं. ५-२-१०. [8] ,, ३-३-८. [9] ,, ७-५-२.
[10] सं. १-२-१४. [11] ,, १-६-४. * चिलपर.
† तु 'नपरश्चपरः' इत्यादिषु 'नकारपरश्चकारपरः'

सि, तृ, ह इत्येते शब्दाः परमनुस्वारमुपगच्छन्ति हकारे परतः । सि—'सिꣳहीरसि'[1] । 'सिꣳहो नकुलः'[2] । तृ—'वितृꣳहाणास्तिष्ठन्ति'[3] । 'शततर्हाꣳस्तृꣳहन्ति'[4] । ह—'हꣳहस्व मा ह्वाः'[5] । 'पृथिवीं हꣳह'[5] । हकारपर इति किम्? "शृङ्गाणि सिपासन्तीः"[6] । 'तेऽमुष्मिन् लोके व्यतृष्यन्'[7] । 'हशो विश्वाय सूर्यम्'[8] ॥ २६ ॥

---

## मꣳहिष्ठस्य च ॥ २७ ॥

'मꣳहिष्ठस्य' इत्यस्मिन् ग्रहणे चकारात्कृष्टहकारपरोऽनुस्वारागमो भवति । यथा—"मꣳहिष्ठस्य प्रभृतस्य"[9] । चकारः किमर्थः? अत्रैव ग्रहणे षसकारपरो मा भूदिति ॥ २७ ॥

मशब्दः परमनुस्वारमुपगच्छति हिष्ठस्येत्यस्मिन् हकारे परतः । "मꣳहिष्ठस्य प्रभृतस्य"[3] । पदंपर इति किम्? 'महिषीरसि'[1] ॥ २७ ॥

---

आदिरꣳहतिरꣳहोऽꣳहोरꣳहोमुगत्यꣳहा अꣳहसोऽꣳहसाऽꣳशमꣳशुभिरꣳशभुवाऽꣳश्वꣳशू अꣳशवोऽꣳशुरꣳशुमꣳ-

[1] सं. १-२-१२. [2] सं. ६-५-२१. [3] सं. १-२-११.
[4] ,, १-६-७. [5] ,, १-१-२. [6] ,, ५-५-२.
[7] ,, १-५-४. [8] ,, १-४-४३. [9] ,, ४-२-२.

## शूनश्शुनाऽ॑शोर॑शायोपा॑श्व॑शाव-वग्रहे* ॥ २८ ॥

अ॑हतिः, अ॑हः, अ॑होः, अ॑होमुक्, अत्य॑हाः, अ॑हसः, अ॑हसा, अ॑शं, अ॑शुभिः, अ॑शभुवा, अ॑शु, अ॑शू, अ॑शवः, अ॑शुः, अ॑शुं, अ॑शून्, अ॑शुना, अ॑शोः, अ॑शाय, उपा॑शु, अ॑शौ एतेष्वादिरनुस्वारागमो भवति । यथा—"परिद्वेषसो अ॑हतिः"[1] । "अ॑होमुचं वृषभम्"[2] । सूत्रे संहितायामोत्वस्याम्नानात् "अहर्देवानाम्"[3] इत्यादौ न स्यादयं विधिः । किन्तु यस्मिन् विसर्जनीयो रेफं नापद्यते, तस्यैवोपादानम् । "अ॑होश्चिद्या"[4] । "अ॑होमुग्भ्याम्"[5] । नन्वयं चैक[चक्र]बन्धः, रेफमप्राप्तस्यायं विधिः, विहितानुस्वारस्यैव रेफनिषेधते [धइ]ति । नैष दोषः । सिद्धस्यैवानुस्वारस्य बोधनं न तु विधिरिति[6] । "ऋतपाश्चात्य॑हाः"[7] । अतीति किं ? "षडहा भवन्ति"[8] । "ते नो मुञ्चतम॑हसः"[9] । "अ॑हसा वा एष गृहीतः"[10] । अ॑हेत्येतावता सिद्धेः कुतः सकलपदपाठः ? "स रसमह वसन्ताय"[11]।

[1] सं. २ ६-११.  [2] सं. १-६-१२.  [3] सं. १-६-९.
[4] सं. १-४-२९.  [5] सं. ७-५-२२

[6] नन्वेतत्सकलमनुपपन्नम्, रेफमप्राप्तस्याय विधिः । विहितानुस्वारस्यैव रेफो निषिध्यत इति । नायं दोषः । सिद्धस्यैवानुस्वारस्यात्र चोद्यता न तु विधिरिति । इति पाठान्तरम्.

[7] सं. १-८-१३.  [8] सं. ७-६-१.  [9] सं. ४-७-१६.
[10] ,, २-४-२.  [11] ,, ७-२-१०.

* त्रिभाष्यरत्नपाठे 'अवग्रहे' इत्येतन्न दृश्यते.

इत्यादिनिषेधार्थः । "परिपश्यामोऽꣳशम्"[1] । "षड्भिरꣳशुभिः पवयति"[2] । "त्वयाऽꣳशुना सोमम्"[3] । शुवेति किं? अꣳशेत्येतावता* ग्रहणे तथाविधपदसद्भावात् "अꣳशम्"[1] इत्यत्र न स्यात् । "तेनाꣳशुमत्"[4] । "अन्कारादि" (१–९३) इति वचनात् "अनꣳशु कुर्वन्तः"[4] इत्यप्युदाहरणम् । "वृष्णो ह्येतावꣳशू"[2] । "प्राणा वा अꣳशवः"[5] । "अꣳशुरꣳशुस्ते"[6] । "यमादित्या अꣳशुम्"[7] । "अꣳशूनपगृह्णाति"[7] । "अꣳशुना ते अꣳशुः"[8] । "यो वा अꣳशोरायतनम्"[9] । "अꣳशाय स्वाहा भगाय"[10] । "उपाꣳशुसवनो यदुपाꣳशुसवनम्"[7] । "तमुपाꣳशौ समस्थापयन्"[11] । अꣳश्वित्येतावति गृहीते इतरेषामपरिग्रहः† स्यात्, तथाविधपदसद्भावात् । अथोभयं गृह्यते पदमेकदेशश्च किꣳशिलवत् । तथा सति पदैकदेशेषु "पशुं पशुपते ते अद्य"[12] इत्यादिषु प्राप्नुयात् अनुस्वारागमः । तच्चानिष्टम् । आदिरिति किं? सर्वेषु स्थानेषु मा भूदिति । यथा— "अꣳहसः"[13] इत्यादि ॥ २८ ॥

---

पदग्रहणान्येतानि । कुतः? अꣳश्विति गृहीत्वा 'अꣳशुः'

---

[1] सं. ७-१-६. [2] सं. ६-४-५. [3] सं. ६-४-८.
[4] सं. ३-२-२. [5] सं. ६-४-४. [6] सं. १-२-११.
[7] सं. २-३-९. [8] सं १-२-६. [9] सं. ६-६-१०.
[10] सं. १-८-१३. [11] सं. ६-४-६. [12] सं. ३-१-४.
[13] सं १-६-१२. * यतो. † पां परिग्रहणमेकं.

'अꣳशुम्' 'अꣳशुना' इति पृथग्ग्रहणात्॥ 'अꣳ हतिः' इत्यादिषु पदेषु आदिवर्ण ऊष्मपरः अनुस्वारमुपगच्छति । अवग्रहे उपांशुपदे ऊष्मपरो वर्णोऽनुस्वारमुपगच्छति । अꣳ हतिः—'परिद्वेपसो अꣳहतिः'[1] । अꣳहः—'नैनमꣳहो अश्नोति'[2] । अꣳहोः—'अꣳहोश्चिया वरिवोवित्तरा'[3] । अꣳ होमुक्–'अꣳ होमुग्भ्यां द्विकपालः'[4] । अत्यꣳ हाः—'ऋतपाश्चात्यꣳ हाः'[5] । अतीति किम्? 'ब्रयहा भवन्ति'[6] । अꣳ हसः—'अꣳ हसो यत्र पीपरत्'[7] । अꣳ हसा—'अꣳहसा वा एप गृहीतः'[8] । अꣳ शम्—'अꣳ शमाहरामहा इति'[9] । अꣳ शुभिः—'पङ्क्तिरꣳ शुभिः'[10] । अꣳशभुवा–'त्वयाऽꣳ शभुवा'[11] । भुवेति किम्? 'अवकामन्नशस्तीः'[12] । अंशेत्यकारान्त[13]पदग्रहणमशक्यं विज्ञातुमिति अतिव्याप्तिपरिहाराय भुवेत्युपबन्धः । अꣳशु–'उपाꣳ शु यजति'[14] । पदग्रहणात् "अम्कारादि च" (१–५२) 'अनꣳ शु कुर्वन्तः'[15] । अꣳ शू–'होतायꣳ शू यौ सोमस्य'[10] । अꣳशवः–'प्राणा वा अꣳ शवः'[16] । अꣳ शुः–'अꣳ शुरꣳ शुस्ते'[17] । अꣳशुं—'यमादित्या अꣳ शुम्'[18] । अꣳशून्—'अꣳ शूनप गृह्णाति'[16] । अꣳ शुना–'अꣳशुना ते अꣳशुः'[19] । अꣳ शोः–'उपाꣳशोर्वीर्येण'[20] । अꣳशाय–'अꣳ शाय स्वाहा'[5] । उपाꣳशु–'उपाꣳ शुयाजमन्तरा यज-

1 सं. २-६-११. 2 सं. ३-४-११. 3 सं. १-४-२२.
4 सं. ७-६-२२. 5 सं. १-८-१३. 6 „ ७-४-१.
7 सं. १-६-१२. 8 सं. २-४-२. 9 सं. ७-१-६.
10 सं. ६-४-५. 11 „ ६-४-८. 12 „ ४-१-२.
13 अꣳशेत्यकारान्तं. 14 „ १-५-२. 15 „ ३-२-२.
16 सं. ६-४-४. 17 सं. १-२-११. 18 सं. २-३-५.
19 „ १-२-६. 20 सं. २-३-१०.

स्यजामित्वाय '[1] । अꣳशौ–' ते देवा उपाꣳशौ '[2] । अꣳश् इति सामान्यग्रहणे "अश्याम'[3] । 'अश्नुते'[4] । 'अशीमहि '[5] । 'अशिथिलम '[6]. इत्यादावपि स्यात् । उपाग्रहणे 'अशामन्त '[7] इत्यत्रापि स्यात् । आदिरिति किम ? 'अꣳहसोऽꣳहसा' इत्यत्र द्वितीयस्य स्वरस्य मा भूत् ॥

नतु अत्र अꣳह इति अविशेषोक्तेः सर्वेष्वहश्शब्देषु अनुस्वारः स्यात्–' अहर्देवानामासीत् '[8] । 'अहोरात्रे गच्छ '[9] । ' ञ्यहो भवति '[10] । 'अहोभिश्चरन्ति'[11] । अपि चैवं सति 'अꣳहश्च सर्वेषाम्' (८–१५) इति निषेधात् क्वचिदपि असौ रेफी न स्यात् । तथाच– 'नभिर्भ्यां परः ' (८–१४) इत्येतदप्यनर्थकं स्यात् । अत्र वदामः– अहश्शब्दस्तावदष्टमेऽध्याये त्रिविधोऽवगम्यते—क्वचिद्रेफी क्वचिदनुस्वारी क्वचिदनुभयात्मक इति । तत्र रेफपर इङ्ग्यान्तो भिर्भ्यां परश्चानुभयात्मक इति गम्यते, रेफादेशनिषेधात्तत्सामर्थ्याच्च यदि रेफपरादिषु अनुस्वारस्स्यात्तदा तत्रापि 'अꣳहश्च सर्वेषाम्' (८–१५) इत्यनेनैव रेफनिषेधसिद्धेः पृथङ्निषेधा निरर्थकास्स्युः । अतो रेफपरादिष्वनुस्वारोऽपि नास्तीति सिद्धम । तेभ्योऽन्येष्वहश्शब्देषु यद्यपि रेफानुस्वारविवेको नावकल्पते,† तथाऽपि 'अꣳहश्च सर्वेषाम्' (८–१५) इति निषेधात् अनुस्वारिणो रेफित्वं नास्तीति तावदवगम्यते । तेनेदमवसीयते—

ओत्वयत्वोपचाराणां यस्मिन् रेफ*विरोधिनाम् ।
संहितायां समाम्नानं[12] तदनुस्वार्यहःपदम् ॥

[1] सं. २-६-६. [2] सं. ६-४-६. [3] सं. १-३-१४.
[4] ,, ६-४-१०. [5] ,, ५-७-२. [6] ,, ७-२-६.
[7] ,, ४-६-३. [8] ,, १-५-९. [9] ,, १-३-११.
[10] ,, ७-३-५. [11] सं. ७-६-१. [12] समाम्नातं.
† रेफयनुस्वारिविवेको नावबुद्ध्यते. * रेफि.

'ओकारमस्सर्वोऽकारपरः' (९–७) 'घोषवत्परश्च'[1] (९–८) इत्योत्वम्, "अथ स्वरपरो यकारम्" (९–१०) इति यत्वं चेत्युभे रेफ[1]-विरुद्धे, तदपवादत्वेन "ह्वारभार्" (८–८) इत्यादिना रेफादेशविधानात् । तथा 'कखपकारपरष्षम्' (८–२३) इत्यादिना विहित उपचारो रेफ[2]विरुद्धः, "नाध्वरं विश्वत" (८–३२) इत्यन्तं परुःपुनश्शब्दयोः[3] रेफिणोस्तन्निषेधात् । तस्माद्यस्मिन्नहः[4]पदे रेफविरुद्धमोकारादिसिद्धकार्यं[5] समाम्नायते, तदनुस्वारि । ततोऽन्यत्तु रेफीति विवेकस्सुकर इति भावो भगवतस्सूत्रकारस्य । ततश्च 'नैनमꣳहो अश्नोत्यन्तितो न'[6] । 'इन्द्रायाꣳहोमुचे'[7] । 'अꣳह इन्द्रमेव'[7] । "अꣳहस्पत्याय त्वा"[8] इत्याद्यहः[4]पदमनुस्वारीति सिद्धम् ततो नातिप्रसङ्गः । अवग्रह इत्यस्यानुक्तौ पूर्वस्याꣳशुपदस्य पठिष्यमाणस्य अꣳशौपदस्य च उपशब्द उपबन्धस्सिद्धो भवतीति विज्ञायते । तथा च–'उपाꣳशु यजति'[9] इत्यादावेवानुस्वारस्स्यात् । 'तेनाꣳशुमत्'[10] 'उपाꣳशुपात्रे'[10] इत्यादौ न स्यात् । अवग्रहग्रहणे तु सति नेदीयसोऽꣳशौपदस्य तथात्वासम्भवात्ततः पूर्वस्योपाꣳशुग्रहणस्य विशेषणं तद्भवतीति इष्टसिद्धिः ॥ २८ ॥

—o—

## *उदात्तोऽꣳसेऽꣳसायाꣳसाभ्यामꣳसाविति॥

अवग्रहः आदिरित्यर्थः । यदि पदादिरुदात्तः स्यात् तर्हि अꣳसे, अꣳसाय, अꣳसाभ्यां, अꣳसो इत्येतेषु स्यादनुस्वा-

---

[1] यत्व च रेफि. [2] रेफि. [3] इत्यन्त.पुनश्शब्दयोः
[4] अꣳहः. [5] रेफिविरुद्धयोत्वादिकार्य. [6] सं. ३-४-११.
[7] सं. २-२-७. [8] सं. १-४-१४. [9] ,, १-६-२.
[10] ,, ३-२-२. * सूत्रादौ 'अवग्रहः' इत्यधिक त्रिभाष्यरत्नपाठे.

रागमः । इतिशब्दः स्वरूपवाची । यथा—"दक्षिणेऽ॒॑स उप दधाति"[1] । "शित्य॒॑साय स्वाहा"[2] । "अ॒॑साभ्या॒॑ स्वाहा"[3] । "उत्तरेऽ॒॑सावेव प्रति दधाति"[1] । आदिरुदात्त इति किं? "असावब्रवीच्चित्रविहिता"[4] ॥ २९ ॥

इतिशब्दः पदग्रहणाभिव्यक्त्यर्थः । इतरथा कार्यभाङ्गिमिस्वरूपयोः पदैकदेशयोर्ग्रहणानीति[5] विज्ञायेरन् । तदयमर्थः—अ॒॑से इत्यादिषु पदेषु ऊष्मपरो वर्ण उदात्तः परमनुस्वारमुपगच्छति । अ॒॑से—'दक्षिणेऽ॒॑से'[1] । अ॒॑साय—'शित्य॒॑साय स्वाहा'[2] । अ॒॑साभ्याम्—'अश्विनाव॒॑साभ्याम्'[6] । अ॒॑सौ—'अ॒॑सावेव प्रति दधाति'[1] । उदात्त इति किम्? 'असावादित्यः'[7] । पदग्रहणात् 'जीवसे'[8] । 'अपेशसे'[9] इत्यादौ न भवति ॥ २९ ॥

## नासावा नासावा ॥ ३० ॥

आद्युदात्ते[10] सत्यप्यसावित्यस्मिन् ग्रहणे न खलु स्यादनुस्वारागमः "ब्रूयादसावेहीत्येवम्"[11] ॥ ३० ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे षोडशोऽध्यायः ॥

आङ्परे असौपदे ऊष्मपरो वर्ण उदात्तः परमनुस्वारं नोपगच्छति । यथा—'ब्रूयादसावेहीति'[11] ॥ ३० ॥

इत्याचार्यगार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये प्रातिशाख्यव्याख्याने षोडशोऽध्यायः ॥

---

1 सं. ५-३-१. 2 सं. ७-३-१७. 3 सं. ७-३-१६.
4 ,, २-५-२. 5 ह्णा एत इतिः 6 ,, ६-७-१३.
7 ,, २-१-४. 8 सं. १-२-१. 9 ,, ७-४-२०.
10 आद्युदात्तत्वे. 11 ,, २-४-९.

# अथ सप्तदशोऽध्यायः

## तीव्रतरमानुनासिक्यमनुस्वारोत्तमेष्विति शैत्यायनः ॥ १ ॥

अनुस्वारश्च उत्तमाश्च अनुस्वारोत्तमाः तेषु तीव्रतरं भवति आनुनासिक्यम् इति शैत्यायनः. नाम मुनिर्मन्यते । तीव्रादधिकं तीव्रतरम् । अनुनासिकानां भावः आनुनासिक्यम् । 'नासिकाविवरणादानुनासिक्यम्' (२—५२) इत्यस्य विधेः प्रयत्नदार्ढ्यमुपदिश्यते । यथा—'अग्नीश्ररप्सुषदः'[1] । 'यं कामं कामयते'[2] । 'वश्चते परिवश्चते स्नायूनाम्'[3] । 'मणिना रूपाणीन्द्रेण'[4] । एतेष्विति किं? 'रुक्ममुप दधाति'[5] । 'तिग्ममायुधम्'[6] । 'सुश्लोकां ४ सुमङ्गला ४म्'[7] ॥ १ ॥

तदेवं पदवर्णानां प्रायशो निर्णयः कृतः ।
तदुच्चारणकल्पोऽत ऊर्ध्वं प्रायेण वर्ण्यते[8] ॥

अस्मिन्नध्याये प्रयत्नो निरूप्यते । अनुस्वारे ङञणनमेषु च यदानुनासिक्यमस्ति, तत्तीव्रतरं प्रयोक्तव्यमिति शैत्यायनो मुनिर्मन्यते । अतोऽन्यत्र यदानुनासिक्यं तत्तु समं प्रयोक्तव्यम्, विशेषानुपदेशात् । अनुस्वारे यथा—'स त्रीꣳ रेकादशान्'[9] । 'य-

[1] सं. ५-६-१. [2] सं. ७-१-१. [3] सं. ४-६-३.
[4] ,, ७-३-१४. [5] ,, ५-२-७. [6] ,, ४-७-१५.
[7] ,, १-८-१६. [8] प्रावर्ण्यते बुधैः. [9] ,, ३-२-११.

त्तत्र विस्त्रसयेत्[1] । उत्तमेषु खल्वपि—'पराङावर्तते'[2] । 'नमो राज्ञे नमो वरुणाय'[3] अनुस्वारोत्तमेष्विति किम्? 'सुश्लोकाꣳ३म्'[4] । नेदं सूत्रमिष्टम् ॥ १ ॥

—o—

## समꣳ सर्वत्रेति कौहळीपुत्रः ॥ २ ॥

सर्वत्र आनुनासिक्यवर्णेषु तीव्रतरत्वं सममिति कौहलीपुत्रो मन्यते। यथा—'सꣳराणः'[5] । 'संयत्ताः'[6] । 'न्यङ्ङ्गिः'[7] । 'उपहूताꣳ४ हो इत्याह'[8] इत्यादि ॥ २ ॥

सर्वेष्वनुनासिकेषु वर्णेष्वानुनासिक्यं समं मध्यमप्रयत्नेन प्रयोक्तव्यमिति कौहळीपुत्रो मन्यते । यथा—'सुश्लोकाꣳ३म्'[4] । 'रुक्ममुप दधाति'[9] । 'तिग्ममायुधम्'[10] । 'सत्रीꣳ रेकादशाꣳ इह'[11] । "अꣳशुरꣳशुस्ते"[12] । "यः पराङ् विष्वङ्"[13] । 'नमो राज्ञे नमः'[14] । 'तं य एवं विद्वान् यजते'[15] । 'स एवास्मा इमान्लोकान्'[16] । 'तल्लोकंपृणयोपैत्'[17] । नेदं सूत्रमिष्टम्[18] ॥ २ ॥

—o—

## अनुस्वारेऽण्विति भारद्वाजः ॥ ३ ॥

'अणु' सूक्ष्मतमं आनुनासिक्यं 'अनुस्वारे' स्यादिति

---

[1] सं. ६-२-१०. [2] सं. ३-२-९. [3] सं. ७-४-१६.
[4] ,, १-८-१६. [5] ,, ४-६-१. [6] ,, १-५-१.
[7] ,, ६-५-३. [8] ,, २-६-७. [9] ,, ६-२-७.
[10] ,, ४-३-१५. [11] ,, ३-२-११. [12] ,, १-२-११.
[13] ,, १-५-९. [14] ,, ७-४-१६. [15] ,, ३-२-७.
[16] ,, १-१-४. [17] ,, ६-७-६. [18]एतद्वाक्यं क्वचिन्नास्ति.

'भारद्वाजः' मन्यते । यथा—'तनुवा जयत्वं स त्वा'[1] । अनुस्वारादन्यत्र शैत्यायनाविधिः उत्तमेषु तीव्रतरत्वं यमादिषु तीव्रमात्रमिति ॥ ३ ॥

अनुस्वारे यदानुनासिक्यं तदणुप्रयत्नेन प्रयोक्तव्यमिति भारद्वाजो मन्यते । अन्येषु वर्णेषु मध्यमप्रयत्नेन । उक्तान्युदाहरणानि ॥ ३ ॥

—o—

## नकारस्य रेफोष्मयकारभावाल्लुप्ते च मलोपाच्चोत्तरमुत्तरं तीव्रतरमिति स्थविरः कौण्डिन्यः ॥ ४ ॥

'नकारस्य' 'रेफोष्मयकारभावात्' चकारात्कृप्यकारे 'लुप्ते' सति 'मलोपाच्च' 'उत्तरमुत्तरम्' आनुनासिक्यं आनुपूर्व्येण 'तीव्रतरं' स्यादिति 'स्थविरः कौण्डिन्यः' मन्यते । यथा—'स त्रीꣳरेकादशान्'[2] इत्यत्र आनुनासिक्यं संयोगमात्रवत् । 'शुक्लाꣳश्च कृष्णाꣳश्च'[3] इत्यत्र तु संश्लिष्टम् । 'महाꣳ इन्द्रः'[4] इत्यत्र तीव्रतरम्[5] । 'सꣳशितम्'[6] इत्यत्र तीव्रतम[7]मित्यानुपूर्व्येण विज्ञेयम् । अन्यत्र शैत्यायनविधिः ॥ ४ ॥

नकारस्य रेफभावादूष्मभावाद्यकारभावाद्यलोपे मलोपे चेति पञ्चविषयेषु पूर्वस्वरस्य यदानुनासिक्यं परमतत्वेनोक्तं, तत्र

[1] सं. ४-६-६. [2] स. २-२-११. [3] सं. २-३-१.
[4] ,, १-४-२०. [5] तीव्रम. [6] सं. ४-१-१०. [7] तीव्रतर.

पूर्वात्पूर्वादुत्तरोत्तरं तीव्रतरं शीघ्रतरमिति स्थविरः कौण्डिन्यो मन्यते । अतोऽन्यत्र समम् । 'ये वा वनस्पतीꣳ रनु'[1] इति-रेफभावात्पूर्वस्य तीव्रप्रयत्नः । 'विश्वाꣳ श्च देवान्'[2] । 'ऋतूꣳ-स्तन्वते'[3] इत्यूष्मभावात्पूर्वस्य तीव्रतरः[4] । 'अग्ने महाꣳ असीत्याह'[5] इति यकारभावात्पूर्वस्य मध्यमः । 'अग्ने महाꣳ असि'[5] इत्यादौ यलोपात्पूर्वस्य तीव्रः । 'प्रत्युष्टꣳ रक्षः'[3] इत्यत्र मलोपात्पूर्वस्य तीव्रतर इति । नेदं सूत्रद्वयमिष्टम् ॥ ४ ॥

—o—

## व्यञ्जनकालश्च स्वरस्यात्राधिकः ॥ ५ ॥

चकारः स्थविरकौण्डिन्यमन्वादिशति । 'अत्र' अनुस्वारविधाने सानुनासिकस्वरस्य 'व्यञ्जनकालः' ह्रस्वार्धकालः 'अधिकः' स्यादिति स्थविरः कौण्डिन्यो मन्यते । यथा—'युञ्जाथाꣳ रासभं युवम्'[7] इत्यादि । अत्रेति[8] स्वरस्येति किं ? स्वादिपूत्तमेषु उत्तमलभावे चैतदधिककालविधानं मा भूदिति ॥ ५ ॥

अत्र आनुनासिक्यविषये तद्वतस्स्वरस्य व्यञ्जनकालाधिक्यं च भवति, अर्धमात्राधिक्यमिति यावत् । यथा—'पुनः कृण्वꣳ स्त्वा पितरम्'[9] इति ह्रस्वोऽध्यर्धमात्रः । 'महाꣳ इन्द्रो यः'[10] इति दीर्घः अर्धतृतीय[11]मात्रः। 'सुश्लोकाम् ४'[12] इति प्लुतोऽर्धचतुर्थमात्रः। यत्र स्वरस्यानुनासिक्यमिष्टं तत्रेदमिष्टम् । अन्यत्र नेष्टम् ॥ ६ ॥

—o—

[1] सं. ४-२-८. [2] सं. २-२-११. [3] सं. ४-३-११.
[4] अणुः. [5] ,, २-५-९. [6] ,, १-१-४.
[7] सं. ४-१-२. [8] अत्रैव. [9] ,, ४-७-१३.
[10] ,, १-४-२०. [11] द्वितीय. [12] ,, १-८-१६.

## स्वारविक्रमयोर्दृढप्रयत्नतरः पौष्करसादेः॥६

स्वारे विक्रमे च प्रयोगः 'पौष्करसादेः' मते 'दृढप्रयत्न-तरः' भवति । 'स्वारः' स्वरित इत्यर्थः । 'विक्रमो' नाम अनुदात्तविशेषः । यथा—'योऽस्य स्वोऽग्निः'[1] । 'आस्ये हविः प्रियम्'[2] । स्वारविक्रमयोरिति किं ? 'गां वाव तौ तत्'[3] । दृढः प्रयत्नो यस्यासौ दृढप्रयत्नः। अतिशयेन दृढप्रयत्नः 'दृढप्रयत्नतरः'॥६॥

स्वारः स्वरितः, विक्रमो नाम अनुदात्तविशेषः एकोनविंशाध्याये वक्ष्यते । तयोर्दृढप्रयत्नतरः प्रयोग इति पौष्करसादेः मतम् । स्वारः—"न दिव्यमिक्षेतव्य इति"[4] । 'तेऽब्रुवन्'[5] 'सूद्गाता'[6] । 'प्रउगम्'[7] । विक्रमः—'किं तत उच्छिष्यतीति'[8] । 'योनिश्शिक्यं यच्छिक्यात्'[9] । स्वरिते नैतदिष्टम् । किन्तु स्वाराध्याये वक्ष्यमाण एव विक्रमे त्वेतदिष्टमेव, कार्यार्थत्वाद्विक्रमसंज्ञायाः ॥६॥

---

## प्रयत्नविशेषात्सर्ववर्णानामिति शैत्यायनः॥

'सर्ववर्णानां' प्रयोगस्त्वोचित*प्रयत्नविशेषात् दृढप्रयत्नतरो भवतीति 'शैत्यायनः' मन्यते । यथा—'इषे त्वा'[11] इत्यादि । नैतानि सप्त सूत्राणीष्टानि ॥ ७ ॥

---

1 स. ५-७-९. 2 सं. ३-३-११. 3 स. १-७-२. 4 सं. ५-२-७.
5 ,, २-५-१. 6 ,, ७-१-८ 7 ,, ४-४-२. 8 ,, २-६-८.
9 ,, ५-६-९. 10 प्रयोगस्योचित. 11 ,, १-१-१.

विशेषोऽतिशयः । ल्यब्लोपे पञ्चमी । प्रयत्नातिशयमाश्रित्य सर्ववर्णानां प्रयोगः कार्य इति शैत्यायनो मुनिर्मन्यते । आनुनासिक्ये तु पूर्वोक्तैव क्लृप्तिः । 'इषे त्वोर्जे त्वा' । नेदं सूत्रमिष्टम् ॥

---

नातिव्यक्तं न चाव्यक्तमेवं वर्णानुदीरयेत्।[1]
पयःपूर्णमिवामत्रꣳ हरन्धीरो यथामति ॥
इत्यात्रेय आत्रेयः ॥ ८ ॥

'अतिव्यक्तम्' अतिस्पष्टं 'अव्यक्तम्' अस्पष्टं च यथा 'न, भवति 'एवं' 'वर्णान्' 'उदिङ्गयेत्' उच्चारयेदित्यर्थः । 'पयःपूर्णमिवामत्रं' क्षीरपरिपूरितं भाजनं 'हरन्निव' 'यथामति' मतिमनतिक्रम्य वर्तमानः धीरः अध्येता भवेत् 'इत्यात्रेयः' मन्यते ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे सप्तदशोऽध्यायः.

शिक्षोक्तं स्वमतमाह—

यथा क्षीरस्य पूर्णभाजनं वहन् पुरुषो धीरस्समाहितमनाः सन् नातिशीघ्रं गच्छति न चातिमन्दम्, एवं वेदस्य प्रयोक्ता पुरुषः प्रयत्नातिशयेन वर्णान्नातिव्यक्तमुच्चारयेत्, न च प्रयत्नापचयेनाव्यक्तम्, किन्तु मध्यमेन प्रयत्नेन प्रयुञ्जीत । एवमव्यक्तातिव्यक्ती न भवतः ॥ ननु कस्यचित् तीव्रः प्रयत्नः अन्यस्य

[1] 'वर्णानुदिङ्गयेत्' इति त्रिभाष्यरत्नपाठः.

मध्यमो भवति, कस्यचिन्मन्दः प्रयत्नः अन्यस्य मध्यम इत्येव-मापेक्षिकत्वात्कथं साम्प्रतिकावधारणमिति? अत्रेदमुच्यते—यथामतीति, यथा प्रयोक्तुर्मतिर्भवति अयमेव पक्षः साम्प्रतिकः प्रयत्न इति तथा स प्रयोक्ता[1] स्वशक्त्यनुरूपं प्रयुञ्जीत[2]। न तु परशक्त्यपेक्षया साम्प्रतिकावधारणं सम्भवतीति। आत्रेयग्रहणं पूजार्थम् ॥ ८ ॥

इत्याचार्यगार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये प्रातिशाख्यव्याख्याने सप्तदशोऽध्यायः.

---

1 यथा स्वप्रयत्नोक्त्या. 2 प्रयुञ्जीरन्.

# अष्टादशोऽध्यायः.

## ओकारं तु प्रणव एकेऽर्धतृतीयमात्रं ब्रुवते ॥

'प्रणवे' 'ओकारम्' 'अर्धतृतीयमात्रम्' 'एके ब्रुवते' एके आचार्याः अर्धतृतीयमात्रमाहुः इत्यर्थः । अर्धं तृतीयं ययोस्ते अर्धतृतीये अर्धतृतीये मात्रे यस्यासौ अर्धतृतीयमात्रः । यथा—'समुद्रो बन्धुः ओम्'[1] । 'येम्यश्चैनत्प्राहुः ओम्'[2] । 'ओं इषे त्वा'[3] । 'ओं ब्रह्म सन्धत्तम्'[4] । कालनिर्णयेऽप्येवं वर्णितम्—

स्वाध्यायारम्भशेषस्य प्रणवस्य स्वरस्य च ।
अध्यायस्यानुवाकस्यान्ते स्यादर्द्धतृतीयता ॥

तुशब्दस्य प्रयोजनमुच्यते—

सन्ध्यक्षराणां वेदं च[5] प्रणवं चान्तरा तथा ।

इति कालनिर्णये, 'सन्ध्यक्षराणां ह्रस्वा न सन्ति' इति पाणिनीयेऽपि, ओकारमात्रस्य दीर्घकालो निरूपितः । इह तु प्रणवस्यत्वविशेषणादसौ कालो निषिद्ध्यते ।

वेदस्य[6] प्रणवे तु स्यात् समकाल[7]द्विमात्रता ।

इति प्रणवविशेषे कालविशेषः[8] प्रत्येतव्यः ॥ १ ॥

---

[1] स. ७-५-२६. [2] ब्रा. ३-१२-१. [3] सं. १-१-१.
[4] ब्रा. १-१-१. [5] वेदे च. [6] वेदस्य. [7] समकारो.
[8] प्रणवस्य विशेषकालः.

इदानीमध्ययनारम्भार्थस्य ओंकारस्य प्रयोगो वक्ष्यते—

प्रणूयते प्रस्तूयते प्रारभ्यतेऽनेन वेद इति प्रणवः ओङ्कारः। तस्मिन् य ओकरः तमेके आचार्या अर्धतृतीयमात्रं भणन्ति। अर्धं तृतीयं यासां मात्राणां ता अर्धतृतीयाः। तावत्यो मात्रा यस्य स तथोक्तः। तदेतच्छिक्षाकारोक्तं परमतत्वेनोपन्यस्तम्। कुतः? ब्रुवत इत्यात्मनेपदनिर्देशात्। कर्त्रभिप्राये हि क्रियाफले आत्मनेपदादेशस्स्मर्यते। अतो न तत्परेषामुपकरोति। स्वमते तु त्रिमात्रः। तदुक्तं मूलशास्त्रे—'ओमभ्यादाने'[1] अचः[2] प्लुत उदात्त इति। तुशब्दो यथाप्राप्तं कृत्स्नस्योकारस्य[3] त्रिमात्रत्वं निवर्तयति। तथाचार्धतृतीयमात्रस्वरत्वं विकथा[4]निमित्तस्य समाप्तिनिमित्तस्य चाभिमतमिति ध्वन्यते ॥ १ ॥

---

## उदात्तानुदात्तस्वरितानां कस्मिंश्चिदिति शैत्यायनः ॥ २ ॥

उदात्तानुदात्तस्वरितानां मध्ये 'कस्मिंश्चित्' स्वरे प्रणवः प्रयोक्तव्य इति 'शैत्यायनः' मन्यते। यथा—'ओम्' ॥ २ ॥

वेदारम्भार्थे ओङ्कारे य ओकारः स खलु उदात्तानुदात्तस्वरितानामन्यतमे स्वरे प्रयोक्तव्य इति स्वरविकल्पं शैत्यायनो मन्यते ॥ २ ॥

---

## धृतः प्रचयः[5] कौण्डिन्यस्य ॥ ३ ॥

---

[1] पा. ८-२-८७. [2] अतः. [3] कृत्स्नस्योकारस्य. [4] विकत्था.

[5] धृतप्रचय इति त्रिभाष्यरत्नपाठः.

कौण्डिन्यस्य मते प्रणवो 'धृतप्रचयः' भवति । चतुर्थः स्वरो 'धृतप्रचयः' इति कथ्यते । ननु—'प्रचयपूर्वश्च कौण्डिन्यस्य' (१९–२) इतिवत् प्रचय इत्येतावतैवालम्, किं धृतशब्देन? मैवम् । पदद्वयेनाप्यनेन नामधेयमेवाभिधीयते । तथा हि—अर्थभेदाभावेऽपि प्रयोगभेदोऽस्तीति प्रयोगचातुर्यमाचार्यः प्रकटयति । यथा—"भीमसेनो भीमः, सत्यभामा सत्या, पिधानमपिधानं, दीपः प्रदीपः" इत्यादि ॥ ३ ॥

कौण्डिन्यस्य मते ओकारस्य धृतापरपर्यायः प्रचयोनाम स्वरो भवति । प्रचयलक्षणं वदति—"उदात्तश्रुतिः" (२१-१०) इति । तस्योदात्तवच्छ्रूयमाणस्य सूक्ष्मः कश्चिद्विशेषो धृतसंज्ञाभिधानमुखेन प्रदर्श्यते । क्रुष्टादीनां सप्तानां स्वराणां मध्ये तृतीयाख्यो यो मध्यमस्वरस्तस्य धृत इत्यन्वर्थसंज्ञा । क्रुष्टप्रथमद्वितीया उत्क्षेपिणः । चतुर्थमन्द्रातिस्वार्या अपक्षेपिणः । तृतीयस्तु उभयरहितो मध्ये लीयमान[1]त्वाद्धृतसंज्ञः । उदात्तस्तु किञ्चिदुत्क्षिप्यत इति धृतोदात्तयोरीषद्विशेषः । अत एव 'उदात्तश्रुतिः' (२१-१०) इति उदात्तस्येव श्रुतिः प्रचयस्येति इवार्थ उपपद्यते । वक्ष्यति च—'मन्द्रादयो द्वितीयान्ताश्चत्वारस्तैत्तिरीयकाः' (२३–१९) इति । उदात्त इति चान्वर्थसंज्ञा उत्क्षेपणनिमित्तवतः[2] । तस्मादेतावानुदात्तप्रचययोर्भेद इति प्रकटनार्थं धृत इति विशेषणम् । प्रणवे तु कौण्डिन्यशैत्यायनयोर्मते अनिष्टे ॥ ३ ॥

---

[1] मध्ये स्थितस्समान.  [2] निमित्तैव.

## मध्यमेन स वाक्प्रयोगः ॥ ४ ॥

प्रयुज्यत इति 'प्रयोगः'। 'मध्यमेन' उच्चनीचसमाहारविलक्षणेन स्वरेण प्रणवः प्रयोक्तव्यः। यत्र क्वचन वाचस्स्थाने 'प्रयोगः' भवति। 'सः' इति कौण्डिन्याभिमतः पूर्वोक्तो गृह्यते। वाचि प्रयोगो 'वाक्प्रयोगः' ॥ ४ ॥

वाचः प्रयोगो वाक्प्रयोगः। स खलु प्रणवात्मको वाक्प्रयोगो मध्यमेन स्वरेण कर्तव्यो न प्लुतेन नापि मन्द्रादिभिः ॥



## स्वरितः प्लाक्षिप्लाक्षायणयोः ॥ ५ ॥

'प्लाक्षिप्लाक्षायणयोः' पक्षे प्रणवः 'स्वरितः' भवति। नैतत्सूत्रचतुष्टयमिष्टम् ॥ ५ ॥

प्लाक्षिप्लाक्षायणयोर्मते प्रणवः स्वरितः प्रयोक्तव्यः*। नेदं सूत्रमिष्टम् ॥ ५ ॥



## उदात्तो वाल्मीकेः ॥ ६ ॥

वाल्मीकेः मते प्रणवः 'उदात्तः' भवति ॥ ६ ॥

वाल्मीकेर्मते प्रणव उदात्तः प्रयोक्तव्य इति ॥ ६ ॥

*इद वचनं आरण्यके काण्डप्रश्ने 'ओं तद्ब्रह्म' (आ. ६-२९) इत्यनुवाके तदादिषु परत एव प्रणवस्स्वर्यते। तत्रैवेष्ट नान्यत्र। तदुक्तं भवति शिक्षायां—'यजुःप्रणव उच्चस्स्यात् स्वारास्स्युस्तो तदादिषु' इति। इत्यधिकः पाठः.

## यथाप्रयोगं वा सर्वेषां यथाप्रयोगं वा सर्वेषाम् ॥ ७ ॥

यथाप्रयोगशब्देन उदात्तोऽभिधीयत इति माहिषेयपक्षः। प्रणवं 'यथाप्रयोगम्' 'वा' कुर्यादिति 'सर्वेषां' ऋषीणां मतम्। वररुचिपक्षस्तु वक्ष्यते—अध्येष्यमाणं 'यथाप्रयोगं' यथाविधस्वरं तथाविधेन वा स्वरेण प्रणवः प्रयोक्तव्य इति 'सर्वेषाम्' मतमिति। यथा—'इषे त्वा'[1] इत्यनेनाध्येष्यमाणानुदात्तेन प्रणवोऽप्यनुदात्तः। 'आप उन्दन्तु'[2] इत्युदात्तेनोदात्तः। 'व्यृद्धम्'[3] इति स्वरितेन स्वरितः। नेदं सूत्रमिष्टम् ॥ ७ ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे अष्टादशोऽध्यायः.

तत्तच्छाखाध्यायिनः पूर्वे शिष्टतमाः येनयेन स्वरेण आरम्भार्थमोङ्कारं प्रयुञ्जते, तेनतेनैवाध्यापितव्यव्यवस्थया प्रयोक्तव्य इति सर्वेषामाचार्याणां मतम् ॥ ७ ॥

इत्याचार्यगार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये प्रातिशाख्यव्याख्याने अष्टादशोऽध्यायः.

---

[1] सं. १-१-१. [2] सं. १-२-१. [3] सं. ५-१-२.

# एकोनविंशोऽध्यायः

**स्वरितयोर्मध्ये यत्र नीचं स्यादुदात्तयोर्वाऽन्यतरतो वोदात्तस्वरितयोः स विक्रमः ॥ १ ॥**

'यत्र' स्थले 'स्वरितयोर्मध्ये' 'उदात्तयोर्वाऽन्यतरतो वा' इति स्वरितोदात्तयोर्वेत्यर्थः, 'उदात्तस्वरितयोः' वा मध्ये 'नीचं' यदक्षरं 'स विक्रम संज्ञः' भवति । स्वरितयोर्मध्ये यथा—'योऽस्य स्वोऽग्निस्तमपि'[1] । उदात्तयोर्यथा—'वोढवे'[2] । स्वरितोदात्तयोर्यथा—'धन्वना गाः'[3] । उदात्तस्वरितयोर्यथा—'तस्य क्व सुवर्गो लोकः'[4] । विक्रमसंज्ञायाः प्रयोजनं—'स्वारविक्रमयोर्दृढप्रयत्नतरः' (१७–६) इति ॥ १ ॥

इदानीं विक्रमाख्योऽनुदात्तविशेषो लक्ष्यते—

यत्र स्वरितयोरक्षरयोर्मध्ये नीचमनुदात्तमक्षरं स्यात्, उदात्तयोः मध्ये वा नीचं स्यात्, अन्यतरतः एकतरस्मिन् वा समीपे उदात्तस्वरितयोः सतोर्मध्ये नीचं स्यात्स नीचस्वरो विक्रमसंज्ञो भवति । स्वरितयोः—'तावानुक्थ्यः'[5] । उदात्तयोः—'इषे त्वोर्जे त्वा'[6] । अन्यतरतो वेत्यत्र द्विधाऽन्वयः स्वरितपूर्वकतया उदात्तपूर्वकतया वा इति । 'नास्येन्द्रियं वीर्यं वृङ्क्ते'[7] । एवमिति किम्? 'वरिमा च मे प्रथिमा च मे'[8] । संज्ञायाः प्रयोजनम्. "स्वारविक्रमयोः दृढप्रयत्नतरः" (१७–६) इत्युक्तम्[9] ॥ १ ॥

---

[1] सं. ५-७-६.   [2] सं. १-६-२.   [3] सं. ४-६-६.
[4] ,, २-६-५.   [5] ,, १-६-९.   [6] ,, १-१-१.
[7] ,, २-२-६.   [8] ,, ४-७-२.   [9] इत्युदात्तस्स विक्रम इति.

## प्रचयपूर्वश्च कौण्डिन्यस्य ॥ २ ॥

चशब्दो विक्रम इति ज्ञापयति । कौण्डिन्यस्य मते उदात्तपरः स्वरितपरो वा 'प्रचयपूर्वश्च' विक्रमो विज्ञेयः । उदात्तपरो यथा—'पर्यवदतां या'[1] । स्वरितपरो यथा—'उपरिष्टाछ्लक्ष्मा याज्या'[2] । प्रचयः पूर्वो यस्मादसौ 'प्रचयपूर्वः' ॥२॥

पूर्वोक्तविधया[3] उदात्तस्वरितपरः प्रचयपूर्वको योऽनुदात्तः स च विक्रम इति कौण्डिन्यस्य मतम । 'अवधूतꣳ रक्षः'[4] । 'खनितुं पुरीष्यम्'[5] । एवमिति किम् ? 'उपयामगृहीतोऽसि'[6] । नेदं सूत्रमिष्टम् ॥ २ ॥

---

## द्वियम एके द्वियमपरे ता अणुमात्राः ॥३॥

यमशब्दः स्वरितपर्यायः । द्वौ यमौ यत्र देशे नैरन्तर्येण वर्तेते, स 'द्वियमः' तस्मिन्, द्वियमः परो यस्मादसौ 'द्वियमपरः' तस्मिश्च त्रियमे[7] सति याः स्वरितप्रकृतयः 'ताः' सर्वा अन्ततः 'अणुमात्राः' अभिनिहता भवन्तीति 'एके' मन्यन्ते । द्वियमे यथा—'तेऽꣳन्योन्यम्'[8] । द्वियमपरे यथा—'सोऽꣳपोऽꣳभ्यम्रियत'[9] । अन्तत इति कथं प्रतीयते 'पदान्ते

---

[1] सं. १-५-२. [2] सं २-६-२. [3] पूर्वोक्तविपये.
[4] „ १-१-६. [5] „ ४-१-२. [6] सं. १-७-१२.
[7] द्वियमपरे. [8] „ ६-१-५. [9] „ ६-१-१.

च तथा कम्पा अन्ततो निहताणुकाः' इति वचनादिति ब्रूमः। निहतं तु[1] 'स्वरितयोर्मध्ये यत्र नीचम्' (१९-१) इत्येतत्सान्निध्यात् लभ्यते। शिक्षा चैवं वक्ष्यति—

नित्योऽभिनिहतश्चैव क्षैप्रः प्रश्लिष्ट एव च।
एते स्वाराः प्रकम्पन्ते यत्रोच्चस्वरितोदयाः।

शेषयोदात्तता वा स्यात् स्वारता वा व्यवस्थया॥ इति॥ व्यवस्थाशब्देनानेन द्विविधः कम्प उक्तः। संहितायां स्वरितकम्पः इतरवेदभागे उदात्तकम्प इति ये कम्पाः प्रसिद्धाः तेष्वेतल्लक्षणं न तु कम्पविधायकम्। अन्यथा 'योऽपां पुष्पम्'[2] इत्यादौ कम्पः प्रसज्येत। नेदं सूत्रमिष्टम्॥ २॥

**यमशब्दस्स्वरवाची[3]। द्वौ यमौ समाहृतौ यस्मिन्स खलु स्वरितस्वरो द्वियम उच्यते। तस्मिन् स्वरितपरे एके आचार्याः शिक्षाकाराः नीचमिच्छन्ति। तत्किं कृत्स्नस्य पूर्वस्वरितस्य नीचत्वमिष्यते? नेत्युच्यते। ता अणुमात्राः, ताश्च नीचप्रकृतयोऽणुपरिमाणा भवन्ति। अणुर्नाम ह्रस्वकालस्य चतुर्थोऽशः॥**

**"ह्रस्वस्वरूपं विज्ञेयं चतुर्भिरणुभिस्तथा"[4] इति शिक्षाकारवचनात्। तथा च स्वरितात्पूर्वस्य स्वरितस्यान्ते पादमात्रं नीचं भवतीति सिद्धम्[5]॥**

---

[1] निहतत्व तु. [2] तै. आ. १-२२. [3] स्वरितवाची.
[4] चतुर्भिरणुभिर्मात्रापरिमाणमिति स्मृतम्। इत्यधिकपाठः.
[5] 'पदान्ते च यथा कम्पा अन्ततो निहताणुकाः' इति.

अस्मिन्[1] विषये ह्रस्वस्वारितोऽपि द्विमात्रो भवति,
अदीर्घे दीर्घवत्कुर्यात् द्विस्वरं यदि दृश्यते।

इति शिक्षावचनात्, स खल्वनुदात्तांशः कम्प इत्युच्यते। तस्य यद्यप्यणुमात्रत्वमिहोच्यते, तथाऽप्युच्चारणदैर्घ्यात्[2] ततः पूर्वांशस्य कालः कम्पग्रासादधिककाल उच्चार्यते[3]। तदुक्तं शिक्षायाम्—

स्वाराः कम्पाश्च रङ्गाश्च ये यत्कालास्स्वभावतः।
वर्धन्ते प्रोच्यमानास्ते क्षिप्रयत्नेऽपि वक्तरि॥ इति॥

तद्यथा—'पितृदेवत्या२ऽ ह्येतत्'[4]। 'देवा वा इन्द्रियं वीर्या२ऽव्यभजन्त'[5]। 'तेऽन्योन्यमुपाधावन्'[6]। 'बहुदेवत्यो३ऽग्निः'[7]। 'उदात्तपरोऽनुदात्तः' (१४-२९) इत्यस्य तु स्वरितस्य स्वरितपरत्वं[8] न भवति, 'नोदात्तस्वरितपरः' (१४-३१) इति निषेधात्. अत एवोक्तं शिक्षायाम्—

नित्योऽभिनिहतश्चैव क्षैप्रः प्रश्लिष्ट एव च।
एते स्वाराः प्रकम्पन्ते यत्रोच्चस्वरितोदयाः।
शेषस्योदात्तता वा स्यात् स्वारता वा व्यवस्थया॥ इति॥

—※※※—

## तस्यामेव प्रकृतौ॥ ४॥

द्वियमस्थले पूर्वस्यामेव 'तस्यां' स्वरितप्रकृतावणुमात्रयाऽपि[9]

---

[1] यस्मिन्.
[2] तथाऽप्युच्चारणादी दीर्घवत्.
[3] कालं कम्पो ग्रसन् अधिक उच्चार्यते.
[4] सं. ६-२-१०.
[5] सं. ६-६-८.
[6] सं. ६-१-५.
[7] ,, २-१-६.
[8] स्वरितत्वं.
[9] मात्राया अपि.

निहतत्वं भवति । द्वियमपरे तु स्थले पूर्वयोरेव प्रकृत्योरणुमात्रया[1] निहतत्वं भवति । न तु ताः सर्वा अणुकार्यभाज इत्येवकारो बोधयति । एवमेव कौहलेय आह—"द्वयोः पूर्वोऽणुमात्रिकास्त्रिषु पूर्वावणुमात्रिकावुत्तरः प्रकृत्येति" ॥ ४ ॥

नन्वत्रोदात्तपरस्यापि स्वरितस्य कम्पस्स्मर्यते । ततः 'अस्मिन्लोकेऽस्मिन्गोष्ठेऽस्मिन्'[2] इत्यादावपि कम्पस्स्यात् । तथाभूतात्कम्पांशात्पूर्वस्यांशस्य कुत्रोदात्तता कुत्र वा स्वरितत्तेति च न ज्ञायत इत्यत्राह—

अस्मत्संहितायां तस्यामेव स्वरितात्मिकायामेव प्रकृतौ[3] कम्पो भवति । तथाभूता[4]त्कम्पांशात्पूर्वांशस्तु तस्यामेव स्वरितप्रकृतौ अवतिष्ठते । यत्तूदात्तपरस्य स्वरितस्य कम्पत्वं कम्पात्पूर्वांशस्योदात्तत्वं च शिक्षायां स्मर्यते तत् कूश्माण्डादिविषयं शाखान्तरविषयं च वेदितव्यम् । यथा—'तेऽऽस्मद्यक्ष्ममनागसः'[5] । 'अहमन्नादोऽ२हमन्नादोऽ२हमन्नादः'[6] इत्यादि तत्रैव द्रष्टव्यम् । कम्पस्यापि विक्रमसंश्लेष्यते, अस्मिन्नध्याये तदुपदेशात् ॥ ४ ॥



## न पूर्वशास्त्रे न पूर्वशास्त्रे ॥ ५ ॥

'पूर्वशास्त्रं' नाम विक्रमविधिः । तस्मिन्नेतदणुकार्यं न भ-

[1] मात्रायाः.
[2] स. १-५-६.
[3] प्रकृतौ परतः.
[4] तथाऽणुमात्रात्.
[5] आ. २-४.
[6] आ. ५-१५.

वति । एवं वा सूत्रार्थः—पूर्वशास्त्रे अध्यायप्रथमसूत्रे या विक्रमसंज्ञा उक्ता, सा कम्पविधावत्र न भवति । विक्रमस्य दृढप्रयत्नत्वात्, कम्पस्य तदभावात् इति ॥ ९ ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे एकोनविंशोऽध्यायः.

नन्वस्मिन् स्वशाखोचितकार्यविधावनुपन्यस्तपूर्वपरमते एकेग्रहणं न युक्तमित्यत आह—

अस्य शास्त्रस्य मूलभूतं व्याकरणं पूर्वशास्त्रमित्युच्यते । तस्मिन् कम्पो न विधीयते । साक्षाच्छिक्षायां तु विधीयते । व्याकरणप्रधानं ह्येतच्छास्त्रम् । तस्माद्व्याकरणेभ्योऽन्ये शिक्षाकारा इहैक इति व्यपदिश्यन्ते । तथाचास्मिन् शास्त्रे विधीयमानानां कार्याणां विषयेषु व्याकरणोक्तकार्याणां संगृहीतत्वान्न तत्र व्याकरणोक्तो विशेषः परिग्राह्यः । शिक्षार्थस्य तु सर्वस्यात्रापरिगृहीतत्वादिहानुक्तमविरुद्धं कार्यं ततः परिग्रहीतव्यमिति सिद्धम् ॥ ५ ॥

इत्याचार्यगार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये प्रातिशाख्यव्याख्याने एकोनविंशोऽध्यायः ॥



# अथ विंशोऽध्यायः.

## इवर्णोकारयोर्यवकारभावे क्षैप्र उदात्तयोः ॥

उदात्तयोः 'इवर्णोकारयोः' यथोपदेशं 'यवकारभावे' सति स्वरितो यो विहितः स 'क्षैप्रः' इति संज्ञायते[1] । यथा—'व्येवैनेन'[2] । 'क्वधी स्वस्मान्'[3] । उदात्तयोरिति किं? 'वस्व्यसि'[4] । 'अन्वेनं विप्राः'[5] ॥ १ ॥

इदानीं स्वरितभेदानां प्रयत्नभेदविवक्षया तल्लक्षणान्युच्यन्ते—

इवर्णोकारयोरुदात्तयोः यवकारभावे यस्स्वरितो विहितः 'उदात्तयोश्च परोऽनुदात्तस्स्वरितम्' [१०-१६] इति, स खलु क्षैप्रसंज्ञो भवति । यथा—'विश्यस्मिन्राष्ट्रे'[6] । 'यन्त्र्यसि यमित्री'[7] । 'स्वध्वर्युस्सुसभेयः'[8] । 'दिव्यृभ्नुवन्ति'[9] । इवर्णोकारयोरिति किम्?[10] 'तेऽब्रुवन्'[11] । 'सोऽब्रवीत्'[12] । उदात्तयोरिति किम्? 'तान्यब्रुवन्'[13] । 'अन्वह मासाः'[14] ॥ १ ॥

---

[1] क्षैप्रसंज्ञो भवति. [2] सं. ५-३-१२. [3] सं. ४-७-१५.
[4] सं. १-२-५. [5] ,, ४-६-८. [6] ,, १-८-१२.
[7] ,, ४-३-७. [8] ,, ७-१-८. [9] ,, ३-६-१०.

[10] इवर्णोवर्णयोरिति किम? "त एनं भुवन्ते" (६-६-३) । "कुवित्सु नो गविष्टये" (२-६-११) "त युनक्ति" (६-४-१०) "संवदन्ते" (४-२-६) । यवकारभाव इति किम? "विश्वस्य भुवनस्य धत्रीं" (४-२-९) ।

[11] सं. २-५-१. [12] सं. २-१-२. [13] सं. २-४-१. [14] सं. १-७-१३.

**सयकारवकारं त्वक्षरं यत्र स्वर्यते स्थिते पदेऽनुदात्तपूर्वेऽपूर्वे वा नित्य इत्येव जानीयात् ॥ २ ॥**

'सयकारं वा सवकारं वा' 'अक्षरं' स्वर इत्यर्थः। स्थिते पदे पदकाल इत्यर्थः। 'यत्र' स्थले 'स्वर्यते 'अनुदात्तपूर्वे' 'अपूर्वे' वा पूर्वाभावे वा सति, सः 'नित्य एवेति' सर्वत्र 'जानीयात्'। सर्वत्रेति संहितापदजटास्वित्यर्थः। यथा— 'वायव्यम्'[1]। 'कन्येव तुन्ना'[2]। 'ततो बिल्वः'[3]। 'न्यञ्चं चिनुयात्'[4]। 'क्व जगती च'[5]। 'कास्यास्य क २ कास्य'[6] इति जटायाम्। तुशब्दो नित्यादावुच्चोदय[7]विषये 'नोदात्तस्वरितपर' (१४–३१) इति निषेधं निवारयति। ननु—नित्यः कथमेतन्निषेधविषयः 'उदात्तात्परोऽनुदात्तः' (१४–२९) इति लक्षणासम्भवात्। अत्रोच्यते—वर्णविभागवेलायामुदात्तपूर्वत्वमस्ति 'समाहारः स्वरितः' (१–४०) इत्युच्चपूर्वत्वात् स्वरितस्येति[8] निषेधविषयत्वम्। अनुदात्तश्चासौ पूर्वश्च अनुदात्तपूर्वः तस्मिन्। पूर्वाभावः अपूर्वः तस्मिन् शून्ये इत्यर्थः। स्थिते पदे इति किम्? 'व्येवैनेन'[9]। अनुदात्तपूर्व इति किम्? 'मर्त्यां३ आ-

[1] सं. १-८-७.  [2] सं. ३-१-११.  [3] सं. २-१-८.
[4] सं. ५-६-२.  [5] सं. ७-१-४.  [6] ,, ६-७-४.
[7] नित्यादावुच्चोदर्के.  [8] इत्युक्तत्वादुच्चपूर्वत्वमत एव स्वरितस्य.
[9] सं. ५-३-११.

विवेश'[1] । 'सर्वाँ॒ अग्नीन्'[2] । केचिदेवमाहुः—'उक्थ्योऽथ'[3] 'याज्यैवैनम्'[4] इत्यादि । प्रातिहतं निराकरोत्येवकारः पदसमये अनुदात्तपूर्वत्वात् पूर्वविशेषद्वयस्य[5] अन्यथा वैयर्थ्यात् । तस्मादत्र नित्यस्वरितत्वमेव न संज्ञान्तरमिति विज्ञेयम् ॥ २ ॥

स्थिते पृथगवस्थिते यत्र पदे अनुदात्तपूर्वं अनुदात्तानि स्वरितात्पूर्वाक्षराणि यस्य तस्मिन्, अपूर्वं वा अविद्यमानं स्वरितात्पूर्वमक्षरं यस्य तस्मिन् वा यवकारपूर्वमक्षरं स्वरितं दृश्यते, तत्रस्थः स्वरितः[6] नित्य इत्येव जानीयात् । यथासङ्ख्यं तु नेष्यते । अनुदात्तपूर्वं यथा—'उक्थ्यः'[7] । 'मनुष्यः'[8] । 'उपाध्याय्यपूर्वयम्'[9] । 'कुह्वे'[10] । 'वस्वीभिः'[11] । अपूर्वं यथा—'न्यङ् रश्मिभिः'[12] । 'क्वचो दास्यथ'[13] । 'न्यश्वम्'[14] । 'व्युप्तकेशाय'[15] । 'क्व तर्हि'[16] । 'यत् क्वलैः'[17] । सयकारवकारमिति नित्यस्वरूपप्रकटनार्थं विशेषणम् । तुशब्दोऽस्य वर्णान्तरपूर्वकत्वसम्भावनां निवर्तयति । अक्षरमिति पूर्वोक्तविशेषणस्य विशेष्यनिर्देशः । स्थिते पद इति किम्? "सद्योऽग्निः"[18] इत्यादौ नित्यता मा भूत् । अनुदात्तपूर्वं[19] किम्? 'पयस्वतीः'[20] । 'चक्रीवती'[21]

---

1 सं. ५-७-९. 2 सं. ५-६-१. 3 स. ७-१-६.

4 ,, २-३-५. 5 सपूर्वत्वापूर्वत्वविशेषणद्वयस्य.

6 तत्रस्थं स्वरितं. 7 सं. १-६-९. 8 सं. ६-३-२.

9 सं. २-२-११. 10 सं. १-८-८. 11 सं. ६-७-११.

12 ब्रा. ३-२-९. 13 स. २-४-१०. 14 सं ६-५-३.

15 ,, ४-५-६. 16 सं. ६-६-७. 17 ,, २-५-३.

18 ,, ५-६-३. 19 अनुदात्तपूर्वेऽपूर्वे चेति. 20 ,, १-१-१.

21 ,, ७-२-१.

इत्यत्र मा भूत्। नित्य इति निर्निमित्तत्वनिबन्धना संज्ञा। तदत्र "स्थिते पदे अनुदात्तपूर्वेऽपूर्वे वा" (२०-२) इति ग्रन्थेन प्रकटितम्। तथाहि न तावदयं स्वरितो नानापदीयनिमित्तकः, स्थिते पदे दर्शनात्। नापि समानपदस्थनिमित्तकः, पूर्वोदात्ताभावात्। पूर्वोदात्तो हि समानपदे स्वरितस्य निमित्तम्। न तु निर्विकारत्वनिबन्धनेयं संज्ञा, "स्वरितश्च सर्वत्र" (१२-११) इति विकाराभ्युपगमात्। एवकारः 'न्यङ्'[1]। 'व्युप्तकेशाय'[2] 'न्यश्चम्'[3]। 'कुह्व'[4] इत्यादौ क्षैप्रतामवधारयति। तत्र हि मूलशाखोक्तावयवविभागात् क्षैप्रता संभाव्यते। अस्मच्छास्त्रे तु पदकाल[5]परिकल्पितविभागसिद्धानामेव पदानां सन्धौ यवकारभावः क्षैप्रलक्षणमिष्यते। तस्मात् 'न्यङ्'[1]। 'न्यश्चम्'[3] इत्यादिस्वरिता अपि नित्या एव ॥ २ ॥

---

## अपि चेन्नानापदस्थमुदात्तमथ चेत्सांहितेन स्वर्यते स प्रातिहतः ॥ ३ ॥

अपिशब्दः पूर्वत्वमात्राकर्षकः। अथशब्दो नित्यसंज्ञाव्यवच्छेदकः, नानापदस्योदात्तपूर्वत्वाधिकारको वा। 'नानापदस्थं' अक्षरमुदात्तपूर्वं 'चेत्' परतः नीचं 'सांहितेन' विधिना 'स्वर्यते' 'चेत्' स प्रातिहतः वेदितव्यः। यथा—'मा ते अस्याम्'[6]। 'इषे त्वा'[7]। 'ते ते दुश्चक्षाः'[8]। सांहितेनेति किं? 'यज्ञचक्षम्'[9]। नानापदस्थमिति किं? 'तया देवतया'[10] ॥

[1] सं. २-४-१०. [2] सं. ४-५-५. [3] सं. ५-५-३.
[4] सं. १-८-८. [5] कार. [6] सं. १-६-१२.
[7] सं. १-१-१. [8] सं ३-२-१०. [9] सं. ६-६-३.
[10] सं. ४-२-६.

उदात्तान्नानापदस्थोऽपि[1]स्वरस्संहिताभावेन विधाना[2]त्स्वर्यते यस्स्वरितः स प्रातिहतसंज्ञो भवति । 'मा वस्स्तेन ईशत'[3] 'नास्माद्राष्ट्रम्'[4] । 'नक्तं नाध्यासते'[5] । 'नास्येन्द्रियं वीर्यम्'[6]। नानापदेति किम्? 'श्रेष्ठतमाय कर्मणे'[3] । स्थमिति किम्? 'इपर्ह् ह्यासाम'[7] । सांहितेनेति किम? 'यत्स्वलैः'[8]। 'तया वै सोऽग्नेः'[9] ॥ ३ ॥

---

## तस्मादकारलोपेऽभिनिहतः ॥ ४ ॥

'तस्मात्' नानापदस्थोदात्तात् परभूतस्यानुदात्ताकारस्य 'लोपे' सति यः स्वरितः सः 'अभिनिहतः' वेदितव्यः । यथा—'सोऽब्रवीत्'[10] । 'तेऽब्रुवन्'[11] । तस्मादिति किं? 'प्राणोऽसि देवानाम्'[12] ॥ ४ ॥

तस्मान्नानापदस्थोदात्तात्परस्याकारस्य लोपे निमित्ते यस्स्वरितो विहितः "तस्मिन्ननुदात्ते पूर्व उदात्तस्स्वरितम्", (१२–९) इति स खल्वभिनिहतसंज्ञो भवति । 'तया वै सोऽग्नेः'[9] । 'तेऽब्रुवन्'[11] । 'योऽस्य स्वोऽग्निः'[13] । तस्मादिति किम? 'ते नोऽवन्तु'[14] अकारलोप इति किम? 'ते नः पान्तु'[14] । 'सूक्षीयामिव'[15] ॥ ४ ॥

—o—

[1] उदात्ते नानापदस्थेऽपि. [2] विधिना.

[3] सं. १-१-१. [4] सं. ६-१७-४. [5] सं. ५-६-४.
[6] ,, २-२-९. [7] ,, ७-१-९. [8] ,, २-५-३.
[9] ,, ५-२-१. [10] ,, २-१-२. [11] ,, २-५-१.
[12] ,, २-४-३. [13] ,, ५-७-९. [14] ,, ३-२-३.
[15] ,, ६-२-४.

## ऊभावे प्रश्लिष्टः ॥ ५ ॥

'ऊभावे' यत्र स्वर्यते सः 'प्रश्लिष्टः' वेदितव्यः । 'सून्नीयमिव'[1] । 'सूद्गाता'[2] । 'मासूत्तिष्ठन्'[3] । 'दिक्षूप दधाति'[4] ॥ ५ ॥

तस्मात्नानापदस्थोदात्तादूभावे, यः स्वरितो विहितः "ऊभावे च" (१०-१७) इति, स प्रश्लिष्टसंज्ञो भवति । 'सून्नीयमिव'[1] । 'मासूत्तिष्ठन्'[3] । तस्मादिति किम् ? 'प्राजापत्या सूपहव्यः'[5] । ऊभाव इति किम् ? 'तन्नस्सꣳस्कृतम्'[6] । 'तेऽब्रुवन्'[7] ॥५॥

---

## पदविवृत्त्यां पादवृत्तः ॥ ६ ॥

पदयोर्विवृत्तिः पदविवृत्तिः तस्यां यः स्वर्यते सः 'पादवृत्तः' वेदितव्यः । यथा—'ता अस्मात्'[8] । 'स इधानः'[9] । 'य उपसदः'[10] । 'विवृत्तिः' व्यक्तिरित्यर्थः । पदयोरिति किं? 'प्रउगमुक्थम्'[11] ॥ ६ ॥

पदे विवृत्तिः पदविवृत्तिः । स्वरयोरसन्धि[12]र्विवृत्तिः । पदमध्यवर्तिन्याः विवृत्तेरुपरि यस्स्वरितः, स खलु पादवृत्तसंज्ञो भवति । 'प्रउगमुक्थम्'[11] । पदेति किम् ? 'य ईजानः'[13] ॥

---

1 सं. ६-२-४. 2 सं. ७-१-८. 3 सं. ७-६-२.
4 ,, ५-५-५. 5 ७-२-६. 6 ,, १-४-४३.
7 ,, २-६-१. 8 सं. २-१-२. 9 ,, ४-४-४.
10 ,, ६-२-४. 11 ,, ४-४-२. 12 स्वरयोरसन्धि.
13 ,, ३-४-६.

नन्वयमपि पादवृत्त एव, पदयोर्विवृत्तिः पदविवृत्तिरिति व्युत्पत्तेः। नैतदस्ति, पदयोर्विवृत्तौ स्वरितस्य प्रातिहतलक्षणग्रस्तत्वात् न चायं तस्यापवाद इति युक्तम्, इहासंकीर्णलक्षणप्रणयनात्। विधेर्ह्यपवादः न लक्षणस्य । न हि लक्षणमतिव्याप्तं कुर्वन्त्याचार्याः । अथापि[1] कथंचित्प्रातिहतस्यावान्तरभेदत्वं पादवृत्तस्य कल्प्यते । तन्न । अबाधेनोपपत्तौ बाधस्यान्याय्यत्वात्, तदनन्तरानुपदेशाच्च ॥ ६ ॥

---

## उदात्तपूर्वस्तैरोव्यञ्जनः ॥ ७ ॥

उदात्तपूर्वाधिकारे सति पुनरत्र तत्कथनादेकपदस्थोदात्तविशेषोऽवगम्यते[2] । तस्मादेकपदस्थोदात्तपूर्वो यः स्वरितः स तैरोव्यञ्जनो वेदितव्यः । यथा—'युञ्जन्त्यस्य'[3] । 'वस्यसि'[4] । 'स इन्द्रोऽमन्यत'[5] । 'तदश्वोऽभवत्'[6] । 'प्रउगम्'[7] । 'तं त्वष्टाऽऽधत्त'[8] ॥

तैरोव्यञ्जन इत्यन्वर्थसंज्ञा । पदशब्दोऽत्रानुवर्तते । पदे समानपदे उदात्तपूर्वको व्यञ्जनव्यवहितो यस्स्वरितः, स तैरोव्यञ्जनसंज्ञो भवति । यथा—'इमां वाचमभि विश्वे गृणन्तः'[9] । पद इति किम्? "तन्नस्सꣳस्कृतम्"[10] । उदात्तपूर्व इति किम्? "उक्थ्यं कुर्वीत"[11] । व्यञ्जनव्यवहित[12] इति किम्? 'प्रउगम्'[7] ॥

---

[1] तथाऽपि.
[2] पदस्थत्वविशेषोऽभिगम्यते.
[3] सं. ७-४-२०.
[4] सं. १-२-६.
[5] सं. ७-१-६.
[6] „ ६-२-१२.
[7] „ ४-४-२.
[8] „ १-६-१.
[9] „ १-१-१३.
[10] „ १-४-४३.
[11] „ ३-१-७.
[12] अन्वर्थसंज्ञया.

## इति स्वारनामधेयानि ॥ ८ ॥

'इति' एतानि सप्त स्वरितनामधेयानि व्याख्यातानि । यथा— 'अभ्यस्थात्'[1] 'अध्वर्यो वेः'[2] इति क्षैप्रः । 'वायव्यम्'[3] 'क्वास्य'[4] इति नित्यः । 'स ते लोकः'[5] 'यत्त्वा क्रुद्धः'[6] इति प्रातिहतः । 'सोऽब्रवीत्'[7] इत्यभिनिहतः । 'सूद्गाता'[8] इति प्रश्लिष्टः । 'त एनम्'[9] इति पादवृत्तः । 'मम नाम'[10] इति तैरोव्यञ्जनः ॥ ८ ॥

ननु स्वरितानां नित्यो नैमित्तिकश्चेति द्वावेव भेदौ । अथावान्तरभेदकल्पनया भेदबहुत्वम्? तदा सप्तभ्यो भूयांसोऽपि भेदास्स्युरित्यत आह—

एतावन्ति स्वरितानां नामधेयानि पूर्वशास्त्रप्रसिद्धानि । अतस्तदनुसारेण सप्तानां भेदानां लक्षणानि[11] । पूर्वशास्त्रेषु तु तथोपदेशस्य कारणं तत्रैव द्रष्टव्यम् ॥ ८ ॥

—o—

## क्षैप्रनित्ययोर्दृढतरः ॥ ९ ॥

क्षैप्रे नित्ये च प्रयत्नो दृढतरः कार्यः ॥ ९ ॥

---

1 सं. ४-२-८. 2 सं ६-४-३. 3 सं. १-८-७.
4 [illegible] ५-७-४. 5 ,, ५-७-२६. 6 सं. १-५-४.
7 ,, २-१-२. 8 ,, ७-१-८. 9 ,, २-३-११.
10 ,, १-५-१०. 11 प्रणीतानीत्यधिक.

क्षेप्रे नित्ये च स्वरिते दृढतरप्रयत्नः कार्यः[1] । 'व्यूर्द्धं वा एतत्'[2] । 'उक्थ्यं कुर्वीत'[3] ॥ ९ ॥

---

## अभिनिहते च ॥ १० ॥

अन्वाचये वर्तमानः च कारो दृढमात्रं बोधयति । 'अभिनिहते' प्रयत्नो दृढः स्यात् । न तु दृढतर इति पृथक्सूत्रारम्भात् प्रतीयते ॥ १० ॥

चशब्दो दृढतर इत्यन्वादिशति । पृथक्सूत्रकरणं अनित्यत्वज्ञापनार्थम् । यथा व्याकरणे—'चुटू' (पा. १-३-७.) इति । तेनानुदात्तपूर्वक एवाभिनिहते दृढतरः प्रयत्नः कार्यः । उदात्तपूर्वेऽपूर्वे च[4] दृढ एव । 'आदित्योऽस्मिन्'[5] इति दृढतरः । 'तेन वै ते प्रति'[6] । 'योऽग्नि॰ होतारम्'[7] । 'तया वै सोऽग्नेः'[8] । 'तेऽब्रुवन्'[9] इति दृढः ॥ १० ॥

---

## प्रश्लिष्टप्रातिहतयोर्मृदुतरः ॥ ११ ॥

प्रश्लिष्टे प्रातिहते च प्रयत्नो मृदुतरः कार्यः ॥ ११ ॥

प्रश्लिष्टे प्रातिहते च मृदुतरः प्रयत्नः कर्तव्यः । दृढप्रति॰

---

[1] अनुदात्तपूर्वेऽपूर्वे च । 'विश्वस्मिन्' (स. १-८-१२) 'दिक्ष्वभुवन्ति' (सं. २-५-६) 'न्यञ्चम्' (सं. ५-५-३). [2] स. ५-१-२.
[3] स. ३-१-७. [4] न पूर्ववत्प्रयत्नः । किन्तु. [5] ,, २-५-८.
[6] ,, ५-४-६. [7] स. २-५-९. [8] ,, ५-२-१.
[9] ,, २-५-२.

योगी मृदुः दृढः कठिनः । तद्विपरीतो मृदुः । सोऽतिशयितो मृदुतरः ॥ ११ ॥

---

## तैरोव्यञ्जनपादवृत्तयोरल्पतरोऽल्पतरः॥ १२॥

तैरोव्यञ्जने पादवृत्ते च प्रयत्नः अल्पतरः स्यात् । यद्यप्यल्पतरमृदुतरदृढभावास्तत्रोक्ताः[1] तथाऽपि 'दीपवद्वेणुपत्रवत्' इति शिक्षाऽनुरोधात् कोमल[2]शिरस्कत्वं सर्वत्र विज्ञेयम् ॥ १२ ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे विंशोऽध्यायः.

तैरोव्यञ्जने पादवृत्ते च अल्पतरः प्रयत्नः करणीयः । अल्पो बहुलप्रतियोगी । बहुलो दीर्घकालिकः । अल्पोऽल्पकालिकः ॥ १२ ॥

इत्याचार्यगार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये प्रातिशाख्यव्याख्याने विंशोऽध्यायः.

---

[1] यद्यप्यल्पमृदुदृढभावस्तत्रतत्रोक्तः.    [2] कौटिल्य, कैवल्य.

# अथ एकविंशोऽध्यायः

व्यञ्जनङ्स्वराङ्गम् ॥ १ ॥

स्वरस्य अङ्गं स्वराङ्गं व्यञ्जनं स्वराङ्गं भवति । 'श्वासो नादोऽङ्गमेव च' (२४–९) इति विज्ञेयत्वेन विधानादयमारम्भः। ननु कूपो यूप इत्यादौ व्यञ्जनमेवार्थविशेषबोधकमिति स्वरो व्यञ्जनाङ्गं किं न स्यात्? उच्यते—व्यञ्जनं केवलमवस्थातुं न शक्नोति किन्तु सापेक्षं स्वरस्तु निरपेक्षः । सापेक्षनिरपेक्षयोर्निरपेक्षमेव विशिष्टमाचक्षते प्रेक्षावन्तः । विशिष्टं प्रत्यङ्गत्वमविशिष्टस्यैव[1] । किञ्च स्वरवैशिष्टयबोधकमन्यदपि विद्यते—

दुर्बलस्य यथा राष्ट्रं हरते बलवान्नृपः ।
दुर्बलं व्यञ्जनं तद्वद्धरते बलवान् स्वरः ॥

किञ्च शिक्षाव्याकरणे[2]—

यस्त्वयं राजते तं तु स्वरमाह पतञ्जलिः ।
उपरिस्थायिना तेन व्यङ्ग्यं व्यञ्जनमुच्यते ॥

स्वरास्तु ब्राह्मणा ज्ञेयाः । इत्यादि ॥

उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः ।
ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि[3] ॥ इति ॥

---

[1] विशिष्टं स्वरं प्रति अङ्गत्वमविशिष्टस्य व्यञ्जनस्यैव । [2] शिक्षाव्याख्याने.
[3] ह्रस्वदीर्घप्लुताश्चैव कालतो नियमा अपि । पाणिनीयशिक्षायाम्.

स्वराणामेवोदात्तादयो धर्माः व्यञ्जनानां तु[1] तदङ्गतया । व्यञ्जनमर्धमात्रम् । स्वरश्च मात्राकालः । तयोः सन्धिरर्धमात्रः । इत्येवं दीर्घकालः प्रसक्तः । तत्प्रतिषेधार्थं 'व्यञ्जनꣳ स्वराङ्गम्' इत्युक्तम् । स्वरसंसृष्टस्य व्यञ्जनस्य स्वरकाल एव काल्यो द्रुतवृत्तौ न तु स्वरस्यैव सर्वत्रेत्यर्थः[2] । द्रुतवृत्ताविति किं? 'ह्रस्वार्धकालं व्यञ्जनम्' (१–३७) इति व्यर्थं स्यादिति ब्रूमः । यथा क्षीरोदकसम्पर्के क्षीरस्यैवोपलब्धिर्नोदकस्य तथा स्वरव्यञ्जनसम्पर्के स्वरस्यैवोपलब्धेर्वैशिष्ट्यम् ॥ १ ॥

इदानीमङ्गसंहितादिकार्यं विधीयते । वेदस्योच्चारणवेळायां स्वरधर्मा उदात्तादिगुणास्तत्समीपस्थेषु व्यञ्जनेष्वपि निविशन्ते प्रदीपप्रभेव घटादिषु । तत्र स्वरद्वयमध्यवर्तिषु व्यञ्जनेषु किं पूर्वस्य गुणो भवति? आहोस्विदुत्तरस्य? इत्येवं संशयस्स्यादिति तन्निर्णयार्थमियमङ्गसंहिता आरभ्यते—

अनेन व्यञ्जनस्य स्वातन्त्र्याभावस्तावदुच्यते । तस्मिन् सिद्धे ह्यङ्गिविशेषनिरूपणमवकल्पते । उदात्तादिस्वरचिन्तायां व्यञ्जनं स्वराङ्गमेव । न तु व्यञ्जनस्य स्वभावतः उदात्तादिगुणास्सन्ति । न ह्येकैकस्मिन् व्यञ्जने पृथगुच्यमाने उदात्तादिगुणभेदास्स्फुरन्ति । अत एव मूलशास्त्रे 'अचश्च'[3] इत्यधिकृत्य उदात्तादिगुणास्तत्तत्कालाश्च विहिताः । तथा 'स्वरविधौ व्यञ्जनमविद्यमानवत्'[4] इति च स्मर्यते । तथा 'न्यङ्' इत्या.

[1] न तु व्यञ्जनानाम्. [2] सर्वस्मिन्नर्थः. [3] पा. १-२-२८.
[4] परिभाषेन्दुशेखरे (७९).

दिषु 'उदात्तस्वरितयोर्यणस्स्वरितोऽनुदात्तस्य'[1] इति यणः परे अचि विहितस्स्वरितगुणो ङकारे दृश्यते । एतच्च ङकारस्य तदङ्गतामन्तरेण नोपपद्यते । तस्माद्व्यञ्जनं सर्वं तत्समीपस्थस्वराङ्गतयैवोदात्तादिगुणान् लभते, न स्वत इति सिद्धम् ॥१॥

---

## तत्परस्वरम् ॥ २ ॥

स्वरप्रधानतया केवलमवस्थातुमसहमानं व्यञ्जनं कदा पूर्वस्याङ्गं कदा परस्याङ्गमिति सन्देहे व्यवस्थापयति—'तत्' अङ्गभूतं व्यञ्जनं 'परस्वरं' भजते । यथा—'इमानेव लोकानुपधाय'[2] । परश्चासौ स्वरश्च परस्वरः तं 'परस्वरम्' ॥ २ ॥

अनेन पूर्वोत्तरयोर्गुणभेदे[3] उत्सर्गरूपा विनिगमना[4] उच्यते । तद्व्यञ्जनं परस्पर[5]गुणभूतमुदात्तादिस्वरं भजत इति सामान्यम् । 'अपाम सोमम'[6] । 'अपेत वीत'[7] । 'इमौ लोकौ भवतः'[8] ॥ २ ॥

---

## अवसितं पूर्वस्य ॥ ३ ॥

'अवसितं' पदान्तवर्ति व्यञ्जनं 'पूर्वस्य' स्वरस्य अङ्गं स्यात् । यथा—'ऊर्क्'[9] । 'वषट्'[10] । 'हविः'[11] ॥ ३ ॥

---

1 पा. ८-२-४. 2 स. ५-५-६. 3 पूर्वोत्तरयोस्स्वरयोर्गुणभेदे.
4 उत्सर्गरूपादिनिगमनात्. 5 परस्य स्वरस्य. 6 स. ३-२-६.
7 सं. ४-२-४. 8 स. २-६-२. 9 ,, १-२-२.
10 ,, २-२-१२. 11 ,, १-२-४.

अवसीयतेऽत्रेत्यवसितं विरामावधिभूतं व्यञ्जनम् । तत्तु पूर्वस्वरं[1] भजते । 'उप चिन्वन्ति वेधसः'[2] । 'इन्द्रवायू वि मुञ्चताम्'[3] । 'पाहि मां यज्ञनियम्'[3] । 'उत वा घा स्यालात्'[4] । 'ऊर्क्'[5] ननु यद्यपि 'तत्परस्वरम्' (२१–२) इति सामान्यविधिः कृतः, तथाऽप्यवसितस्य पराभावादन्याङ्गत्वध्रौव्याच्च पूर्वाङ्गत्वमर्थसिद्धं न विधेयम् । सत्यम् । अस्यैव न्यायस्य प्रदर्शनार्थमिदं सूत्रं प्रणीतवानाचार्यः । तेन 'स्तोमैर्विधेमाग्नये',[6] 'अथर्‌ - मुत'[7] इत्यादिषु 'संयोगादि', (२१–४) 'परेण चासाꣳहितम्' (२१–५) इत्यादिना[8] पूर्वाङ्गत्वविधिसद्भावेऽपि पूर्वाभावे पराङ्गत्वं सिद्धं भवति ॥ ३ ॥



## संयोगादि ॥ ४ ॥

द्वयोर्बहूनां वा व्यञ्जनानां संयोगो भवति यदि तस्य संयोगस्य आदि व्यञ्जनं पूर्वस्याङ्गं भवति । यथा—'यज्ञान्व्यादिशात्'[9] । 'अप्स्वन्तः'[10] । परसूत्रे चकारः पूर्वस्वराङ्गबोधक इस्यत्रापि तल्लभ्यते ॥ ४ ॥

संयोगो व्यञ्जनसङ्घातः । तदुक्तं मूलशास्त्रे—'हलोऽनन्तराःसंयोगः'[11] इति । तस्यादिभूतं व्यञ्जनं पूर्वस्य स्वरं भजते 'इषे त्वा'[12] । 'उच्छुष्मो अग्ने'[13] । 'अव देवं त्र्यम्बकम्'[14] । उत्तरसूत्रेण सिद्धे पृथग्विधानं तत्प्रतिषेधबाधनार्थम् । तेन 'अग्नि-

[1] पूर्वस्य स्वर.
[2] सं. १-१-७.
[3] सं. १-१-११.
[4] सं. १-१-१४.
[5] ,, १-२-२.
[6] ,, १-३-१४.
[7] ,, ४-२-११.
[8] इत्यादिषु.
[9] ,, ६-६-११.
[10] ,, १-४-४६.
[11] पा. १-१-७.
[12] ,, १-१-१.
[13] ,, १-६-२.
[14] सं. १-८-६.

स्ते वाजिन् युङ्क्ष्व'[1] 'यस्मिन्वायुः'[2] 'आशून् हुवे सुयमानूतये'[3] इत्यादौ 'नान्तस्थापरमसवर्णम्' (२१-७) "स्पर्शश्चोष्मपरः" (२१-९) इति प्रतिषेधस्संयोगादेर्न भवति ॥ ४ ॥

## परेण चासाꣳहितम्[4] ॥ ५ ॥

'परेण' स्वरेण 'असꣳहितं' असंयुक्तं च व्यञ्जनं पूर्वस्वराङ्गं भवति। यथा—'तत्सवितुः'[5]। ननु तर्हि पूर्वसूत्रमनर्थकम्। संयोगादिभूतस्यापि व्यञ्जनस्यानेनैव पूर्वस्वराङ्गत्वसिद्धेः। मैवं मंस्थाः। 'मर्यश्रीः'[6] 'अर्वाऽसि'[7] इत्यत्र यवकारयोः 'रेफात् परं च' (१४-४) इति द्वित्वे कृते प्रथमयवकारयोः 'परेण चासꣳहितम्' इत्यनेन पूर्वस्वराङ्गत्वं प्राप्तम्। रेफस्य तु 'नान्तस्थापरमसवर्णम्' (२१-७) इत्यनेन परस्वराङ्गत्वं प्राप्तम्। तच्चाशक्यं तथोच्चारणासम्भवात्। अन्यतरबाधे कर्तव्ये सति किं वा बाध्यमिति सन्देहः। तत्र नियामकत्वेन[8] 'संयोगादि' (२१-४) सूत्रमुपतिष्ठते ॥ ५ ॥

सꣳहितमेव साꣳहितम्। ततोऽन्यदसाꣳहितम्। यस्य व्यञ्जनस्य परस्वरस्य च मध्ये व्यञ्जनान्तरमस्ति तच्च पूर्वस्य स्वरं भजते। 'श्रेष्ठतमाय कर्मणे'[9]। 'अनमीवा अयक्ष्माः'[9]। 'ऋक्च

---

[1] सं. ७-५-१९. [2] सं. ५-७-२६. [3] सं. ४-७-१५.
[4] असꣳहितमिति त्रिभाष्यरत्नपाठः. [5] ,, १-५-६.
[6] ,, ४-१-२. [7] ,, १-७-८. [8] निश्चायकत्वेन.
[9] ,, १-१-१.

'इषे त्वा'[1] । अन्तस्था परा यस्मात् तत् 'अन्तस्थापरम्' । असवर्णमिति किम्? 'परिचाय्यं चिन्वीत'[12] ॥ ७ ॥

अन्तस्थापरं तस्या अन्तस्थाया असवर्णं व्यञ्जनं न पूर्वस्य स्वरं भजते । 'इषे त्वा'[1] । "कृष्यै त्वा"[1] । 'धात्रे पुरोडाशम्'[3] 'सुश्लोकाश्वम्'[4] । पूर्वाङ्गत्वे निषिद्धे उत्सर्गसिद्धं पराङ्गत्वमवतिष्ठते। अन्तस्थापरमिति किम्? 'ऋक्च मे'[5] असवर्णमिति किम्? 'सूनर्यसि'[6] । 'उर्वश्यसि'[7] । 'अथर्वणः'[8] ॥ ७ ॥

—o—

## नासिक्याः ॥ ८ ॥

नासिक्या यमाः परस्वरं भजन्ते । यथा—'रुक्ममुप दधाति'[9] 'राज्ञे सूकरः'[10] ॥ ८ ॥

नासिक्या[11] वर्णाः आगमत्वेन विधास्यन्ते ते पूर्वस्य स्वरं न भजन्ते । यथा—'अग्नियाः'[12] । 'राज्ञा'[13] । 'पर आह्णारः'।[14] 'अस्य प्रत्नाम्'[15] । 'सर्वं पाप्मानं तरति'[16] । 'इर्यः परिज्मा'[17] । 'रुक्मम्'[18] । 'रुग्णवत्यर्चा'[19] । 'ऊर्मिः ककुद्मान्'[20] ॥ ८ ॥

1 सं. ४-३-७. 2 सं. ५-४-११. 3 सं. १-८-८.
4 ,, १-८-१६. 5 ,, ४-७-१. 6 ,, १-६-३.
7 ,, १-३-७. 8 ,, ३-५-११. 9 ,, ५-२-७.
10 ,, ५-५-११. 11 नासिक्या नाम. 12 ,, २-१-१.
13 ,, २-६-२. 14 सं. ६-६-६. 15 ,, १-६-५.
16 ,, ६-३-१२. 17 ,, ७-१-२०. 18 ,, ६-२-७.
19 ,, ६-४-११. 20 ,, १-७-७.

## स्पर्शश्चोष्मपर ऊष्मा चेत्परस्य ॥ ९ ॥

पूर्वः चकारो 'नासिक्याः' (२१–८) इत्यनेन समुच्चयवाचकः । उत्तरस्तु परस्वराङ्गत्वाकर्षकः । 'ऊष्मपरस्स्पर्शश्च' परस्वराङ्गं भवति असौ ऊष्मा परश्चेत् परस्वराङ्गं चेदित्यर्थः । 'पट्थ् सं पद्यन्ते'[1] । 'वषट्थ् स्वाहा'[2] । ऊष्मा परश्चेदिति किम्? 'अक्ष्णया व्याधारयति'[3] । ऊष्मा परो यस्मात् असौ ऊष्मपरः ॥९॥

ऊष्मपरः स्पर्शश्च पूर्वस्य स्वरं न भजते, स चेत् परस्याङ्गं भवति 'वृक्षाणां भूयाꣳसः'[4] । 'तथ्स्वितुः'[5] । 'राजंश्सोम'[6] । स्पर्श इति किम्? 'पार्श्वे परस्सामानः'[7] । ऊष्मपर इति किम्? 'ऋक्च मे'[8] । ऊष्मा चेत्परस्येति किम्? 'जगत्स्थाः'[9] । 'यत्स्थावराणाम्'[10] ॥ ९ ॥

---

## स्वरितात्सꣳहितायामनुदात्तानां प्रचय उदात्तश्रुतिः ॥ १० ॥

स्वरितात् परेषां अनुदात्तानां अनुदात्तयोरनुदात्तस्य वा संहितायां प्रचयः नाम धर्मो भवति । यथा—"अग्ने दुभ्र गह्य किꣳशिल वन्य या ते"[11] । अनुदात्तानामिति किम्? "तेऽग्नये

---

[1] सं. ६-४-३. [2] स. ७-३-१२. [3] स. ५-२-७.
[4] ,, २-६-१. [5] ,, १-५-६. [6] ,, २-३-१४.
[7] ,, ७-३-१०. [8] ,, ४-७-९. [9] ,, २-१-११.
[10] ,, ६-४-२. [11] ,, ५-६-९.

प्रवते"[1] । संहितायामिति किम्? "अग्ने । दुभ्र । गह्य । किंशिल । वन्य । या । ते ।"[2] उदात्तस्य श्रुतिरिव श्रुतिर्यस्य असौ, 'उदात्तश्रुतिः' इति प्रचयस्वरूपनिरूपणम् । अतो न पुनरुक्तिशङ्का ॥ १० ॥

षोडशाध्यायान्ते संहिताधिकारो निवृत्त इति संहितायामित्युच्यते । यद्येवं 'व्यञ्जनँ स्वराङ्गम्' (२१-१) इत्यादेः कथमङ्गसंहिताविषयत्वम्? । श्रूयताम्—तत्र संहिताधिकाराभावेऽप्यर्थात्संहिताविषयत्वं भवत्येव, 'व्यञ्जनँ स्वराङ्गम्' (२१-१) इति व्यञ्जनस्य स्वरसन्निधावेवोदात्तादिगुणयोगो न स्वत इति वचनात् । अनुदात्त[3] इह व्यञ्जनान्तर्हितोपि[4] कार्यं भजते[5] बहुवचननिर्देशसामर्थ्यात् । स च संहितायामेकस्स्वरितात्परोऽनुदात्तो व्यञ्जनानन्तर्हितः[6] सम्भवति, न द्वौ बहवो वा । तदयमर्थः— संहितायां स्वरितात्परेषां एकद्विबहूनां अनुदात्तानां व्यञ्जनान्तर्हितानामनन्तर्हितानां च प्रचयस्वरात्मको गुणो भवतीति । किंरूपोऽसौ गुणः यं प्रचयं पश्यसि? स उदात्तश्रुतिरिति ब्रूमः उदात्तवच्छ्रुतिर्यस्य[7] स तथोक्तः । उत्क्षेपणरहित उदात्तगुण एव प्रचय इति यावत् । तद्यथा—'वायवस्थ'[8] । 'हव्यꣳ रक्षस्व'[9] "त ऊमा अभवन्"[10] । 'धनेषु विप्रा अमृता ऋतज्ञाः'[11] । स्वरितादिति किम्? 'उत्सश्रयसो वै'[12] । अनुदात्तानामिति किम्? 'यद्युक्थ्यस्स्यात्'[13] । 'महान् ह्येष यदग्निः'[14] ॥ १० ॥

---

[1] ग. २-४-१. [2] सं. ५-५-९. [3] अनुदात्ता. [4] ता अपि.
[5] भजन्ते. [6] अस्मत्संहितायामेकस्वरितात्परोऽनुदात्तोऽव्यञ्जनान्तर्हितः.
[7] उदात्तस्य श्रुतिरिव श्रुतिर्यस्य. [8] सं. १-१-१. [9] सं. २-१-३.
[10] सं. ५-२-३. [11] सं. ४-७-१२. [12] सं. ५-३-१. [13] सं. १-१-७.
[14]

## नोदात्तस्वरितपरः[1] ॥ ११ ॥

उदात्तपरः स्वरितपरो वा अनुदात्तः प्रचयो न भवति । यथा— "तया देवतया"[2] "तदाहुः क जगती"[3] । उदात्तश्च स्वरितश्च उदात्तस्वरितौ, तौ परौ यस्मात् सः तथोक्तः ॥ ११ ॥

स्वरितात्परेष्वनुदात्तेषु यस्मात्पर उदात्तस्स्वरितो वा भवति अनन्तरादेकव्यवेतादनेकव्यवेताद्वा, स प्रचयगुणभाङ्न भवति । 'प्रत्युष्टꣳ रक्षः'[4] । 'अनिशितमोजः'[5] । 'तस्मादुत्तरतोऽभिप्रयायी जयति'[6] । 'तावानुरुथ्यः'[7] । 'शतदायमुक्थ्यम्'[8] । 'शिवो भव वरूथ्यः'[9] । तदेतत्सूत्रद्वयमक्षरसंहितेत्युक्तम् । नन्वेतदपि चतुर्दशाध्यायान्ते वक्तव्य सत्किमिहोत्कर्ष्यते ? तद्ब्रूम —यदीदं सूत्रद्वयं तत्रोच्येत 'ये चार्वतो माꣳसभिक्षामुपासते',[10] 'अलोहिताय स्वाहा माꣳसन्यते स्वाहा'[11] इत्यत्रानुस्वारागमो न स्यात्, माशब्दस्यानुदात्तत्वाभावात् । तथा च—'प्रचयपूर्वश्च कौण्डिन्यस्य' (१९-२) इति विक्रमसञ्ज्ञाविधौ प्रचयपूर्वसद्भावात् स्वमतत्वशङ्का स्यात् । इह तूच्यमाने तस्मिन् यथोक्तविषयेऽप्यनुस्वारागमस्सिद्ध्यति, तदा प्रचयत्वाभावात् प्रचयपूर्वस्यानुदात्तस्यासम्भवात् । सूत्रकारस्य मतं तस्य विक्रमसञ्ज्ञा नास्तीति च स्पष्टमवगम्यते ॥ ११ ॥

---

[1] नोदात्तस्वरितपर इति त्रिभाष्यरत्नपाठ [2] स. ४-२-९.
[3] स. २-१-४. [4] स. १-१-८. [5] स. ४-७-१३.
[6] „ ५-३-५. [7] „ १-६-९. [8] „ १-३-११.
[9] „ १-२-६. [10] „ ४-६-९. [11] „ ७-५-१२.

## स्पर्शादनुत्तमादुत्तमपरादानुपूर्व्यान्नासिक्याः ॥

'उत्तमपरात् अनुत्तमात् स्पर्शात्' परतः 'आनुपूर्व्यात्' यथाक्रमं 'नासिक्याः' आगमा भवन्ति। प्रथमस्पर्शात् प्रथमनासिक्यः, द्वितीयात् द्वितीयः । एवमन्यत्रापि । यथा—"तं प्रत्नथा"[1]। "विमथ्नानाः"[2]। "विघ्ना ते अग्ने"[3]। "दारूणि दध्मसि"[4] इत्यादि। स्पर्शादिति किम्? 'कल्मापी भवति'[5] । अनुत्तमादिति किम्? 'सुम्नाय सुम्निनी'[6] । उत्तमपरादिति किम्? 'सव्दस्सगरस्सुमेकः'[7] ॥

उत्तमव्यतिरिक्तेभ्यः प्रथमादिभ्यः स्पर्शेभ्यः उत्तमपरेभ्यः परत आनुपूर्व्यात्प्रथमादयो नासिक्या आगमा भवन्ति। यथा—'भवं यक्मा',[8] 'सोमेन त्वाऽऽतनच्मि'[9] इति प्रथमः । 'ग्रन्थि प्रथ्नातु',[10] 'विमथ्नानाः'[12] इति द्वितीयः। 'अग्ने महान्',[11] 'इयें: परिज्मा'[12] इति तृतीयः। 'इध्मो वेदिः',[13] 'दध्नोत्येव भ्रातृव्यम्' इति चतुर्थः । स्पर्शादिति किम्? 'कर्मणे वाम्'[15]। अनुत्तमादिति किम्? 'मा मेऽघाङ्गाभिमति'[16]। उत्तमपरादिति किम्? 'वाक आ प्यायताम्'[17]। अत्राभिनिधानादुत्तमपरात्परतो नासिक्यागमो न भवति। तस्य कार्यान्तरविधौ अविद्यमानवद्भावात्

---

[1] स. १-४-९. [2] स ३-५-४. [3] स. ४-२-२.
[4] „ ४-१ १०. [5] „ ५-१-१. [6] „ ३-१-१३.
[7] „ ८-८-७. [8] „ १-४-३६. [9] „ १-१-३.
[10] „ १-१-२. [11] „ ३-५-९. [12] „ ७-१-२०.
[13] „ १-५-१०. [14] „ ६-६-९. [15] „ १-१-४.
[16] „ १-२-५. [17] „ १-१-९.

'प्रजापतिं प्रथमैताम्'[1] । 'अश्मन्नूर्जम्'[2] 'विष्णो हव्यम्'[3] । 'उच्छुष्मा ओषधीनाम्'[4] । 'इन्द्रः प्र स्तौतु'[5] । 'स्मो वयम्'[6] ॥१२॥



## तान्यमानेके ॥ १३ ॥

तान् नासिक्यान् एके शाखिनः 'यमान्' ब्रुवते । उक्तान्येवोदाहरणानि ॥ १३ ॥

तान् स्पर्शेभ्यः परान् नासिक्यान् एके आचार्याः शिक्षाकाराः यमसंज्ञान्प्राहुः । एतेषां नासिक्यानां शिक्षोक्तं संज्ञान्तरमिह किमर्थमुच्यते ? तदुक्तस्य क्वचित्तदभावस्य परिग्रहार्थम् ॥

तत्र शिक्षा —

वर्गान्तं शषसैस्सार्धमन्तस्थाभिश्च संयुतम् ।
दृष्ट्वा यमा निवर्तन्ते अनन्तं सूक्ष्ममुच्यते'* ॥
ऊष्मप्रकृतिकास्स्पर्शात्पञ्चमः परतो यदि ।
तत्र नैव यमापत्तिरिष्यते नात्र संशयः ॥ इति ॥

अत्र 'वर्गान्तं शषसैस्सार्धम्' इति अभिनिधानप्रयुक्तनासिक्यागमो निवर्त्यते । तत्पुरस्तादुदाहृतम् । 'वर्गान्तमन्तस्थाभिश्च संयुतम्' इत्यनेन अन्तस्थापरादुत्तमात्प्राङ्नासिक्यागमो निवर्त्यते । 'असिक्नियस्योपधे'[8] । 'राज्ञ्यसि'[9] । 'अधिपत्न्यसि'[9] । 'अम्बं

1 सं. २-५-११. 2 सं. ४-६-१. 3 सं. १-१-३.
4 ,, ४-२-६. 5 ,, ३-६-५. 6 ,, २-५-९.
7 मुर्गास्त. 8 ब्रा. २-०-८. 9 ,, ४-३-६.
* अहिं दृष्ट्वा यथा गजाः.

पोपयित्वा स नः[1] । ऊष्मप्रकृतिकस्स्पर्शः स्पर्शपूर्वस्य शकारस्य आदेशभूतः छकारः—'यच्छमश्नुणः'[2] । 'आदित्याश्छमश्नुभिः'[3]॥

---

## हकारान्नणमपरान्नासिक्यम् ॥ १४ ॥

हकारात् इति कर्मणि ल्यब्लोपे पञ्चमी । तस्मात् नणमपरं हकारमारुह्य नासिक्यं भवति । सानुनासिक्यो[4] हकारः स्यादित्यर्थः । 'अह्नां केतुः'[5] । 'अपराह्णे'[6] । 'ब्रह्मवादिनः'[7] ॥ १४ ॥

एक इत्यन्वयः । हकारात्खलु नकारणकारमकारपरात् परतो नासिक्यागममेके आचार्या उपदिशन्ति । यमसंज्ञावादिभ्योऽन्ये वयमेवेति भावः । शिक्षाकारास्त्वेतं नासिक्यं नेच्छन्ति इत्यनेन ध्वन्यते । नकारे परतो यथा—'अपह्नुत पयास्मे'[8] । 'मह्ना जिनोषि'[9] । णकारे यथा—'प्रति गृह्णातु'[10] । 'अपराह्णे'[6] । मकारे यथा—'ब्रह्मवादिनः'[7] । 'जिह्मं तस्य'[11] । नणमपरादिति किम्? 'मह्यं नमन्ताम'[12] । नन्वयमागमविधिर्नोपपद्यते, प्रथमानिर्देशाभावात् । नैतदस्ति । अस्ति ह्यत्र प्रथमानिर्देशः—'आनुपूर्व्यान्नासिक्याः' (२१-१२) इति । तेनास्मिन् प्रकरणे आगमविधानमुपपद्यते । हकारादिति पञ्चमीनिर्देशश्चागमविधावेवोपपद्यते । यथा—'अघोषादूष्मणः परः' (१४-९) 'स्पर्शादनुत्तमात्' (२१-१२) इति । अस्मिंस्तु सूत्रे द्वितीयानिर्देशः एकशब्दान्व-

---

[1] ध. १-१-१४. [2] सं. २-१ १. [3] म. ५-७-१२.
[4] नासिक्यो [5] ,, २-४-१४. [6] ,, २-१-२.
[7] सं. १-७-१. [8] ,, १-६-४. [9] ,, २-२-१२.
[10] ,, १-१-५. [11] ,, २-६-११. [12] ,, ४-५-१४.

यार्थः । नन्वयं शब्दान्तरादेशः किं न स्यात्? विकारिणोऽनुपदेशात्[1]। सतो हि कार्यिणः कार्येण भवितव्यम् । असति तस्मिन् कस्यादेशस्स्यात्? गुणविधिस्तु नैव घटते । गुणविकारिणो गुणशब्दस्य च प्रथमानिर्देशे हि स भवति । यथा— 'पूर्वस्वरोऽनुनासिकः' (१५-२) 'समानाक्षराण्यनुनासिकानि' (१५-६) इति । प्रकरणविरुद्धश्च अत्र गुणविधिरागमाधिकारात् । न च 'स्वरितात्संहितायाम्' (२१-१०) इतिवत् गुणमात्रपर्यवसायिना शब्देन गुणविधिरिहाश्रयितव्यः, नासिक्यशब्दस्य गुणपर्यवसायित्वायोगात् । नासिकायां भवो वर्णो नासिक्यः । भावप्रत्ययान्तत्वे तु न रूपसिद्धिः । "योपधाद्गुरूपोत्तमात्" इति वुञ्विधानात् । प्रज्ञादित्वकल्पनायामपि नात्र गुणविधिर्घटते । गुणविकारिणष्षष्ठीनिर्देशाभावात् । तस्मादिह सूत्रशक्त्या वर्णान्तरागमविधिनिश्चयाच्छिक्षायामनुक्तोऽपि पञ्चमो नासिक्योऽस्माकमवश्याभ्युपगन्तव्यः । हकारस्य मकारान्तस्यापरस्योच्चारणे विशेषः शिक्षायां स्मर्यते—

न वायुं हमसंयोगे नासिकाभ्यां समुत्सृजेत् ।
न वर्देदुरसाऽत्यन्तं तथा यरलवेषु च ॥ इति ॥ १४ ॥

---

## रेफोष्मसंयोगे रेफस्स्वरभक्तिः ॥ १५ ॥

रेफस्योष्मणश्च संयोगे सति तत्रोष्मसंयुक्तो रेफस्स्वरभक्तिः इति जानीयात् । स्वरभक्तिरिति कीदृशी? स्वरस्य भक्तिः, स्वरभक्तिः । भक्तिः भागः अवयवः एकदेश इति यावत् ।

---

[1] पा. ५-१-१३२.

योऽस्य रेफस्य समानकरणः स्वरः तद्भक्तिः स्यात् । ऋकारश्चास्य जिह्वाग्रकरणत्वेन श्रुत्या[1] च समानधर्मः । एतदुक्तं भवति—ऋकारस्यावयवो भवतीत्यर्थः [भवतीति] । सूत्रेणानेन स्वरभक्तिरेवं विहिता । स्वरभक्तिस्वरूपं तु विस्पष्टं व्याचष्टे वररुचिः—'ऋकारादिरणुमात्रा, रेफोऽर्धमात्रा मध्ये, शेषा स्वरभक्तिरणुमात्रा' इति । अस्यायमर्थः—

इन्द्रियाविषयो योऽसावणुरित्युच्यते बुधैः ।
चतुर्भिरणुभिर्मात्रापरिमाणमिति स्मृतम् ॥

मात्रिकस्य ऋकारस्यादिरणुमात्रः स्वरभागः, मध्ये रेफः अर्धमात्रः, अन्तेऽप्यणुमात्रः स्वरभागः । एतत् ऋकारस्वरूपम् । अत्र ऋकारमध्यवर्तिनि रेफेऽर्धमात्रे विभज्यमाने सति तौ भागौ पूर्वोत्तराणुसहितौ प्रत्येकं स्वरभक्तिनामधेयं भजेते । सा च स्वरभक्तिरर्धमात्रा । कुत्र का स्वरभक्तिरित्याशङ्क्य शिक्षाकारैरुक्तम्—[2]

---

[1] रश्रुत्या.

[2] वररुचिः—स्वरस्तावत् किंविशिष्ट इति चेत् 'षोडशादितस्स्वराः' इति स्वरसंज्ञोक्ता । तेषु स्वरेषु ऋकाररेफयोस्समानस्थानकरणत्वात् ऋकारस्वरस्यैव भक्तिः । ऋकारस्तावत् किंविशिष्ट इति चेत् 'ऋकारऌ.री ह्रस्वौ' इति ह्रस्वत्वात् 'एकमात्रो भवेध्रस्वः' इति एकमात्रिक ऋकारः । वररुचिनैवमुक्तम्—मात्रिकस्य ऋकारस्यादौ स्वरस्याणुमात्रः । रेफस्यार्धमात्रो मध्ये । अन्ते स्वरस्याणुमात्र इति । अणुमात्र इति किम्—'इन्द्रियाविष-

शषसेषु स्वरोदयां हकारे व्यञ्जनोदयाम् ।
शषसेषु तु विवृतां हकारे संवृतां विदुः ॥ इति ॥

"यो वै श्रद्धाम्"[1] इत्यादौ सूत्रोक्तक्रमाभावात्[2] न स्वरभक्तिः । स्वरभक्त्यन्तरमपि शिक्षायामुक्तम्—

करेणुः कर्विणी चैव हरिणी हारितेति च ।
हंसपदेति विज्ञेया पञ्चैताः स्वरभक्तयः ॥

कीदृश्य एता इति चेत्—

करेणू रहयोर्योगे कर्विणी लहकारयोः ।
हरिणी रशसानां च हारिता लशकारयोः ॥
या तु हंसपदा नाम सा तु रेफषकारयोः ।
एवं पञ्चविधां भक्तिमुच्चरेत्स्वर्गकामुकः ॥

यथा करेणुः—"बर्हिः"[3] । कर्विणी—"मल्हाः"[4] । हरिणी—

यो योऽसावणुरित्युच्यते बुधैः । चतुर्भिरणुभिर्मात्रापरिमाणमिति स्मृतम्" अस्यायमर्थः—मात्रिकस्य ऋकारस्यादिरणुमात्रस्स्वरभागः । मध्ये रेफोऽर्धमात्रः । अन्तेऽप्यणुमात्रस्स्वरभागः । एतदृकारस्वरूपम् । अत्र ऋकारमध्यवर्तिनि रेफे अर्धमात्रे विभज्यमाने सति तौ भागौ पूर्वोत्तराणुसहितौ प्रत्येकं स्वरभक्तिनामधेयं भजेते । ततो द्वे स्वरभक्ती विधेते । अर्धमात्राकालस्स्वरभक्तिः कुत्र वा तिष्ठतीत्याशङ्क्य शिक्षाकारैरेवमुक्तम्—इति कुम्भघोणमुद्रितपुस्तकपाठः.

[1] सं. १-६-८. [2] सूत्रोक्तक्रमेण.
[3] ,, १-१-२. [4] स. २-१-२.

"दर्शपूर्णमासौ"[1] । हारिता—"सहस्रवल्शाः"[2] । हंसपदा—"वर्पाभ्यः"[3] इत्यादि ॥ १९ ॥

गुणविधिरयं, "पूर्वस्वरोऽनुनासिकः" (१९-१), इत्यादिवत्प्रथमानिर्देशात् । न तु वर्णान्तरविधिः, द्वितीयानिर्देशाभावात् । रेफस्योष्मणश्च निर्देशक्रमेण संयोगे सति रेफः स्वरभक्तिर्भवति । भज्यत इति भक्तिः, धर्मः । स्वरस्येव भक्तिर्यस्य स तथोक्तः । स्वरधर्मो भवतीति यावत् । केनास्य स्वरेण साधर्म्यं विधीयते? योऽस्य सदृशतरः ऋकारः । किमस्य तत्साधर्म्यम्? मात्रिकत्वं प्रधानता[4] च, 'वैश्वव्यचसं वर्पाणि'[5] । 'वर्सं नहति'[6] । 'गार्हपत्यमुप तिष्ठते'[7] । 'पर्शुर्वेदिः'[8] । असंश्लिष्टोऽत्र[9] रेफ ऊष्मणेति ह्रस्वकालादल्पतरेण कालेन न शक्यते प्रयोक्तुम् । न च व्यञ्जनयोर्मध्ये विरामोऽस्ति । अतोऽत्र रेफस्य मात्रिकत्वमवश्याभ्युपगन्तव्यम् । स्वप्रधानता तु क्वचिद्वक्ष्यते, पूर्वाङ्गत्वविधानसामर्थ्यात् । न च स्वरसाधर्म्यविधिर्मात्रिकत्वमात्रेण कृतार्थो भवति । तथात्वे हि मात्रिकत्वमेव साक्षाद्विधेयमिति स्वरसाधर्म्यमविधेयं स्यात् । तस्मात्स्वरभक्ते रेफस्य क्वचित्पूर्वाङ्गत्वं क्वचित्स्वप्रधानतेति द्वयं व्यवस्थितमाश्रीयते । तद्विवेकस्तु शिक्षोक्तः परिगृह्यते । तद्यथा—

स्वारात्परा स्वरभक्तिः स्वप्रधाना प्रकीर्तिता ।
ऋतस्य धूर्षदं चेति स्वतन्त्रा भक्तिरिष्यते ॥

[1] सं. २-२-५. [2] सं. ६-३-३. [3] सं. ७-२-१०.
[4] स्वप्रधानता. [5] ,, ४-३-२. [6] ,, २-५-७.
[7] सं. १-५-८. [8] ,, ३-२-४. [9] संश्लिष्टो.

अत्र पूर्वार्धेन पूर्वस्वरितनिमित्तं स्वरभक्तेः स्वातन्त्र्यमुच्यते । 'यद्दर्शपूर्णमासौ'[1] । 'दर्शपभामा लभेत'[2] । 'धीतिभिर् हितः'[3] 'यद्वार्हस्पत्यश्चरुः'[4] । यत्र तु स्वरितः प्रतिषिध्यते 'नोदात्तस्वरितपरः' (१४-३१) इति तत्र निमित्ताभावान्नैमित्तिकं स्वातन्त्र्यं न भवति । 'अन्नमिव खलु वै वर्पम्'[5] । 'यतुष्वा शीर्षणेव'[6] । 'वर्सं नह्यति'[7] । 'ऋषिद् होता'[8] । 'स शीर्षेति स—शीर्षा'[9] । 'ऋतस्य धूर्पदम्'[10] इत्यत्र त्वनिमित्तं स्वातन्त्र्यमुच्यते । क्वचित्स्वरितपूर्वकत्वेऽपि स्वातन्त्र्याभावः शिक्षायां स्मर्यते—

स्वाराद्दीर्घात्पदान्तस्थात्स्वरभक्तिस्तु या भवेत् ।
साऽपि[11]पूर्वस्वराङ्गं स्याद्दोपावस्तोर्हविष्मती ॥ इति ॥

एतेन लकारस्याप्यूष्मपरस्यैवं स्वरभक्तित्वं प्रदर्शितं वेदितव्यम् अध्ययनानुरोधात्, 'हारिता लशकारयोः' 'कर्विणी लहकारयोः' इति शिक्षावचनाच्च । 'शतवल्शो वि रोह'[12] इति स्वप्रधानः[13] 'सहस्रवल्शा वि वयं रुहेम'[12] 'आदित्यां मल्हाम्'[14] इति पूर्वाङ्गता । मात्रिकत्वं तु समानम् । ये तु रेफलकारयोरत्र ऋकारार्धं लकारार्धं चादेशमिच्छन्ति, तेषां विवृत्तिविरामस्स्यात् । न च तत्तुल्यतागुणो विधीयत इति युक्तम्, तद्वाचकशब्दाभावात्, मात्राहान्योच्चारणेऽनुपपत्ति[15]प्रसङ्गाच्च ॥ १९ ॥



[1] सं. १-६-७. [2] स. २-१-४. [3] सं. ४-२-७.
[4] ,, ५-६-५. [5] ,, ५-४-९. [6] ,, ६-१-७.
[7] ,, २-५-७. [8] ,, ४-६-२. [9] ,, ५-५-४.
[10] ब्रा. १-२-१. [11] सा तु. [12] ,, १-१-२.
[13] स्वतन्त्रा. [14] सं. १-८-१९. [15]मात्राहा(न्यो)मान्योच्चारणानुपपत्ति.

## न क्रमे प्रथमपरे प्रथमपरे ॥ १६ ॥

क्रमशब्दो द्वित्वपर्यायः । कथमेतत्? "प्रकृतिर्विक्रमः क्रमः" (२४-५) इत्यत्र द्वित्वस्यैव क्रमशब्देनाभिधानात् । अत्रापि स एवार्थ इति निश्चिनुमः । ऊष्मणः क्रमे सति तस्मिन्नूष्मणि प्रथमपरे वा सति न स्वरभक्तिर्भवति । क्रमे यथा—'दार्ह्श्यम्'[1] "वर्ष्याभ्यः"[2] "बर्ह्स्वेभिः"[3] "एतर्ह्यारूढः"[4] । प्रथमपरे यथा—"अदर्ह्श्म ज्योतिः"[5] । "कार्ष्णी उपानहौ"[6] । 'वर्ष्टा पर्जन्यः'[7] प्रथमः परो यस्मादसौ प्रथमपरः ॥ १६ ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे एकविंशोऽध्यायः.

क्रमो नाम द्वित्वम् । परस्योष्मणो द्वित्वे प्रथमपरे च तस्मिन् सति ततः पूर्वो रेफस्स्वरधर्मो न भवति । 'अदर्श्म ज्योतिः'[5] । 'दार्ढ्यं यक्षम्'[1] । 'वर्ष्याभ्यस्स्वाहा'[2] । 'घर्मे स्थलम'[8] । 'मूर्दं वर्स्वेभिः'[3] । 'यहर्येनदाहुतिः'[9] । इति क्रमः[10] । 'अनु मार्ष्टु,'[11] 'वर्षा पर्जन्यः'[7] इति प्रथमपरत्वम्[12] ॥

इत्याचार्यगार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये प्रातिशाख्यव्याख्याने एकविंशोऽध्यायः.



[1] सं. ३-२-२. [2] सं. ७-४-१३. [3] सं. ५-७-११.
[4] ,, ५-१-५. [5] ,, ३-२-५. [6] ,, ५-४-४.
[7] ,, ७-६-२०. [8] ,, ३-४-८. [9] ,, ५-१-३.
[10] इति द्वित्वे. [11] ,, १-४-४४. [12] इति प्रथमपरे.

# अथ द्वाविंशोऽध्यायः.

## शब्दः प्रकृतिस्सर्ववर्णानाम् ॥ १ ॥

सर्ववर्णानां शब्दः ध्वनिः प्रकृतिः मूलकारणं भवति । वर्ण-शब्देन स्वरव्यञ्जनात्मको राशिरुच्यते । सर्वे च ते वर्णाश्च सर्ववर्णाः तेषां सर्ववर्णानाम् ॥ १ ॥

इदानीं प्रकृत्यादिनिरूपणमुखेन वर्णात्मिकाया वेदवाचः प्रयोगो लक्ष्यते—

अनेन वर्णात्मकानां शब्दानामुपादानकारणमुच्यते । अनादिनिधनो विभुः एकश्शब्दो ब्रह्मव्यपदेशभाक् सर्वेषां वर्णानां प्रकृतिरुपादानकारणं भवति, स्तिमितवायुरिव तालवृन्तपवनानाम्[1] । तेन 'वायुशरीरसमीरणा' (२-२) दीनि पूर्वोक्तानि सर्वाणि[2] कारणानि निमित्तान्येव भवन्ति ॥ १ ॥

—o—

## तस्य रूपान्यत्वे वर्णान्यत्वम् ॥ २ ॥

प्रातिश्रुत्कस्थानभेदात् तस्य शब्दस्य प्रकृतिभूतस्य, रूपान्यत्वे सति वर्णान्यत्वं स्यात् । यथा—अ इ उ इत्यादि ॥ २ ॥

तस्य शब्दस्य अनुप्रदानादिभिः[3] कारणैः रूपभेदे जन्यमाने वर्णभेदः सम्पद्यते । तस्माच्छब्दं प्रयुञ्जानः तत्सामान्यविशेषकारणैः पूर्वोक्तैः प्रयुञ्जीत ॥ २ ॥

—o—

[1] तालवृन्तादिवायूनां. [2] सर्वत्र ण. [3] अनुप्रदानादिभिन्न.

## तत्र शब्दद्रव्याण्युदाहरिष्यामः ॥३॥

तेषां वर्णानां सर्वत्र संघातप्रयोगे सति शास्त्रमित्युच्यते । तस्य शब्द इति पर्यायनाम । तत्र तस्मिंच्छास्त्रे यानि द्रव्याणि भवन्ति, तान्युदाहरिष्यामः । यत् कर्म येन क्रियते, तत्तस्य द्रव्यं साधनमिति यावत् । यथा—घटस्य मृदिति एवं शास्त्रस्य वर्णाः । यानि द्रव्याणि संव्यवहारार्थानि कर्तव्यानि तानि व्याख्यास्यामः । शब्दस्य द्रव्याणि, शब्दद्रव्याणि तानि ॥ ३ ॥

तत्र वर्णविषये संशये सति लक्षणतो निर्णयः कार्यः । लक्षणं च विदितार्थमेव सत्तन्निर्णयाय प्रभवतीति तद्व्याख्यानरूपा परिभाषा प्रस्तूयते—

तत्र वर्णविषये सन्देहनिवर्तकलक्षणोपकारकाणि शब्दरूपाणि साधनानि वर्णयिष्याम इति प्रतिज्ञा ॥ ३ ॥

—o—

## वर्णकारौ निर्देशकौ ॥ ४ ॥

वर्णशब्दः, कारशब्दश्च निर्देशकौ वाचकौ स्याताम् । यथा—"अवर्णव्यञ्जनशकुनि" (६–७) इति । "अथ षकारऽ सकारविसर्जनीयौ" (६–१) इति । वर्णश्च कारश्च 'वर्णकारौ' ॥४॥

तं* वर्णयति—

वर्णशब्दः कारशब्दश्च वर्णानां स्वरूपनिर्देशकौ भवतः । वर्णशब्दो यथा—"अवर्ण" (२-१२; ६-२; ७-१; ८-११; ९-९;

* प्रतिज्ञातं.

१०-३, १९) 'इवर्ण' (२-२२; १०-३,१५; ११-१) इति । कार-शब्दः—'अकारः' (१-१०, २१, ३२,१२; २-२१, २६; ४-६; ८-२३; ९-७,१३; ११-१,९; १९-८; २०-४) 'आकारः' 'ककारः' (६-३२) 'खकारः' इति । एतच्च रेफादीनां[1] प्रदर्शनम् । "रेफे जिह्वाग्रमध्येन" (२-४१) 'चपरः' (९-४, २०) 'शकारश्छकारम्' (९-३४) 'कवर्गः' (२-१९) 'चवर्गः' (२-३६) इति ॥ ४ ॥

——○——

## चापीत्यन्वादेशकौ ॥ ५ ॥

च, अपि इत्येतौ अन्वादेशकौ स्याताम् । पूर्वापेक्षया अन्वादेश इत्युच्यते[2] । यथा—"असदामासिश्वङ्श्च" (१-२) "इतिपरोपि" (४-४) ॥ ५ ॥

च, अपि इत्येतौ शब्दौ पूर्वप्रयुक्तस्य शब्दस्यानुकर्षणौ भवतः । यथा—'द्यावापृथिवी' (४-१२) 'पूर्वश्च' (४-१३,१६; ९-१७) 'एकव्ययेतोऽपि' (४-११) इति । क्वचिद्विशेषणनिर्देशोऽपि विशेष्यमाकर्षति 'आसन्न‌ःसन्देहे' (१-२९) इति । यथा—'जपरो जकारम्' (९-२३) इत्यादि ॥ ५ ॥

——

## त्वथैवेति विनिवर्तकाधिकारकावधारकाः ॥

तु, अथ, एव इत्येते शब्दा यथाक्रमेण विनिवर्तकाधिकारकावधारकाः भवन्ति । यत्र तुशब्दः श्रूयते, तत्र निवृत्तिः ।

---

[1] एकादीनां.

[2] पूर्वापेक्षा अन्वादेशका इत्युच्यन्ते.

यत्र अथशब्दः, तत्राधिकारः । यत्र एवशब्दः तत्रावधारणमिति[1] वेदितव्यम् । यथा—"एफस्तु रस्य" (१–१९) 'अथ स्वंहितायामेकप्राणभावे' (५–१) 'स्पर्श एवैकेषामाचार्याणाम्' (१४–७) । विशेषेण निवर्तयतीति, 'विनिवर्तकः' । अधिकरोतीति 'अधिकारकः' । अवधारयतीति 'अवधारकः' ॥६॥

तु, अथ, एव इत्येते शब्दाः यथाक्रमं विनिवर्तकादयो भवन्ति । तुशब्द उक्तार्थसम्बन्धि यत्किमप्यर्थान्तरं विनिवर्तयति । अथशब्दः निर्दिष्टमधिकरोति । एवशब्दः निर्दिष्टप्रतियोगिनमर्थमवधारयति । तु—'एफस्तु रस्य' (१–१९) । अथ—'अथ वर्णसमाम्नायः' (१–१) । एव—'ऊष्मपर एवैकेषामाचार्याणाम्' (९–५) ॥ ६ ॥

## वेति वैभाषिकः ॥ ७ ॥

'वा' इत्येषशब्दो वैभाषिको वैकल्पिको भवति । यथा—"मुखनासिकया वा" (२–५०) ॥७॥

वाशब्दो विभाषाप्रयोजनः विकल्पार्थ इति यावत् । यथा—'ग्रहणं वा' (१–२४) ॥ ७ ॥

## नेति प्रतिषेधकः ॥ ८ ॥

'न' इति शब्दः[3] 'प्रतिषेधकः' भवति । यथा 'न मुपुत्रोऽग्नि' (१३–१९) इति ॥ ८ ॥

[1] भारणं वेति. [2] उक्तार्थसंबन्धियत्कम. [3] इत्येष शब्दः.

न इतिशब्दः प्रसक्तमर्थं प्रतिषेधति। यथा—'नावग्रहः'(४-२)॥

—o—

## आयामो दारुण्यमणुता खस्येत्युच्चैःकराणि शब्दस्य ॥ ९ ॥

"उच्चैरुदात्तः" (१-३८) इत्युक्तं, तदर्थमिदमारभ्यते लोकवद्यादृच्छिकोच्चारणप्रतिषेधार्थम्। 'आयामः' गात्राणां दैर्घ्यम्। 'दारुण्यं' स्वरस्य कठिनता। 'अणुता खस्य' गलविवरस्य संवृतता। एतानि साधनानि[1] शब्दस्य 'उच्चैःकराणि' शब्दमुच्चैः उदात्तं कुर्वन्तीत्यर्थः। उच्चशब्दमुच्चारयता एतत् कर्तव्यमिति विधिः। उच्चैः कुर्वन्तीति 'उच्चैःकराणि'॥ ९॥

उत्तरे अध्याये उदात्तादिस्वरस्वरूपनिरूपणार्थं सामवेदप्रसिद्धान् क्रुष्टप्रथमादीन् सप्त स्वरान् वक्ष्यति। तेषां मध्येमध्यमस्योत्पत्तिस्तावत् 'धृतः प्रचयः' (१८-३) इत्युक्ता। इहान्येषां षण्णामुत्पत्तिरुच्यते। तत्रादौ पूर्वेषां त्रयाणां अनेन सूत्रेणोच्यते—आयामो गात्राणामाकर्षणम्। दारुण्यं परुषता ध्वनेः। अणुता संवृतता[2] कण्ठाकाशस्य। एतानि कारणानि[3] शब्दमुच्चैः कुर्वन्ति उत्क्षेपणं[4] कुर्वन्ति। तत्रैषामुत्क्षिप्तो[5] द्वितीयाख्यस्स्वरः। उत्क्षिप्ततरः प्रथमाख्यः। उत्क्षिप्ततमः क्रुष्टाख्यः। एवमेते मूर्धप्रदेशे जायन्ते इत्युच्चैश्शब्दवाच्या भवन्ति। अत एवोक्तम्—'उच्चैरुदात्तः' (१-३८) इति॥ ९॥

—o—

[1] एतानि नामधेयानि. [2] विवृतता. [3] करणानि.
[4] उत्क्षिप्त. [5] तत्रैषामीपदुत्क्षिप्तो.

## अन्ववसर्गो मार्दवमुरुता खस्येति नीचैः-करणि ॥ १० ॥

"नीचैरनुदात्तः" (१–३९) इत्युक्तम् । 'अन्ववसर्गः' गात्राणां विस्तृतता । 'मार्दवं' स्वरस्य स्निग्धता । 'खस्य उरुता' कण्ठस्य स्थूलता, इत्येतानि साधनानि शब्दस्य नीचैः-कराणि, शब्दं नीचैरनुदात्तं[1] कुर्वन्तीत्यर्थः । नीचशब्दमुच्चारयता एतत् कर्तव्यमिति विधिः । नीचैः कुर्वन्तीति 'नीचैःकराणि' ॥

अथ धृतात्परेषां त्रयाणां स्वराणामुत्पत्तिमाह—

अन्ववसर्गो[2] गात्राणां स्रंसनम्, मार्दवं ध्वनेः, उरुता विस्तीर्णता कण्ठविवरस्येति, एतानि करणानि शब्दं नीचैःकुर्वन्ति अवक्षिप्तं कुर्वन्ति । अग्रेपदवक्षिप्तश्चतुर्थाख्यस्स्वरः । अवक्षिप्ततरो मन्द्राख्यः । अवक्षिप्ततमोऽतिस्वार्यसंज्ञः । एवमेते हृदयप्रदेशे जायन्त इति नीचैश्शब्दवाच्या भवन्ति । अत एवोक्तं 'नीचैरनुदात्तः' (१–३९) इति ॥ १० ॥

—o—

## मन्द्रमध्यमताराणि स्थानानि भवन्ति ॥

मन्द्रं, मध्यमं, तारं चेत्येतानि स्थानानि भवन्ति । 'मन्द्रं' इति प्रथमम् । मध्यमं इति द्वितीयम् । तारमिति तृतीयम् । एषां स्थानानां प्रयोजनमुत्तरत्र वक्ष्यते ॥ ११ ॥

[1] नीचमनुदात्तं.

[2] शब्दस्यान्ववसर्गः

मन्द्रमध्यमताराख्यानि त्रीणि वाचस्स्थानानि धृतादीनां स्वराणां स्थानानि भवन्ति । एतेषु प्रयुज्यमानः शब्दः परवेद्य इत्युच्चैः[1] प्रयोग इति व्यपदिश्यते ॥ ११ ॥

---o---

## तत्रैकविंशतिर्यमाः ॥ १२ ॥

एतानि स्थानानि केषामित्यपेक्षायामाह—

तेषु त्रिषु स्थानेषु 'एकविंशतिः यमाः' स्वरा भवन्ति। तेषां यमानामुत्तरत्र प्रयोजनं वक्ष्यते ॥ १२ ॥

तेषु मन्द्रादिषु वाचस्स्थानेषु एकविंशतिस्स्वरभेदा भवन्ति। त एते उत्तराध्याये विवरिष्यन्ते। यद्येवं किमर्थमिहेदं सूत्रद्वयं क्रियते? उच्यते—"आयामो दारुण्यम्" (२२-९) इत्यादिलक्षणोपयोगार्थं ब्रह्मयज्ञार्थं च। ब्रह्मयज्ञस्य वाचक[2]प्रयोगविषये उच्चैस्त्वमेवेष्यते। न तूपांशुत्वादिरन्तःकरणः। अह्नो मध्यमे भागे तारस्थानेन ब्रह्मयज्ञः प्रयुज्यते। प्रथमोत्तमयोस्तु भागयोर्मध्यं विनाऽऽ[3]सन्नयोरर्धयोर्मध्यमस्थानेन तद्विप्रकृष्टयोरर्धयोर्मन्द्रस्थानेनेति विवेकोऽनुसन्धेयः ॥ १२ ॥

---o---

## ऋग्विरामः पदविरामो विवृत्तिविरामस्समानपदविवृत्तिविरामस्त्रिमात्रो द्विमात्र एकमात्रोऽर्धमात्र इत्यानुपूर्व्येण ॥१३॥

[1]परवेद्य उच्चैः [2]वाचिक. [3]मध्यं विना.

ऋग्विरामाद्यस्त्रिमात्रादिकाला यथाक्रमं भवन्ति । यथा— "उभावाजस्य सातये हुवे वाम्"[1] इत्यृग्विरामः । "इषे त्वा ऊर्जे त्वा"[2] इति पदविरामः । 'स इधानः,'[3] 'त एनम्,'[4] 'ता अस्मान्'[5] इति विवृत्तिविरामः । "प्रउगम्"[6] इति समानपदविवृत्तिविरामः । ऋचि[7] विरामो 'ऋग्विरामः' । पदस्य विरामः 'पदविरामः' । पदद्वयविवृत्तौ विरामः 'विवृत्तिविरामः' । शिक्षायामस्य विशेष उक्तः—[8]

ह्रस्वादिर्वत्सानुसृतिरन्ते वत्सानुसारिणी ।
पाकवत्युभयह्रस्वा दीर्घमध्या[9] पिपीलिका ॥

मात्रिका वत्सानुसृतिस्तथा वत्सानुसारिणी ।
पादोना स्यात् पाकवती पादमात्रा पिपीलिका ॥ इति ।

समानं च तत् पदं च 'समानपदं' एकपदमित्यर्थः । समानपदे विवृत्तिः, समानपदविवृत्तिः, तस्यां विरामः, 'समानपदवि-

[1] सं. १-१-१४. [2] स १-१-१. [3] स. ४-४-४.
[4] ,, २-३-११. [5] ,, २-४-४. [6] ,, ४-४-२.
[7] ऋचो
[8] पिपीलिका दीर्घसमं च मध्ये सवर्णता पाकवती पदस्थे ।
हस्वा च वत्सानुसृतास्त्वमाद्ये त्वयोश्च मुख्यस्तु विरामकालः ॥
स्वयोर्ये त्वनुसारी [illegible] ।
विरामश्च तयोर्मध्ये विशेषकाश्च दीर्घयोः ॥ इतिक्वाचित्कोऽधिकःपाठः,
[9] दीर्घोभया.

वृत्तिविरामः' । तिस्रो मात्रा यस्यासौ 'त्रिमात्रः' । द्वे मात्रे यस्यासौ 'द्विमात्रः' । एका मात्रा यस्यासौ 'एकमात्रः' । अर्धं मात्रा यस्यासौ 'अर्धमात्रः' ॥ १२ ॥

अथ प्रयोगान्तर्वर्तिनां विरामाणां कालेयत्तामाह—

ऋचो विरामः ऋग्विरामः । स द्विविधः—ऋचोऽन्ते मध्ये चेति, उभयत्रापि ऋगवयवसमाप्तेर्विद्यमानत्वात् । यथा—'सं न-हो सुकृतायकम्'[1] इत्यृगन्ते । 'उप चिन्वन्ति वेधसः'[2] इत्यर्धर्चान्ते । ये त्वतोऽन्ये अनुवाकमध्यवर्तिनो विरामास्तेषां अध्यर्धमात्रः कालदिशिक्षायां स्मर्यते—

> पदाध्ययनस्थानेषु[3] पदाध्ययनवर्जिताः ।
> तेषां विरामाण्यध्यर्द्धान् भजन्ते नात्र संशयः ॥ इति॥

अस्यार्थः—संहिताग्रन्थानुवाकेषु पदविभागसिद्धेतरावसानस्थाः संहिताम्नायसिद्धावसानस्थाः ये शब्दा यजुरन्तप्रतीकान्तब्राह्मण-मध्याविरामस्थास्तेषां विरामाः षड्भिर्मात्रापादैस्संमिता भवन्तीति । यजुरन्ते—'अक्त९ रिहाणा वियन्तु वयः'[4] । प्रतीकान्ते—'अग्निर्मूर्धा भुवः'[5] । ब्राह्मणमध्ये—'यो यजते तस्य'[6] । पदाध्याये त्वृगन्त[7]प्रग्रहात्परं इतिकरणयोगादृगन्तस्यापि[8] द्विमात्रत्वमेवेष्यते—'दधावहै । पुनः । ते इति'[9] । 'वर्धयमानः । अस्मे इति'[10] । क्रमा-

---

[1] सं. १-१-१०. [2] सं. १-१-७. [3] पदसिद्धावसानस्थाः.
[4] ,, १-१-१३. [5] ,, ४-२-११. [6] सं ३-५-४.
[7] त्वृगन्त. [8] इतिकरणयोगाद्यथा द्विमात्रत्व तथा ऋगन्तस्यापि.
[9] सं. १-५-१०. [10] स. १-७-१०.

ध्याये तु प्रग्रहात्परस्यैवर्ग्विरामस्य त्रिमात्रत्वमिष्यते। यथा—'वेधस इति वेधसः। पूष्णस्तानि'[1]। 'तनूमिति तनूम्। 'अग्नेरनुव्रता'[2]। विभक्तानां पदानां मध्ये विरामः पदविरामः स द्विमात्रः यथा—"इषे त्वा ऊर्जे त्वा"[3]। "द्वे इति। धेनू इति। भौमी इति"[4]। क्रमाध्यायेऽप्येष विधिः भवत्येव, आवर्त्यमानस्य पदस्य रूपयोः[5] सन्धानाभावात् अनार्षत्वाविशेषाद्वा[6] 'इषे त्वा। त्वोर्जे। ऊर्जे त्वा'[3]। अवग्रहान्तविरामस्य तु शिक्षायां विशेषस्स्मर्यते—

'अवग्रहाणामन्ते च विरामो मात्रिकस्स्मृतः' इति

यथा—'उपायव इत्युप-आयवः'[3]। विवृत्तिविराम एकमात्रः। एतत्तु नानापदविवृत्तिविषयं, समानपदविवृत्तिविरामे विशेषविधानात्। 'कर्मण आ प्यायध्वम्'[3]। 'अनमीवा अयक्ष्माः'[3]। 'इन्द्राग्नी आहुवध्ये'[7]। 'इन्द्रवायू इमे सुताः'[8]। 'छिनत्ती३ इति'[9]। 'त्वी३ इत्यब्रवीत्'[10]। 'प्रत्युष्टा इति प्रति—उष्टाः'[11]। 'सहस्रवल्शा इति सहस्र-वल्शाः'[11]। 'अच्छिद्रे इति। बहुले इति। उभे इति'[12]। 'पुरस्ता ते अस्तु'[13]। यत्तु दीर्घद्वयमध्यविवृत्तेः पिपीलिकाख्यापूर्वकं पादमात्रत्वं स्मर्यते—' दीर्घमध्या पिपीलिका' 'पादमात्रा पिपीलिका' इति, तत्प्रग्रहसन्धिव्यतिरिक्तविषयम्। तथा शिक्षायाम्—

न प्लुते प्रग्रहे चापि सन्धिकार्यं प्रयुज्यते।
मात्रा ह्येका हि तत्काला मात्राधिक्यं तथा परे ॥

---

[1] सं. १-१-७. [2] सं. १-१-१०. [3] सं. १-१-१.
[4] ,, ५-६-२१. [5] उभयोः. [6] पाक.
[7] ,, १-१-१४. [8] म. १-४-४ [9] सं. १-७-२.
[10] ,, २-४-१२. [11] ,, १-१-२. [12] ,, ४-१-३.
[13] ,, १-२-३.

इति वचनात्। प्लुतान्तविरामस्य तु पदसन्धावेव मात्रिकत्वमिष्यते, न तु पदमध्ये। कुतः? प्रग्रहसमभिव्याहारात्, पदमध्ये सन्धिकार्यप्रसक्त्यभावाच्च। यत्तु ह्रस्वद्वयमध्यमाया विवृत्तेः पाकवतीसंज्ञापूर्वकं पादोनमात्रत्वं स्मर्यते, तदपि नानापदविषयम्। वत्सानुसारिण्यादिसाहचर्यात्। न हि ताः पदमध्ये सम्भवन्ति। अनुस्वारवत्यास्तु[1] नानापदविवृत्तेः तत्रत्यानुस्वारस्य च स्वस्वकाले तच्चतुर्थांशोऽधिक इष्यते—

व्यक्तिमध्यस्थनासिक्ये स्वकालात्[2] पाद इष्यते।
तत्काला हि तदा[3] व्यक्तिः प्राप्यते नात्र संशयः॥

इति शिक्षावचनात्।

पदस्य मध्ये विवृत्तिः समानपदविवृत्तिः। तद्विरामोऽर्धमात्रः। 'अग्नाइ पत्नीवाः'[4]। 'प्रउगम्'[5]। 'दीक्षितस्य गृहाइ'[6]। अनुवाकादीनां समाप्तिषु विरामकालश्शिक्षायां स्मर्यते[7]—

काण्डप्रश्नानुवाकानां समाप्तौ काल इष्यते।
दशाष्टपञ्चमात्रं तु तन्त्राणां च त्र्यहं भवेत्॥ इति॥

उपासनविषये तु चरमवचनान्तोऽयं[8] कालो द्रष्टव्यः। तत्र केचित्पदवाक्यानुवाकादिसङ्ख्याबोधकशब्दपाठात् परमेवैते विरामकाला इत्याहुः। तदयुक्तम् तथाविधानां शब्दानां पौरुषेयलक्षणरूपतया वेदबाह्यत्वात्, वेदभागसमाप्तिनिमित्तत्वाच्च विरामाणाम्॥ १३॥

---

[1] विवृत्यास्तु, [2] स्वकालः, [3] तथा,
[4] सं. १-४-२७, [5] सं. ४-४-२, [6] सं. ६-१-४,
[7] बहुवचनपाठोऽपि, [8] वचनान्तेऽयं.

यद्व्यञ्जनान्तं यदु चापि दीर्घं
संयोगपूर्वं च तथाऽनुनासिकम् ।
एतानि सर्वाणि गुरूणि विद्यात्
शेषाण्यतोऽन्यानि ततो लघूनि ॥१४॥

'व्यञ्जनान्तं' 'यत्' अक्षरम् । व्यञ्जनमन्ते यस्य तत् 'व्यञ्जनान्तम्' । 'यदु चापि दीर्घं' अक्षरम् । 'संयोगपूर्वं च' यदक्षरं, संयोगात् पूर्वं 'संयोगपूर्वं' । 'तथा' 'अनुनासिकं' सानुनासिकं यदक्षरं उक्तानि 'एतानि' 'सर्वाणि' 'अक्षराणि' 'गुरूणि' 'विद्यात्' जानीयात् । यथा, व्यञ्जनान्तम्—"मातेव पुत्रम्"[1] । यथा, दीर्घम्—"ते तेऽधिपतयः"[2] । यथा, संयोगपूर्वम्—"अश्मा च मे"[3] । यथा, अनुनासिकम्—"विꣳशत्यै स्वाहा"[4] । 'शेषाण्यतोऽन्यानि' अत एभ्यो गुरुभ्यः शेषाण्यन्यानि अक्षराणि, 'ततः' अनन्तरं, 'लघूनि' विजानीयात् । शेषाणि कानीत्याशङ्क्योत्तरश्लोकेन विवृणोति ॥ १४ ॥

अथ ऋग्विरामपदविरामयोः क्वचित्कालाधिक्यार्थं गुरुलघुविधानं शिक्षोक्तमुच्यते—

व्यञ्जनं अन्तं विरामाद्यधिभूतं यस्य तत्तथोक्तम् । उ अनर्थकः पादपूरणो वा । च, अपि इत्येतौ निपातौ । संयोगा-

[1] सं. ४-२-१.  [2] सं. ५-५ ११.  [3] सं. ४-७-६.
[4] ,, ७-१-११.

त्पूर्वमिति तत्पुरुषः । तथाऽनुनासिकं[1] अनुस्वारात्पूर्वमित्यर्थः । यद्व्यञ्जनान्तं यच्च दीर्घमिति वचनव्यक्त्या व्यञ्जनान्तमित्यादीनां दीर्घेतराक्षरविशेषणत्वमवगम्यते । तच्च ह्रस्वं विज्ञेयम्, शेष[2]विषये उत्तरसूत्रे ह्रस्वग्रहणात् । तदयमर्थः—यत् ह्रस्वमक्षरं विरामव्यञ्जनात्संयोगादनुस्वाराच्च पूर्वं यच्च दीर्घं, एतानि सर्वाणि गुरूणि विद्यात् । व्यञ्जनान्तं यथा—'उप चिन्वन्ति वेधसः' ।[3] 'सं नह्ये सुकृताय कम'[4]। दीर्घं यथा—'सा या पपा'[5]। द्वे धेनू भौमी'[6]। 'सेन्द्रावेचैनो'[7]। संयोगपूर्वं यथा—'तत्प्रक्षस्य प्रक्षत्वम'[8]। अनुनासिकं[1] यथा—'सुकऽ सऽशाय'[9]। 'पुरुदऽसऽ सनिम्'[10]। यद्यप्यस्मत्संहितायामनुस्वारात्पूर्वस्य ह्रस्वस्य संयोगपूर्वत्वं नियतम्, तथाऽपि शिक्षायां सर्ववेदशाखाविषयत्वादनुस्वारो व्यञ्जनं वा स्वरो वेति शौनकादिमते स्वरत्वे संयोगानन्तर्भावात्पृथग्वचनम् । यस्मादेतान्यक्षराणि गुरुसंज्ञानि, ततस्तस्मादतोऽन्यानि एतेभ्योऽन्यानि अक्षराणि शेषाणि लघूनि विद्यात् । अत्र शेषाणीति अतोऽन्यानीति वा अन्यतरेण सिद्धे उभयाभिधानं परमतनिराकरणार्थम् । तत्र पादान्तवर्तिनः शेषस्य लघोः वर्णस्य वैकल्पिकं गुरुत्वमाहुः पिङ्गलाचार्यादयः, तदनेन निवार्यते । तेन 'सुपत्नीरुप सेदिम'[4] । 'समात्मा तनुवा मम'[4] इत्यादौ पादा[11]क्षरं लघ्वेव भवतीति तद्विरामेषु गुरुत्वनिबन्धनं मात्राधिक्यं न भवति ॥१४॥

—o—

[1] अनुनास्य. [2] विशेष. [3] सं. १-१-७.
[4] स. १-१-१०. [5] सं. ३-४-२. [6] ,, ५-६-२१.
[7] ,, २-५-४. [8] ,, ६-३-१०. [9] ,, १-६-१२.
[10] ,, ४-२-४. [11] पादान्ता.

**अव्यञ्जनान्तं यद्ध्रस्वमसंयोगपरं च यत् ।
अननुस्वारसंयुक्तमेतल्लघु निबोधतैतल्लघु निबोधत ॥ १५ ॥**

अव्यञ्जनान्तं यत् अक्षरं, यत् च ह्रस्वं, यत् च असंयोगपरं, यत् अननुस्वारसंयुक्तं एतत् सर्वमक्षरं 'लघु निबोधत' जानीध्वम् । यथा—"मधुद्यनाः"[1] इत्यादि । व्यञ्जनमन्ते यस्य तत् व्यञ्जनान्तं, न व्यञ्जनान्तं 'अव्यञ्जनान्तम्' । संयोगः परो यस्मात् तत् संयोगपरं, न संयोगपरं 'असंयोगपरम्' । अनुस्वारेण संयुक्तं अनुस्वारसंयुक्तं, न अनुस्वारसंयुक्तं 'अननुस्वारसंयुक्तम्' ॥ १९ ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे द्वाविंशोऽध्यायः.

शेषाण्याह—

यद्ध्रस्वमक्षरमव्यञ्जनान्तं भवति स्वयमेव विरामावधिभूतं यच्च संयोगपरं न भवति, अनुस्वारपरं च न भवति एतत्सर्वं लघ्विति निबोधतेति आचार्यस्य स्वशिष्याननुशासतो वाक्यम् । विरामस्थं यथा—'त्रिये पूष्णयुज्महि'[2] । 'हितेनेव जयामसि'[2]। असंयोगपरमननुस्वारसंयुक्तं च यथा—'भुवनमसि'[3] । 'हरिरसि'[4]। यद्यपि शेषाणि लघूनीत्येतावतैव लक्षणेन लक्ष्यं सिद्ध्यति, तथाऽ-

[1] सं. १-१-५. [2] सं. १-१-१४. [3] स. १-१-१२.
[4] १-४-१८.

पि विस्पष्टार्थं शिक्षायां शेषाण्यपि[1] सङ्गृहीतानीहानुभाष्यन्त[2] इति वेदितव्यम् ॥

गुरुलघुविज्ञानस्य तु प्रयोजनं ब्रूमः—

गुर्वक्षरे द्विमात्रत्वं सर्वशास्त्रेषु सुस्फुटम् ।
ह्रस्वे गुरौ तत्सम्पत्तिः परव्यञ्जनकालतः ॥ १ ॥
यत्र ह्रस्वादूनकालं विरामव्यञ्जनं परम् ।
तत्कालशेषस्संयोज्यो विरामे तु ततः परे ॥ २ ॥
विरामस्थाः कटतपविसर्गाश्चेत्परेष्वतः ।
विरामेषु त्वृगादीनामर्धमात्राऽधिका भवेत् ॥ ३ ॥
एतदर्थं हि भगवानृग्विरामाद्यनन्तरम् ।
गुरुलघ्वक्षरज्ञानं शिक्षोक्तं प्राह सूत्रकृत् ॥ ४ ॥

तत्र ऋग्विरामस्सार्धत्रिमात्रिको भवति । "उप चिन्वन्ति वेधसः । पृणस्तानि"[3] । 'विभ्वास्तुक्षितयः पृथक् । अग्ने कामाय येमिरे । अश्याम तम्'[4] । पदविरामस्सार्धद्विमात्रिकः— 'वषट्–करोति'[5] । 'त्रिष्टुप्–त्वा'[6] । अनुवाकान्तविरामः सार्धपञ्चमात्रः—'सप्तदशꣳ स्तोममुदजयत्'[7] । 'स यन्ता शश्वतोरियः'[8] । प्रश्नान्तविरामस्सार्धाष्टमात्रः—'तव ज्योतीꣳष्यर्चयः'[9] । 'शमु ते तनुवे भुवत्'[10] । काण्डान्तविरामस्सार्धदशमात्रः— 'प्रातर्यग्ने प्रतरां न आयुः'[11] । तन्त्रान्तविरामः सार्धमात्रत्र्यहकालः—'योनिस्समुद्रो बन्धुः'[12] ॥ १५ ॥

इति गार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये
प्रातिशाख्यव्याख्याने द्वाविंशोऽध्यायः



1 शेषतया. 2 ह्यनूद्य भाष्यन्त. 3 सं. १-१-७. 4 सं. १ ३-१४. 5 सं. १-४-८. 6 सं. १-८-१३. 7 ,, १-७-११. 8 ,, १-१-१३. 9 ,, १-३-१४. 10 ,, ५-२-११. 11 ,, ४-७-१५. 12 ,, ७-१-१६.

# अथ त्रयोविंशोऽध्यायः.

## अथ वर्णविशेषोत्पत्तिः ॥ १ ॥

'अथ' इत्ययमधिकारः । वर्णानां 'विशेषोत्पत्तिः' उच्यते। इत्येतदधिकृतं वेदितव्यं, इत उत्तरं यद्वक्ष्यामः । वर्णानां विशेषो वर्णविशेषः, तस्य उत्पत्तिः, सा तथोक्ता ॥ १ ॥

इदानीं वर्णविशेषोत्पत्त्यादीन्यव[1]शिष्टानि कार्याणि वक्ष्यन्ते- अथेत्यधिकारः । वर्णविशेषाणामुत्पत्तिरधिकृता वेदितव्या ॥ १ ॥

---

## अनुप्रदानात्संसर्गात् स्थानात्करणविन्ययात्। जायते वर्णवैशेष्यं परीमाणाच्च पञ्चमादिति ॥ २ ॥

अनुप्रदानादिभिः पञ्चभिः करणैर्वर्णानां 'वैशेष्यं' जायते । अकारस्य तावत् 'अनुप्रदानं' नादः । 'संसर्गः' कण्ठे । 'स्थानं' हनू । 'करणविन्ययः' ओष्ठौ । 'विन्ययः' नाम विन्यासः । 'परिमाणं' मात्राकालः । एवं सर्ववर्णानां बोद्धव्यम् । विशेषस्य भावो वैशेष्यं, वर्णानां वैशेष्यं, 'वर्णवैशेष्यम्'॥२

अनुप्रदानं नादादि । संसर्गो वायुस्थानसंसर्गोऽभिघातात्मकः । स त्रिविधः--अयःपिण्डवद्दारुपिण्डवदूर्णापिण्डवदिति ॥

---

[1] त्यादीन्यान्यत्र.

तदुक्तमापिशलिशिक्षायाम्—"स्पर्शयमवर्णकरो वायुः अयःपिण्डवत्स्थानमापीडयति । अन्तःस्थावर्णकरो वायुः दारुपिण्डवत् । ऊष्मस्वरवर्णकरो वायुरूर्णापिण्डवदिति" । स्थानं हनूमूलादि । करणमोष्ठादि । तस्य विन्ययो विविधस्पर्शनं स्पृष्टादि । एतेभ्यश्चतुर्भ्यो निमित्तेभ्यः वर्णस्य वैशेष्यं असाधारणरूपं जायते । विशेष्यत इति विशेषः, तस्य भावो वैशेष्यम् । तथा परीमाणरूपात् पञ्चमाच्च करणाद्वर्णवैशेष्यं जायते । परीमाणस्य पृथग्वचनं स्वराख्यवर्णमात्रविषयत्वख्यापनार्थम् । तेन व्यञ्जनानां ङकारानुस्वारादीनां कालभेदे वर्णान्यत्वं न भवति । एतेन द्वितीयाध्यायोक्तानामनुप्रदानादीनां द्वाविंशाध्यायोक्तं रूपान्यत्वं प्रति कारणतामुपदिशता तस्य रूपान्यत्वे वर्णान्यत्वमित्येतद्विवृतम् ॥ २ ॥

---

## वर्णपृक्तश्शब्दो वाच उत्पत्तिः ॥ ३ ॥

'पृक्तः' मिश्र इत्यर्थः । वर्णमिश्रः 'शब्दः' 'वाचः' वाक्यस्य, 'उत्पत्तिः' उपादानकारणं भवति । वर्णपृक्त इति किं ? *दुन्दुभ्यादिशब्दानां वाक्यता मा भूदिति* ॥ ३ ॥

एवं वर्णोत्पत्तिरुक्ता । इदानीं वाक्योत्पत्तिमाह—

उच्चरितप्रध्वंसिभिः पूर्ववर्णैः पृक्तस्संयुक्तोऽन्त्यवर्णात्मकः शब्दः पदवाक्यरूपाया वाच उत्पत्तिः । एतदुक्तं भवति—वर्णाः खलु पदवाक्यरूपस्य शब्दस्य कारणम् । तेषां तूच्चरितप्रध्वंसिनां तन्त्यादिवत्सहावस्थानायोगात्, स्मृत्यारूढैः पूर्ववर्णैः सम्पृक्तोऽन्त्यवर्णः पदं वाक्यं भवति ॥ ३ ॥

---

## सप्त वाचस्स्थानानि भवन्ति ॥ ४ ॥

'वाचः सप्त स्थानानि भवन्ति' तानि उत्तरसूत्रे वक्ष्यन्ते । यैर्वाक् प्रयुज्यते यस्मिंश्च तिष्ठति तत् स्थानम् । तानि यथाक्रममुदाहरिष्यामः ॥ ४ ॥

## उपाꣳशुध्वानानिमदोपब्दिमन्मन्द्रमध्यमताराणि ॥ ५ ॥

'उपांशु' इति प्रथमं वाचस्स्थानम् । 'ध्वानः' इति द्वितीयम् । 'निमदः' इति तृतीयम् । एवमितराण्यपि नामतः सप्तैतानि स्थानानि जानीयात् । उपरितनं सूत्रमारभ्य प्रत्येकमेषां स्थानानां लक्षणं वक्ष्यते ॥ ५ ॥

इदानीं यज्ञकर्मादिविषयस्य वेदोच्चारणस्य प्रसिद्ध्यर्थमुपांश्वादीनि शब्दतारतम्यस्थानानि लक्षयति—

उपांशुः, ध्वानः, निमदः, उपब्दिमत्, मन्द्रम्, मध्यमम्, तारमिति सप्तैतानि वाचः प्रयोगस्य[1] तारतम्यस्थानानि भवन्ति ॥ ५ ॥

—o—

## करणवदशब्दममनःप्रयोगमुपाꣳशु ॥ ६ ॥

'करणवत्' प्रयत्नवदित्यर्थः । नास्ति शब्दो ध्वनिरस्मिन् इत्यशब्दम् । मनसा प्रयोगः मनःप्रयोगः नास्ति मनःप्रयोगोऽस्मिन्

[1] वाक्प्रयोगस्य.

इति 'अमनःप्रयोगम्' । वाचस्स्थानमीदृशं 'उपांशु' इत्युपदिश्यते । तत्र करणवदिति तूष्णीम्भावनिवृत्त्यर्थः । अशब्दमिति शब्दस्यात्यन्तालपतार्थः । अमनःप्रयोगमित्युदात्तादीनां साङ्कल्पिक[1]प्रतिषेधार्थः ॥ ६ ॥

एतेषा[2]मुद्देशः कृतः । इदानीं क्रमेण लक्षणान्युच्यन्ते—

करणवत् करण[3]व्यापारसंयुक्तं, अशब्दं शब्दरहितमित्येतावत् उपांशुस्थानलक्षणम् । तत्र अशब्दमिति किं परग्राह्यस्य शब्दस्याभाव उच्यते? उत स्वग्राह्यस्यापि? इति संशयस्य निरासार्थममनःप्रयोगमित्युच्यते । तत्र, "नञिव युक्त" न्यायेन मनःप्रयोगसादृश्यावगमात्स्वयंग्राह्यस्यापि शब्दस्याभाव इहाभिमत इति गम्यते । करणव्यापारसद्भावेऽपि वायुसंसर्गाभावाच्छब्दो नोत्पद्यत इत्यशब्दत्वमुपपद्यते । करणवदित्यनेन मनःप्रयोगो व्यावर्त्यते । अशब्दमिति ध्यानादीनि ॥ ६ ॥



## अक्षरव्यञ्जनानामनुपलब्धिर्ध्यानः ॥ ७ ॥

'अक्षराणि' स्वराः । अक्षराणां व्यञ्जनानां च 'अनुपलब्धिः' 'ध्यानः' नाम द्वितीयं वाचस्स्थानम् । उपांशुलक्षणेऽप्यनुपलब्धौ सत्यां पुनर्वचनं शब्दोपलब्धिविधानार्थम् । अक्षरव्यञ्जनानां भेद[4]ग्रहणमभिव्याप्त्यर्थम्, अत्यन्तानुपलब्धिरित्यर्थः । अन्ये त्वाहुः, अक्षरव्यञ्जनानां विसर्जनीयादीनामनुपलब्धिरिति ॥७॥

---

[1] कल्पिकप्रयोग. [2] एवं तेषा. [3] कारण. [4] भेदेन.

यस्मिन्स्थाने प्रयुञ्जानः शब्दसामान्यमुपलभते अक्षरव्यञ्जनानां विवेकं तु नोपलभते तत् खलु ध्वानसंज्ञं भवति ॥ ७ ॥

---

## उपलब्धिर्निमदः ॥ ८ ॥

अक्षरव्यञ्जनानां 'उपलब्धिः' 'निमदः' नाम तृतीयं वाचः स्थानं भवति ॥ ८ ॥

यत्र स्थाने शब्दं प्रयुञ्जानोऽक्षरस्य व्यञ्जनानां विवेकमुपलभते परेण शब्दसामान्येऽप्यनुपलभ्यमाने, तन्निमदसंज्ञं भवति ॥ ८ ॥

---

## सशब्दमुपब्दिमत् ॥ ९ ॥

अक्षरव्यञ्जनानां 'सशब्दम्' उपलब्धिः 'उपब्दिमत्' नाम चतुर्थं वाचः स्थानं भवति[1] ॥ ९ ॥

सशब्दं परश्राव्य[2]शब्दसहितम् । यत्र प्रयुज्यमानश्शब्दः परैरक्षरव्यञ्जनाविवेकवर्जं श्रूयते,[3] तदुपाब्दिमत्संज्ञं भवति ॥ ९ ॥



---

[1] करणवता शब्देन अक्षरव्यञ्जनानां यत्रोपलब्धिर्भवति, शब्दश्च सूक्ष्म उपलभ्यते तत्स्थानमुपब्दिमदिति चतुर्थं वाचस्स्थानं भवति. ध्वाननिमदयोः अशब्दमुच्यते. इहार्थस्सुकरः. इति पाठान्तरम्.

[2] परभाव्य. [3] उपलभ्यते.

## उरसि मन्द्रम् ॥ १० ॥

## कण्ठे मध्यमम् ॥ ११ ॥

## शिरसि तारम् ॥ १२ ॥

यत्र 'उरसि' स्थाने प्रयोग उपलभ्यते, तत् मन्द्रं नाम पञ्चमं वाचस्स्थानम् । यत्र 'कण्ठे' स्थाने प्रयोग उपलभ्यते, तत् मध्यमं नाम षष्ठं वाचस्स्थानम् । यत्र शिरसि स्थाने, प्रयोग उपलभ्यते, तत् 'तारं' नाम सप्तमं वाचस्स्थानम् । एतेष्वादितश्चतुर्णां यज्ञादिषु प्रयोगः । मन्द्रं प्रातस्सवने प्रयुज्यते । मध्यमं माध्यन्दिने सवने । तारं तृतीयसवने । शिक्षा चैवं वक्ष्यति—

प्रातः पठेन्नित्यमुरस्स्थितेन स्वरेण शार्दूलरुतोपमेन ।
माध्यन्दिने कण्ठगतेन चैव चक्राह्वसंकूजितसन्निभेन ॥

तारं तु विद्यात्सवने तृतीये शिरोगतं तच्च सदा प्रयोज्यम् ।
मयूरहंसान्यभृतस्वनानां तुल्येन नादेन शिरस्स्थितेन॥१०-१२

यत्र स्थाने प्रयुज्यमानश्शब्दः प्रयोक्तुरुरसि तिष्ठन्निव परैरुपलभ्यते अक्षरव्यञ्जनविवेकसंयुक्तं तन्मन्द्रसंज्ञं भवति । एते नोत्तरसूत्रे व्याख्याते ॥ १० ॥

अत्र निमदादिस्थानीयशब्दो ध्यानादिस्थानीयात् प्रकृष्टश्रुतिर्भवति ॥ ११-१२ ॥



## मन्द्रादिषु त्रिषु स्थानेषु सप्तसप्त यमाः ॥

'त्रिषु मन्द्रादिषु स्थानेषु' एकैकस्मिन् 'सप्तसप्त यमाः' भवन्ति । यमाः स्वरा उदात्तादय इति यावत् । सप्तसप्तेति वीप्सया एकैकस्मिन्निति लभ्यते । के ते यमा इत्याशङ्क्योत्तरसूत्रेणोत्तरमाह ॥ १३ ॥

इदानीमुदात्तादिस्वरस्वरूपनिरूपणार्थं सामवेदप्रसिद्धान् सप्तस्वरांस्तावदाह—

मन्द्रमध्यमताराख्येषु त्रिषु वाचस्स्थानेषु प्रत्येकं सप्त स्वरभेदा भवन्ति । तत्र समानस्थानवर्तिनां स्वरभेदानां श्रुतितारतम्यं न विद्यते । अपि तु उत्क्षेपणादिकृतस्स्वरूपभेद एव ॥ १३ ॥



## कुष्टप्रथमद्वितीयतृतीयचतुर्थमन्द्रातिस्वार्याः ॥

कुष्टश्च प्रथमश्च द्वितीयश्च तृतीयश्च चतुर्थश्च मन्द्रश्च अतिस्वार्यश्च ते तथोक्ताः । एते खलु यमा नाम ॥ १४ ॥

तेषां नामान्याह—

कुष्टः, प्रथमः, द्वितीयः, तृतीयः, चतुर्थः, मन्द्रः, अतिस्वार्यः इति तेषां नामधेयानि ॥ १४ ॥



## तेषां दीप्तिजोपलब्धिः ॥ १५ ॥

तेषां खलु सप्तयमानां[1] उत्तरोत्तरदीप्तिजा पूर्वपूर्वोपलब्धिः स्यात् । तत्कथम्? अतिस्वार्यदीप्तिजा मन्द्रोपलब्धिः, मन्द्राच्चतुर्थोपलब्धिः। चतुर्थात् तृतीयः, तृतीयात् द्वितीयः, द्वितीयात् प्रथमः, प्रथमात् क्रुष्ट उपलभ्यते ॥ १६ ॥

तेषां स्वरूपावगतिस्तु कथमिति चेत्तदाह—

तेषां क्रुष्टादीनां स्वरभेदानां स्वरूपोपलब्धिर्दीप्तिजा स्फूर्तिभेदाज्जायते ॥ १६ ॥



## द्वितीयप्रथमक्रुष्टास्त्रय आह्वारकस्वराः ।

द्वितीयश्च प्रथमश्च क्रुष्टश्च ते तथोक्ताः । एते त्रय आह्वारकस्वराः स्युः । एषां तैरेव प्रयोगो वेदितव्यः । आह्वारकाणां स्वराः 'आह्वारकस्वराः' ॥ १६ ॥

## मन्द्रादयो द्वितीयान्ताश्चत्वारस्तैत्तिरीयकाः॥

मन्द्रादयश्चत्वारो द्वितीयान्ताः स्वराः मन्द्रचतुर्थतृतीयद्वितीयाः, तैत्तिरीयकाः स्युः ॥ १७ ॥

ननु यद्यप्येषां दीप्तिभेदात्परस्परभेदोपलब्धिर्जायते, तथाऽपि कीदृशी दीप्तिः कस्योपलब्धिहेतुरित्येतत्तु न ज्ञायते । किं च तदवगमेऽप्यस्मच्छारावर्तिनां स्वराणां किमायातमित्यत आह—

[1] सतस्वानां.

आहारका उत्क्षेपिण इत्यर्थः । द्वितीयप्रथमक्रुष्टा इति पूर्वोक्तक्रमप्रातिलोम्यनिर्देश उत्क्षेपक्रमतदवधिसंप्रत्ययार्थः । तेन तृतीयाख्यो मध्यमस्वरः । स मध्यम उत्क्षेपिताया अवधिर्भवति[1] । ततश्च तृतीयाख्यान्मध्यमस्वरादत्यामादिभिरुत्क्षेपकारणैः किञ्चिदुत्क्षिप्तो द्वितीयाख्यस्वरः । उत्क्षिप्ततरः प्रथमाख्यः । उत्क्षिप्ततमः क्रुष्टाख्यः । एतेन चतुर्थादीनां परेषां त्रयाणां स्वराणामवक्षेपित्वमपि दर्शितं भवति । तत्र[2] मध्यमात्तृतीयाख्यात्स्वरात् अन्ववसर्गादिभिरवक्षेपकारणैः किंचिदवक्षिप्तः चतुर्थाख्यस्वरः । अवक्षिप्ततरः मन्द्राख्यः । अवक्षिप्ततमः अतिस्वार्योऽख्य. । तदेवं सामवेदवर्तिनः क्रुष्टादयस्सप्त स्वराः सम्यङ्निरूपिताः । तेषु मन्द्रादयो द्वितीयान्ताश्चत्वारस्स्वराः प्रतिलोमक्रमेण मन्द्रचतुर्थतृतीयद्वितीयास्तैत्तिरीयका भवन्ति । तित्तिरिणा प्रोक्तं तैत्तिरीयं अस्मच्छाखा तत्र भवास्तैत्तिरीयकाः । 'धन्वयोपधाद्वुञ्'[3] इति वुञ् । यथाक्रममस्मत्स्वाध्यायवर्तिनः अनुदात्तस्वरितप्रचयोदात्ता भवन्तीत्यर्थः ॥ १६-१७ ॥



द्वितीयान्मन्द्रस्तैत्तिरीयाणाम् ॥ १८ ॥

तृतीयचतुर्थावनन्तरम् ॥ १९ ॥

तच्चतुर्यमामित्याचक्षते ॥ २० ॥

[1] स मध्यत उत्क्षेप उत्क्षेपताया अवधिर्भवति । स मध्यमो धृत उत्क्षेपिताया अवक्षेपितायाश्च अवधिर्भवति । इति च पाठान्तरम्.

[2] तथाऽपक्षेपावधिभूतात्.

[3] पा, ४-२-१२१.

तैत्तिरीयाणां द्वितीयात् खलु मन्द्रः जायते । तदनन्तरं तृतीयचतुर्थौ स्याताम् । एतदेव द्वितीयादिस्वरमण्डलं चतुर्यमं इत्याचक्षते । यो द्वितीयः स उदात्तः । यो मन्द्रः सोऽनुदात्तः । यौ तृतीयचतुर्थौ तौ स्वरितप्रचयावित्यर्थः । अनेन सूत्रेण पूर्वोक्तानामेव चतुर्णां स्वराणां क्रमनियमः क्रियते । चतुस्सङ्ख्या तु पूर्वसूत्रेणैवोक्ता । तस्मादत्र चतुर्यममित्येतत् संज्ञाविधानपरमिति प्रतीयते ॥ १८—२० ॥

एवं छन्दोगानां प्रक्रियामाश्रित्य उदात्तादिस्वरस्वरूपं निरूपितम्, इदानीमस्मदीयानां पूर्वाचार्याणां प्रक्रियया निरूप्यते[1]—

तैत्तिरीयाणां प्रक्रियया द्वितीयाख्यस्वर उदात्तः प्रथमं निरूप्यते—'उच्चैरुदात्तः' (१-३८) 'आयामो दारुण्यमणुता खस्येत्युच्चैः कराणि शब्दस्य' (२२-९) इति हि चतुर्णां स्वराणां मुख्यत्वात्स्वरान्तरविनाश[2]कत्वाच्च । यत्राप्यस्य स्वरितादेशः—'तस्मिन्ननुदात्ते पूर्वं उदात्तस्स्वरितम्' (१२-९) इति तत्राप्यसौ न विनश्यति । 'आदिरस्योदात्तसमः' (१-४६) इति वचनात् । तथा नित्यस्वरितमप्यसौ विनाशयति, 'सर्वो नेत्येके' (१४-३३) इति वचनात् । द्वितीयादिति ल्यब्लोपे पञ्चमी । द्वितीयं निरूप्य मन्द्रो निरूप्यते—'नीचैरनुदात्तः' (१-३९) "अन्ववसर्गो मार्दवमुरुता खस्येति नीचैःकराणि" (२२-१०) शब्दस्य इति उत्क्षेपणनिमित्तोदात्तसंज्ञा । तद्विरुद्धावक्षेपणनिमित्ताऽनुदात्तसंज्ञेति विरोधरूपात्सम्बन्धात् ॥ १८ ॥

[1] निरूपयति.    [2] स्वविनाश.

तृतीयाख्यः प्रचयश्चतुर्थाख्यस्स्वरितः । तावुदात्तानुदात्तयोर्निरूपणात्परं निरूप्येते, उभयनिरूप्यत्वात्, उभयकरणरहितः प्रचयः, उभयकरणसमावेशजन्यस्स्वरित इति । तदुक्तम्—"धृत-प्रचय" (१८-३) इति, 'समाहारस्स्वरितः' (१-४०) इति च । आयामादीनामन्ववसर्गादीनां च परस्परविरुद्धतया यौगपद्यासम्भवात् पौर्वापर्येण समाहरणं वेदितव्यम् । अतएवोक्तम्—'आदिरस्योदात्तसमश्शेषोऽनुदात्तसमः' (१-४६) इति ॥ १९ ॥

तदेतदुदात्तादिचतुष्टयं पूर्वाचार्याश्चतुर्यमं चतुस्स्वरमित्याचक्षते । यद्यपि "उच्चैस्तरां वा वषट्कारः"[1] इत्यादिशास्त्रात्प्रथमस्वरः क्वचित्प्रयुज्यते, तथाऽपि तस्योत्क्षेपित्वादुदात्तेऽन्तर्भावः, तथा विक्रमे दृढप्रयत्नतरत्वविधानाद्यव्यतिस्वार्यस्वरः प्रयुज्यते, तथाऽपि तस्यावक्षेपित्वादनुदात्तेऽन्तर्भाव इति, अत्र स्वरचतुष्टयमेव । एतत्तैत्तिरीया आचक्षते ॥ २० ॥



## तस्मिन् ह्रियमाऽन्तरा वृत्तिः ॥ २१ ॥

द्वौ च तौ यमौ च ह्रियमौ ह्रियमयोः अन्तरा वृत्तिः मध्यवृत्तिः तस्मिन्ननुदात्ते भवति, स्वरितत्वं प्रचयत्वं चानुदात्ते भवतीत्यर्थः । यथा—"तन्नः पर्षत्"[2] । "पर्यवदताम्"[3] । केचिदन्यथा कथयन्ति—तस्मिंश्चतुर्यमे स्वरमण्डले ह्रियमान्तरा वृत्तिः, स्वरद्वयस्य मध्ये वर्तमानं स्यात् । तथाहि—

[1] पा १-२-३५. [2] सं. ४-२-६. [3] सं. २-७-२.

अनुदात्तो हृदि ज्ञेयो मूर्ध्न्युदात्त उदाहृतः ।
स्वरितः कर्णमूलीयः सर्वाङ्गे प्रचयस्स्मृतः ॥

अस्यायमर्थः—उदात्तानुदात्तयोर्मध्ये स्वरितप्रचययोरन्तरावृत्तिर्भवति । तथा कोहलीये हस्तविन्याससमयेऽपि स्वरितप्रचययोरन्तरावृत्तिरुपदिश्यते—

उदात्तमाख्याति[1]वृषोऽङ्गुलीनां प्रदेशिनीमूलनिविष्टमूर्धा ।
उपान्तमध्ये स्वरितं धृतं च कनिष्ठिकायामनुदात्तमेव[2] ॥ इति ॥

शिक्षावचनमपि चैवं वक्ष्यते—

कनिष्ठिकाऽनामिका च मध्यमा च प्रदेशिनी ।
नीचस्वारधृतोदात्तानङ्गुष्ठाग्रेण निर्दिशेत् ॥

मुख्यमेव व्याख्यानद्वयमेतत् ॥ २१ ॥

यद्येवं स्वरितोऽपि चतुर्थाख्यस्वरतुल्यतयाऽवक्षेपित्वादनुदात्तेऽन्तर्भवतीति स्वरत्रयमेव स्या[3]दित्याशङ्क्याह—

तस्मिन् चतुर्थेन्न ध्रियमा स्वरितरूपा स्वरवृत्तिरन्तरा अन्यरूपा न[4] चतुर्थाख्यस्वररूपेत्यस्माकं प्रक्रिया । चतुर्थाख्यस्वरस्तावदवक्षेपी । *स्वरितस्तु ध्रियमात्मकः उत्क्षेपावक्षेपाभ्यां* कर्णमूले जायते, 'समाहारस्स्वरितः' (१-४०) इति वचनात्, "स्वरितः कर्णमूलीयः" इति शिक्षावचनाच्च । तेनोदात्तानु-

[1] उदात्त आख्याति. [2] मनुदात्त एव.
[3] किं न स्या. [4] (न)इत्यधिकमस्ति.

दात्तप्रचयविलक्षणत्वात्स्वरितस्य तदन्तर्भावो नास्तीति युक्तं चातुस्स्वर्यम् ॥ २१ ॥



## तामुपदेक्ष्यामः ॥ २२ ॥

यदेतदाचार्यैश्चतुर्यममित्युक्तं तस्य चतुर्भेदभिन्ना वृत्तिर्नाम 'तामुपदेक्ष्यामः' इत्युच्यते । तामिति तच्छब्देन पूर्वोक्तवृत्तिमात्रमनुकृष्यते ॥ २२ ॥

तां स्वरवृत्तिं "क्रमविक्रमसस्पन्नाम्" (२३–२३) इत्यस्मिन् सूत्रे विधास्यामः । प्रयोगार्थं ह्युदात्तादिस्वरस्वरूपनिरूपणम् । अतः प्रयोगविधायकसूत्रे उदात्तादिस्वरवृत्तिर्विधास्यते । न तु वृथा[1] स्वरवृत्तिरिह वर्णिता, छन्दोगप्रक्रियासिद्धा[2] च ॥ २२ ॥



## तच्चतुर्यममित्युक्तम् ॥ २३ ॥

इति अनेन प्रकारेण, 'चतुर्यममित्युक्तम्'। यद्यपि "मन्द्रादयो द्वितीयान्ताः" (२३–१९) इत्यादिसूत्रद्वयेन यमचतुष्टयत्वं[3] सिद्धं तथाऽप्युपसंहारमिषेण मतान्तरनिवृत्त्यर्थमिममर्थं दृढयति। यतः कारणादेवमन्ये मन्यन्ते, स्वरत्रयमात्रम्—

[1] ननु द्विधा. [2] अस्मत्पूर्वाचार्यप्रक्रियासिद्धा इत्यधिकं.
[3] यमचतुष्टयं.

उदात्तश्चानुदात्तश्च स्वरितश्च त्रयः स्वराः ।
ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि ॥ इति ॥

सा किमुभयीह विधास्यते? उतान्यतरा? द्वितीयेऽपि पक्षे सा कतरेत्यत्राह—

"तच्चतुर्यमामित्याचक्षते' (२३-१९) इति यदुक्तं अस्मत्पूर्वाचार्यप्रक्रियासिद्धं स्वरचतुष्टयं, तदेव विधास्यामः । नोभयम् । नापि छन्दोगप्रक्रियासिद्धमेव । यद्येवं किमर्थं 'मन्द्रादिषु त्रिषु स्थानेषु' (२३-१३) इत्यादिना सूत्रचतुष्टयेन छन्दोगप्रक्रियासिद्धं विधान्तरमुपन्यस्तमिति चेत्? तैत्तिरीयप्रक्रियाप्रकटनार्थमेवेति ब्रूमः । यथा—"शाखाग्रे चन्द्रः" इति शाखाग्रनिर्देशश्चन्द्रप्रकटनार्थः ॥ २३ ॥

—:XXoXX:—

## क्रमविक्रमसम्पन्नामद्रुतामविलम्बिताम् । नीचोच्चस्वारसम्पन्नां वदेद्धृतवती॰ समां वदेद्धृतवती॰ समामिति ॥२४ ॥

तैत्तिरीयकाह्वारकमतनिरूपकोऽयं[1] श्लोकः । 'क्रमविक्रमाभ्यां सम्पन्नां' 'क्रमः' नाम द्वित्वं, 'विक्रमः' तु "स्वरितयोर्मध्ये यत्र नीचम्" (१९-१) इत्युक्तलक्षणः । 'अद्रुताम्' अत्वरितां 'अविलम्बितां' अमन्दां, 'नीचोच्चस्वारसम्पन्नां' अनुदात्तोदात्तस्वरितसहितां, 'धृतवतीं' प्रनयवतीं 'समां' उदात्तादिभिर्न्यूनाति-

[1] तैत्तिरीयाणां स्वरक्रमनिरूपकोऽयं.

रेफादिदोषरहितां 'वदेत्' ब्रूयात्, वृत्तिमित्यर्थः । वृत्तिमिति कथं लभ्यते ? "तस्मिन् द्वियमान्तरा वृत्तिः" (२३-२१) इति प्रकृतत्वादिति ब्रूमः ॥ २४ ॥

इति त्रिभाष्यरत्ने प्रातिशाख्यविवरणे त्रयोविंशोऽध्यायः.

क्रमः स्वराणामानुपूर्व्यम् । न तु वर्णद्वित्वं, स्वरवृत्त्युपदेशप्रतिज्ञानात् । तस्यैवं रूपम्—उदात्तात्प्रागूर्ध्वं च प्रचयो नास्ति अनुदात्तात्परं प्रचयो नास्ति स्वरितात्पूर्वं प्रचयो नास्ति, स्वरितद्वयानन्तर्ये पूर्वपदस्थोदात्तात्परस्स्वरितो भवति, स्वरितात्परः प्रचयो भवति, प्रचयात्पूर्वं स्वरितः प्रचयो वा भवति, परं त्वनुदात्तः प्रचयो वा भवतीति[1] ।

एतस्मिन्[2] हि क्रमे ज्ञाते स्वराणां वृत्तिरञ्जसा ।
अनुमातुं शक्यतेऽतः कचिन्नातिविलम्बिता[3] ॥

इति क्रमः । विक्रमः प्रागेवोक्तः (१९-१) । क्रमविक्रमाभ्यां सम्पन्नां समग्रां स्वरवृत्तिं वदेत । अद्रुतां अत्वरितां, अविलम्बितां अमन्दां, नीचोच्चस्वाराः अनुदात्तोदात्तस्वरिताः यथाविधि प्रयुज्यमानैस्तै-

[1] स्वरितद्वयानन्तर्ये पूर्वः कम्पते । प्रचयात्पूर्वं स्वरितः प्रचयो वा भवति । पर तु अनुदात्तः प्रचयो वा भवतीति—"तन्नः पर्षदति" (४-२-५) "पर्यवदताम्" (१-७-२) इत्यादौ उदात्तयोर्मध्ये पूर्वपदस्योदात्तात्परं स्वरितो भवति । स्वरितात्पर प्रचयो भवति । ततोऽनुदात्तो भवतीति ॥

[2] एकस्मिन्. [3] प्रयोक्तु शक्यतेऽस्माभिरद्रुता चाविलम्बिता.

स्वसम्पन्नां, धृतवतीं प्रशस्तप्रचयस्वरां, समां निम्नोन्नतत्वरहितां, एकस्मिन्नेव स्वरे क्वचिन्निम्नता क्वचिदुन्नतता चेति वैषम्यं न कार्यमित्यर्थः । तदेतत्स्वरचतुष्टयं मानसे उपांशौ[1] च प्रयोगे मनसैव प्रयुज्यते, आश्रयाभावात् । ध्वानादिस्थानीये तु शब्दे स्वरूपेण । यत्तु "मन्द्रादिषु त्रिषु स्थानेषु सप्तसप्त यमाः" (२३-११)इत्युक्तं, तत्सामवेदप्रसिद्धचनुसारात् तत्र स्पष्टत्वाच्च । यत्र योऽर्थस्स्पष्टस्तत्र हि तद्व्युत्पादनीयमिति ॥ २४ ॥

इत्याचार्यगार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये
प्रातिशाख्यव्याख्याने त्रयोविंशोऽध्यायः ॥



[1] उपांशु.

# अथ चतुर्विंशोऽध्यायः.

## अथ चतस्रस्संहिताः ॥ १ ॥

अथ इत्ययमधिकारः । चतस्रः संहिता उच्यन्त इत्येतदधिकृतं वेदितव्यं, इत उत्तरं यद्वक्ष्यामः ॥ १ ॥

"अथ सꣳहितायामेकप्राणभावे" (५-१) इत्यादिना संहिताविषयाणि कार्याणि विहितानि । तास्संधितास्तु कियत्य इति न ज्ञायन्ते । यद्यपि "अथ वर्णानाम्" (१३-५) इत्यधिकारात्ततःपरं वर्णसंहितेत्येतावदवगम्यते, तथाऽपि संहिताचातुर्विध्यमभिमतं न सिद्ध्यति । (अतः चतस्रस्संहिताः वेदितव्याः) ॥ १ ॥

---

## पदसꣳहिताऽक्षरसꣳहिता वर्णसꣳहिताऽङ्गसꣳहिता चेति ॥ २ ॥

पदाक्षरवर्णाङ्गाश्रयाः चतस्रः संहिताः क्रमेण बोद्धव्याः । पञ्चमाध्यायमारभ्य आनवमादेकादशद्वादशौ त्रयोदशस्यादौ सूत्रचतुष्टयं च पदसंहिता । दशमोऽक्षरसंहिता । त्रयोदशचतुर्दशौ षोडशश्च वर्णसंहिता । "व्यञ्जनं स्वराङ्गम्" (२१-१) इत्येकविंशोऽङ्गसंहिता । एताश्चतस्रः संहिताः । एतेष्वन्यत्र च विहितं

( ) अयत्नं वाक्यं कुम्भघोणमुद्रितपुस्तके नास्ति.

निषिद्धं च कार्यं सर्वसंहितासु कुर्यात् । यत्रार्षग्रहणादिको विशेषो नास्ति ॥ २ ॥

एवमासामुद्देशः कृतः ॥ २ ॥



## नानापदसंधानसंयोगः पदसंहितेत्यभिधीयते ॥ ३ ॥

नानाभूतयोः पदयोः सन्धाने यः संयोगः सा पदसंहिता इति अभिधीयते उच्यत इत्यर्थः । यथा—"अग्ने दुभ्र गह्य किञ्शिल वन्य या ते"[1] । एकार्थयोः सन्धानसंयोगशब्दयोः प्रयोगः सन्धानाधिक्यार्थः[2] । तथा च वैयाकरणा भणन्ति—"परः सन्निकर्षः संहिता"[3] इति ॥ ३ ॥

अथ क्रमेण लक्षणान्याह—

नानापदयोर्निमित्तभूतयोः निमित्तनिमित्तिनोरुभयरूपयोर्वा सन्धानात् यत्संयुक्तरूपं भवति, सा पदसंहितेत्युच्यते । निमित्तयोर्यथा—'त्रपुश्च मे'[4] । 'मिथुश्चरन्तम्'[5] । निमित्तनिमित्तिनोर्यथा—'गृहाणामसमर्त्यै'[6] । 'स ईं मन्द्रासु प्रयसः'[7] । उभयरूपयोर्यथा—'अथैकमुभे' (१०-१)—'नास्येन्द्रियं वीर्यम्'[8] ॥ ३ ॥

— + — + —

[1] सं. ५-५-९.
[2] सधानसयोगयोः प्रयोगः सबन्धाधिक्यार्थः.
[3] पा. १-४-१०९.
[4] सं. ४-७-५.
[5] स. ४-७-१५.
[6] स. ३-३-८.
[7] ,, ४-१-८.
[8] ,, ३-३-९.

## यथास्वमक्षरसꣳहितादीनामप्येवम् ॥ ४ ॥

स्वं स्वमनतिक्रम्य वर्तत इति 'यथास्वम्' क्रियाविशेषणमेवैतत् । एवमक्षरसꣳहितादीनामपि यथास्वं स्वरूपं निरूपणीयम् । नानाऽक्षरसंयोगोऽक्षरसंहिता । नानावर्णसंयोगो वर्णसंहिता । नानाऽङ्गसंयोगोऽङ्गसंहिता । क्रमेणोदाहरणानि भणामः यथा—"अथाब्रवीत्"[1]। "अविपवणमसि"[2] । 'अक्ष्णया व्याघारयति'[3] । केवलस्वरयोः संयोगोऽक्षरसंहिता । एकपदे स्वरव्यञ्जनसंयोगो वर्णसंहिता । एकपदे केवलव्यञ्जनसंयोगोऽङ्गसंहिता । अन्यत्र पदसंहितेत्यवान्तरभेदो विज्ञेयः ॥ ४ ॥

अक्षरसंहितादीनामपि एवं लक्षणानि द्रष्टव्यानि । तत्र तु यथास्वं स्वेनस्वेन प्रतिसम्बन्धिना सन्धानात् संयुक्तरूपं यज्जायते, तत्तासां रूपम् । तत्र हि व्यवहितश्चाव्यवहितश्च प्रतिसम्बन्धी भवति । यथा—'उदात्तात्परोऽनुदात्तस्स्वरितम्' (१४-२९) इत्यक्षरसंहिता । 'स इधानः'[4] । 'स ते लोकः'[5] । 'ऋकारल्कारस्वपूर्वः' (१३-६) इत्यादिर्वर्णसꣳहिता । 'पितृणाꣳसदनमसि'[6] । 'ऋभूणां भागोऽसि'[7] । अङ्गसंहिता—'विभूरसि प्रवाहणः'[8] इत्यादि । अथ किमर्थं वर्णसंहितायाः अवान्तरभेदाश्रयणम्? तदुच्यते—'उदात्तात्परोऽनुदात्तस्स्वरितम्' (१४-२९) इत्यत्र यदि वर्णसंहिताऽऽश्रीयेत तदा व्यञ्जनेऽपि स्वरितत्वं स्यात् । 'या त इषुः'[9] अत्र पूर्वसूत्रविहितं स्वरितत्वं

---

[1] स. ३-२-११. [2] सं. १-१-६. [3] सं. ६-२-७. [4] ,, ४-४-४. [5] ,, ५-७-२६. [6] ,, १-३-१. [7] ,, ४-३-९. [8] ,, १-३-२. [9] ,, ४-६-१.

तकारस्य स्यात् । 'तत्परस्वरम्' (२१-२) इत्येतत्तु स्वरितादेशविषयादन्यत्र सावकाशतया न ह्यङ्गसंहितास्वरितत्वं[1] बाधेत । तथा—'व्युत्त्रितः'[2] इत्यत्र द्वितीयतकारस्य रेफस्य च पराङ्गतया अनुदात्तयोस्सतोः 'स्वरितात्सꣳहितायाम्' (२१-१०) इति प्रचयः स्यात् । न हि अङ्गसंहितया प्रचयो बाध्येत । यस्तु[3] विधेर्निमित्तमेव नासौ बाध्यत इति न्यायात् । तस्मादियमक्षराणामेव संहितेत्युपगन्तव्यम् । यदा—वर्णसंहिताविषयोऽपि स्वरोऽक्षराणामेवेति सिद्धम्, तदा व्यञ्जनानां स्वतन्त्रत्वाभावादुदात्तत्वादिगुणभाग्भिरक्षरैः सह प्रयोगे तत्स्वरव्यवस्थापनाय अङ्गसंहिताऽप्याश्रयितव्येति युक्तं वर्णसंहितायां त्रैविध्याश्रयणम् । प्रयोजनसद्भावात् । तस्मात्सूक्तं 'अथ चतस्रस्सꣳहिताः' (२४-१) इति ॥ ४ ॥

तदेवं व्याकरणोक्तं प्रकृत्यादिसन्देहप्रध्वंसनं कार्यमिह लक्षितं यत्त्रिविधसमाम्नायमध्यवर्ति भवति । यत्तु सूक्ष्मसन्देहनिरसनं प्रकृतिप्रत्ययविशेषादिकार्यं, तत्सर्वं तत्तत्पथावधारणीयम् । तत्र चायं ग्रन्थः प्रकृष्टोपकारको भवति । एतद्ग्रन्थार्थनिष्णातैर्हि कृत्स्नस्य व्याकरणस्यार्थस्सुगृहीतो भवति । शिक्षागणोपदिष्टं तु कार्यं नात्र संगृहीतम्, व्याकरणप्रधानत्वात्प्रातिशाख्यस्य । तस्मादत्रास्माभिः—

शिक्षागणोपदिष्टं यत्संहिताग्रन्थगोचरम् ।
कार्यजातमिहानुक्तं तत्समुच्चीयतेऽधुना ॥

—o:—

[1] ता तं.  [2] सं. १-८-१०.  [3] यस्य तु.

गुरुत्वं लघुता साम्यं ह्रस्वदीर्घप्लुतानि च ।
लोपागमविकाराश्च प्रकृतिर्विक्रमः क्रमः ॥
स्वरितोदात्तनीचत्वं श्वासो नादोऽङ्गमेव च ।
एतत्सर्वं तु विज्ञेयं छन्दोभाषामधीयता ॥ ५ ॥

यत् गुरुत्वाद्यष्टादशविधं, 'एतत् सर्वं', 'छन्दोभाषां' वेदरूपां वाचं, 'अधीयता' पठता, 'विज्ञेयं' । अथवा 'छन्दोभाषां' वेदलक्षणामित्यर्थः । तुशब्दोऽध्येतृव्यतिरिक्तनिषेधार्थः । अनेन तु सर्वथा विज्ञेयमित्यर्थः । गुरुत्वं यथा—"वषट्कृत्य् स्वाहा"[1]। लघुता यथा—"अकुरुत"[2] । साम्यं यथा—स्थानकरणकालादिभिरनयोरस्ति तौल्यमिति । ह्रस्वदीर्घप्लुतानि च यथा—"गमयति"[3] "वायावेवास्य"[4] । "अस्तु ही३ इति"[5] । लोपो यथा—"ई मन्द्रासु प्रयसः"[6] । आगमो यथा—"त्रपुश्च मे"[7] । विकारो यथा—"समिन्द्रणः"[8] । प्रकृतिर्यथा—"अग्ने दुध्र गह्य किꣳशिल वन्य या ते"[9] । "प्रपा असि"[10] । "मिथुनी अभवन्"[11] । विक्रमो यथा—"वोढवे"[12] । क्रमो नाम द्वित्वं यथा—"यद्वै होता"[13] । स्वरितोदात्तनीचानां भावः 'स्वरितोदात्तनीचत्वं' तद्यथाक्रमं निर्दिश्यते—

[1] सं. ७-३-१२. [2] सं. ६-५-८. [3] सं. १-७-३.
[4] ,, ६-३-७. [5] ,, ७-१-६. [6] ,, ४-१-८.
[7] ,, ४-७-५. [8] ,, १-४-४४. [9] ,, ५-५-९.
[10] ,, २-५-१२. [11] ,, ५-१-६. [12] ,, ३-६-२.
[13] ,, ३-२-९.

"न्यङ्खम्"[1] । "गां वाव तौ"[2] । "अवदताम्"[2] । "विवृते श्वासः" (२–९) इत्युक्तम् । श्वासो यथा—"पूषा ते"[3] । "संवृते कण्ठे नादः क्रियते" (२–४) इत्युक्तो नादः यथा—'भागधे भागधाः'[4] । 'व्यञ्जनङ्स्वराङ्गम्" (२१–१) इत्युक्तमङ्गं यथा—"तं मत्स्यः प्राब्रवीत्"[5] । विज्ञेयमिति नित्यविधिः, विपक्षे बाधात् "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुस्स्वरतोऽपराधात्" इति ॥ ५ ॥

पदक्रमविशेषज्ञो वर्णक्रमविचक्षणः ।
स्वरमात्राविभागज्ञो गच्छेदाचार्यसꣳसदं गच्छेदाचार्यसꣳसदमिति ॥ ६ ॥

पदानां क्रमस्तस्य विशेषः तं जानातीति पदक्रमविशेषज्ञः । वर्णानां क्रमः तस्मिन् विचक्षणः निपुणः । स्वराश्च मात्राश्च स्वरमात्राः तासां विभागः तं जानातीति स्वरमात्राविभागज्ञः । मात्राशब्देन कालविशेषः कश्चिदुच्यते । सोऽपि चतुरणुक इत्यवादिष्म । एवंविधः पुरुषो गच्छेदाचार्यसंसदं स्थानम् । आचार्यास्तु व्यासादयः । तेषां ब्रह्मलोको हि स्थानम् । यश्चेदं शास्त्रं जानीते सोऽप्याचार्यत्वात् तेषां संसदं ब्रह्मलोकं गच्छति ॥

[1] स. ६-६-१. [2] सं. १-७-२. [3] सं. ७-१-२.
[4] „ २-५-६. [5] „ २-६-६.

तथा च पौराणिका भणन्ति—

गरुडपुराणे—

आहुस्समस्तविद्यानां वेदविद्यामनुत्तमाम् ।
अतस्तद्दातुरस्त्येव लाभस्स्वर्गापवर्गयोः ॥

विद्यानां च परा विद्या ब्रह्मविद्या समीरिता ।
अतस्तद्दानतो राजन् सर्वदानफलं लभेत् ॥

देवीपुराणे—

वेद एव द्विजातीनां साधनं श्रेयसः परम् ।
ततोऽस्याध्यापनाभ्यासात् परं ब्रह्माधिगच्छति ॥

तमेव शीलयेत् प्राज्ञः शिष्येभ्यस्तं प्रदापयेत् ।
तदभ्यासप्रदानाभ्यां तत् किं यन्नाधि[1]गच्छति ॥

तथा याज्ञवल्क्यः—

यज्ञानां तपसां चैव शुभानां चैव[2]कर्मणाम् ।
वेद एव द्विजातीनां निश्श्रेयसकरः परः ॥

योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥

काशीकाण्डे—

हित्वा श्रुतेरध्ययनं योऽन्यत्पठितुमिच्छति ।
स दोर्भ्यां धेनुमुत्सृज्य ग्रामक्रोडीं दुधुक्षति ॥

[1] को धिय माधि. [2] शुचीनां चैव.

वेदमेव सदाऽभ्यस्य तपस्तप्येद्द्विजोत्तमः ।
श्रुत्यभ्यासो हि विप्रस्य परमं तप उच्यते ॥

महाभारतेऽपि—

यो ब्रूयाच्चापि शिष्येभ्यः धर्म्यां ब्राह्मीं सरस्वतीम् ।
पृथिवीगोप्रदानाभ्यां स तुल्यफलमश्नुते ॥

विष्णुधर्मोत्तरे—

वेददानादवाप्नोति सर्वयज्ञफलं नरः ।
उपवेदप्रदानेन गन्धर्वैस्सह मोदते ॥

ब्रह्मपुराणे—

न तत्कल्पसहस्रेण गदितुं शक्यते फलम् ।
यद्वेददानादाप्नोति स्वल्पादपि महामते ॥

भविष्यत्पुराणे—

अपुत्रो लभते पुत्रमधनो लभते धनम् ।
सदाऽध्ययनयुक्तस्तु परे ब्रह्मणि लीयते ॥

वेदस्वरूपमुच्यते—

यजुर्वेदः पिङ्गलाक्षः कृशमध्यो बृहद्गलः ।
बृहत्कपोलः कृष्णाद्भिः ताम्रः काश्यपगोत्रकः ।

वेदाङ्गान्युच्यन्ते—

शिक्षा कल्पो व्याकरणं निरुक्तं ज्यौतिषं तथा ।
छन्दसां लक्षणं चेति षडङ्गानि विदुर्बुधाः ॥

अनुपदं चानुपदं *छन्दो भाषासमन्वितम् ।
मीमांसान्यायतर्काश्च उपाङ्गानि विदुर्बुधाः ॥

* "अनूपद चानुपदं" "अनूपनं चानुपद" इति च पाठान्तरं ।

एवं साङ्गोपाङ्गं वेदं गोत्रस्वरूपादीनि विजानन्नधीयानः पूतो भवति।

अन्यान्तरे यथा तद्वदिदं शास्त्रं यदृच्छया ।

असूत्रितेषु स्थानेषु पौरुषेयेषु वर्तते ॥

तथाहि—'प्र नक्षत्राय देवाय'[1] । 'स ईं ममाद महि कर्म कर्तवे महामुरुम्'[2] । 'महि सप्तदशेनावस्युवाताः'[3] । 'अपि सीद मिथुन्यष्टौ च'[4] इत्यादौ न वर्तते । 'सिꣳहे व्याघ्र उत या पृदाकौ'[5] । 'द्वादशाग्निष्टोमस्य स्तोत्राणि'[6] । 'आत्मना परा निष्प शुक्रशोचिषा'[7] । 'अस्मिꣳस्तनुवस्तुहि पिनाकम्'[8] । 'उश्मसी पोषम्'[9] इत्यादौ तु वर्तते । गच्छेदाचार्यसꣳसदं इति पदवीप्सा शास्त्रपरिसमाप्तिं द्योतयति ॥ ६ ॥

त्रिलोचनध्यानविशुद्धकौमुदीविनिद्रचेतःकुमुदः कलानिधिः ।

स सोमयार्यो विततान सम्मतं विपश्चितां भाष्यमिदं सुबोधकम्॥

इति श्रीत्रिभाष्यरत्ने प्रातिशाख्यविवरणे चतुर्विंशोऽध्यायः.

इत्याचार्यगार्ग्यगोपालमिश्रविरचिते वैदिकाभरणाख्ये प्रातिशाख्यव्याख्याने चतुर्विंशोऽध्यायः.

समाप्तश्चायं ग्रन्थः.



[1] ब्रा. ३-१-३. [2] ब्रा. २-५-८. [3] सं. ४-४-१२. [4] सं. ६-५-८.
[5] ,, २-७-७. [6] ,, १-३-२. [7] ,, ६-४-२०. [8] ,, ४-६-१९.
[9] सं. १-३-६.

# अशुद्धसंशोधनम्.

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ३७ | १६ | ह्रस्वो | ह्रस्वो |
| ,, | १७ | ह्रस्वा | ह्रस्वा |
| ५७ | १ | ३५ | ५७ |
| ५९ | ,, | ३४ | ५९ |
| ६१ | ,, | ३७ | ६० |
| ६३ | ,, | ३० | ६१ |
| ,, | १६ | वोक्तम् । | वोक्तेः । |
| ६५ | १२ | शतरुद्रिय | शतरुद्रीये |
| ७९ | २० | विधरा | विधेरा |
| १२९ | ८ | व्रुह | वृह |
| ,, | ९ | पर रूपे | परे रूप |
| ,, | ,, | संवस्तरस्य | संवत्सरस्य |
| १३३ | ६-७ | प्टपती | पृषती |
| १३६ | १८ | रेजमाने[7] | रेजमाने[3] |
| २४१ | २४ | पर तु | परं तु |
| २६० | ८ | आचार्याणम् | आचार्याणाम् |
| ३०० | ११ | गः इष्ये | ग इष्ये |
| ३०४ | १ | ३३४ | ३०४ |
| ३१९ | १६ | राये- | राये, |
| ,, | १६ | शासान्त, | शासान्त- |
| ३२९ | १ | १२ | १७ |
| ३५५ | ८ | वाणा- | वाण- |
| ४१६ | २ | विद्यस्य | विश्वस्य |

## तैत्तिरीयप्रातिशाख्यसूत्रशब्दसूची.

अ

आ

ई



उ

ऊ

## त